# MAHÂVÎRACHARITA

OF

# BHAVABHÛTI

WITH

The Commentary of VÎRARÂGHAVA.

EDITED BY

T. R. RATNAM AIYAR, B. A.,

FORMERLY PROFESSOR OF MATHEMATICS SANSKRIT,

S. P. G. COLLEGE, TRICHINOPOLY,

AND

S. RANGACHARIAR.

PANDIT, SRIRANGAM.

REVISED BY

WÂSUDEV LAXMAṆ SHÂSTRÎ PAṆS'ÎKAR.

Forth Edition.

PUBLISHED

BY

PÂNDURANG JÂWAJÎ,

PROPRIETOR OF THE 'NIRNAYA-SAGAR' PRESS,

BOMBAY.

1926.

*Price 1½ Rupees.*

॥ श्रीः ॥

महाकविश्रीभवभूतिप्रणीतं

# महावीरचरितम् ।

वीरराघवकृतया टीकया समेतम् ।

---

टी. आर्. रत्नम् ऐयर्

एम्, रङ्गाचार्यर्

वासुदेव लक्ष्मणशास्त्री पणशीकर

इत्येतैः संशोधितम् ।

चतुर्थं संस्करणम् ।

---

तच्च

---


शाके १८४७, सनाब्दे १९२६.

मुम्बय्यां

पाण्डुरङ्ग जावजी,

इत्येतैः स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितम् ।

---

मूल्यं सार्धो रूप्यकः ।

॥ श्रीः ॥

# महावीरचरितम् ।

## प्रथमोऽङ्कः ।

अथ स्वस्थाय देवाय नित्याय हतपाप्मने ।
त्यक्तक्रमविभागाय चैतन्यज्योतिषे नमः ॥ १ ॥

---

### भावप्रद्योतिनी ।

वन्दे वात्सल्यभरितं वरदं वीरराघवम् ।
निर्विघ्नं येन निर्वृत्तो वैश्वामित्रो महामखः ॥

अथ तत्रभवान्भवभूतिः 'एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः–' इत्यादिश्रुत्या साधुशब्दप्रयोगं धर्मं मन्वानः, 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यःपरनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥' इत्येतेन काव्यात्मकं प्रचुरश्रेयोहेतुमवगच्छन्, 'यदि क्षुण्णं पूर्वैः–' इत्युक्तरीत्या सर्वगुणाभिरामं राममेव काव्येन चिकथयिषुः,श्राव्यप्रबन्धाद्दृश्यप्रबन्धस्य प्रकर्षं विभाव्य तत्राभ्यर्हितत्वान्नाटकं चिकीर्षुः,उत्तरचरितमुत्तररामचरितेन कथयिष्यन्,पूर्वचरितं महावीरचरिताख्येन नाटकेन निबध्नन्, प्रस्तावनाङ्गस्य पूर्वरङ्गस्य प्रधानाङ्गं नान्दीं रचयति—**अथेत्यादिना**। अथशब्दोऽयं माङ्गलिकः । तदुक्तम्—'ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा: । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥' इति । अयं च मृदङ्गध्वनिवत्स्वरूपत एव मङ्गलमिति शाब्दिकसमयः । स्वस्थाय 'स्वे महिम्नि प्रतिष्ठितः' इति श्रुत्या स्वस्मिन्नेव स्थिताय । अनन्याधारायेत्यर्थः । नित्याय उत्पत्तिविनाशरहिताय । हतपाप्मने जरामरणदुःखादिपापरहिताय, स्वसंबन्धादन्येषामपि तादृशपाप्मसंबन्धविध्वंसकाय च । 'सर्वे पाप्मानोऽतो निवर्तन्ते' इति श्रुतेः । क्रमः पौर्वापर्यम्, विभागोऽवान्तरभेदः, तौ त्यक्तौ येन स तथोक्तस्तस्मै । नित्यत्वान्निरवयवत्वाच्च त्यक्तक्रमविभागत्वं विवक्षितम् । चैतन्यज्योतिषे । ज्योतिर्हि प्रकाशकम् । चैतन्यात्मकाय ज्योतिषे । चैतन्यशब्देन भूततृतीयव्यावृत्तिः। यद्वा चैतन्यं योगागमजन्यं ज्ञानं ज्योतिः प्रकाशकं यस्य तथाविधायेत्यर्थः । अथवा चैतन्यानां ज्ञानानां ज्योतिषे प्रकाशकाय । 'तच्छुभ्रं ज्योतिषां ज्योतिः' इति श्रुतेः । एवंभूताय देवाय दीप्तिशीलाय क्रीडावते विजिगीषवे स्तुत्याय मोदमानाय भगवते नमः । 'दिवु क्रीडा–' इत्यादिना देवशब्दस्योक्तार्थेषु व्युत्पत्तिरनुसंधेया । एभिः पदैः 'एष आत्मापहतपाप्मा दिव्यो देव एको नारायणः'। 'नारायणपरो ज्योतिः–' इत्यादिश्रुत्यर्थोऽनुसंहितः । इदं नमस्क्रियारूपं

(नान्द्यन्ते ।)

**सूत्रधारः**—भगवतः कालप्रियानाथस्य यात्रायामार्यमिश्राः समादिशन्ति—

'महापुरुषसंरम्भो यत्र गम्भीरभीषणः ।
प्रसन्नकर्कशा यत्र विपुलार्था च भारती ॥ २ ॥

किंच ।

अप्राकृतेषु पात्रेषु यत्र वीरः स्थितो रसः ।
भेदैः सूक्ष्मैरभिव्यक्तैः प्रत्याधारं विभज्यते ॥ ३ ॥

---

मङ्गलम् । तदुक्तम्—'आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखम्' इति । इयमष्टपदा नान्दी । तदुक्तम्—'आशीर्वचनसंयुक्ता नित्यं यस्मात्प्रयुज्यते । देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥ पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत ॥' इति । अत्र देवायेत्यनेन 'रामदेवं निनाय' इति वक्ष्यमाणो रामदेवो वर्ण्य इति **सूचितम्** । हतपाप्मन इत्यनेन वालिरावणादिवधोऽत्र वर्ण्य इति **सूचितम्** । अत एव वीररसप्रधानमिति सूचितम् । तदुक्तम्—'वीरश्रृङ्गारयोरेकः प्रधानं यत्र वर्ण्यते । प्रख्यातनायकोपेतं नाटकं तदुदाहृतम् ॥' इति । चैतन्यज्योतिष इत्यनेन नायकस्य प्रख्यातत्वमपि सूचितम् । त्यक्तक्रमविभागायेत्यनेन वयःक्रमवर्णविभागानाकलनेन जामदग्न्याद्यनुवर्तनीयत्वं वर्ण्यस्य सूचितम् । देवायेत्यनेन जानक्या सह क्रीडादिकं सूचितम् । एवमत्रार्थतः शब्दतश्च काव्यार्थसूचनं कृतम् । तदुक्तम्–'अर्थतः शब्दतो वापि मनाक्काव्यार्थसूचनम्' इति ॥ १ ॥ **नान्द्यन्त इति** । नन्दिन इयं नान्दी । तदुक्तम्—'नान्दी नन्दीश्वरप्रिया' इति । तस्या अन्ते अवसाने सूत्रधार आहेत्यर्थः । सूत्रधारो भरताचार्यः । **भगवत इत्यादि** । भगवतः 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥' इत्युक्तैश्वर्यादिपूर्णस्य । कालप्रियानाथस्य कालप्रियानामिकाम्बिकापतेः । 'कालप्रियनाथस्य'इति ह्रस्वान्तप्रियशब्दयुक्तः पाठः प्रचुरो दृश्यते । तत्राप्यर्थः पूर्ववत् । क्षेत्रविशेषस्येश्वरमूर्तिविशेषसंज्ञाभूते कालप्रियानाथशब्दे 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति वैकल्पिकह्रस्वप्रवृत्तेः । यात्रायां उत्सवे । आर्यमिश्राः समादिशन्ति समाज्ञापयन्ति । तत्प्रकारमाह—**महापुरुषेत्यादिना** । यत्र संदर्भे यस्मिन्ग्रन्थे गम्भीरोऽक्षोभ्यो भीषणो भयावहः । विशेषणद्वयसमासः । महापुरुषस्य धीरोदात्तनायकस्य संरम्भः स्थेयान्प्रयत्नः । प्रतिपाद्य इति शेषः । किंच यत्र संदर्भे प्रसन्ना 'श्लेषः प्रसादः समता'इत्यत्रोक्तप्रसादाख्यगुणवती । तदुक्तम्—'प्रसिद्धार्थपदत्वं यत्स प्रसादो निगद्यते' इति । कर्कशा च विपुलार्था वाच्यव्यङ्ग्यभेदप्रभिन्नप्रमेयबहुला भारती भवतीति शेषः । यद्वा प्रसन्नकर्कशा ईषन्मृद्वर्थसंदर्भा विपुलार्था व्यङ्ग्यबहुला भारतीति भारत्याख्यवृत्तिर्भवतीत्यर्थः।तदुक्तम्—'ईषन्मृद्वर्थसंदर्भा भारती वृत्तिरिष्यते' इति ॥२॥ किंच यत्र संदर्भेऽप्राकृतेषु प्राकृतभाषारहितेषु पात्रेषु रामजामदग्न्यादिभूमिकाविशेषेषु स्थितः प्रयोज्यतया वर्तमानो

स संदर्भोऽभिनेतव्यः' इति । (सहर्षम् ।) महावीरचरितं प्रयोक्तव्यमित्यादिष्टमर्थतोऽत्रभवद्भिः ।

वश्यवाचः कवेर्वाक्यं सा च रामाश्रया कथा ।
लब्धश्च वाक्यनिष्यन्दनिष्पेषनिकषो जनः ॥ ४ ॥

सोऽहमेतद्विज्ञापयामि—अस्ति दक्षिणापथे पद्मपुरं नाम नगरम् । तत्र केचित्तैत्तिरीयाः काश्यपाश्चरणगुरवः पङ्क्तिपावनाः पञ्चाग्नयो धृतव्रताः सोमपीथिन उदुम्बरनामानो ब्रह्मवादिनः प्रतिवसन्ति । तदामुष्यायणस्य

---

रसः सामाजिकैर्निरतिशयानन्दरूपत्वेन स्वाद्यमानो वीरः स्थायीभूतः शत्रुकृतापराधप्रयुक्तमनःप्रज्वलनात्मकः क्रोधः सूक्ष्मैर्वसिष्ठविश्वामित्रादिरूपालम्बनविशेषेषु गूढैरभिव्यक्तै रामजामदग्न्याद्यालम्बनेषु प्रकटैर्भेदैरवस्थाविशेषैः प्रत्याधारं पूर्वोक्तेष्वालम्बनेषु सर्वेषु विभज्यते विभागवान्क्रियते । परस्परवैलक्षण्यवान्क्रियत इति यावत् ॥ ३ ॥ स संदर्भोऽभिनेतव्य इति समादिशन्तीति पूर्वेण संबन्धः । अत्र महापुरुषेत्यनेन प्रकरणादिव्यावृत्तिः । वीरो रस इत्यनेन शृङ्गाररसव्यावृत्तिः । प्रसन्नेत्यनेन शृङ्गारादेः, भीषण इत्यनेन भयानकस्य चानुप्रवेशः सूचितः । महापुरुष इत्यनेन नायकस्य इतिवृत्तस्य च प्रख्यातत्वं सूचितम् । एवम्—'वीरशृङ्गारयोरेकः प्रधानं यत्र वर्ण्यते । प्रख्यातनायकोपेतं नाटकं तदुदाहृतम् ॥' इति श्लोकार्थः प्रतिबिम्बितः । तत्र विशेषजिज्ञासायां निर्दिष्टगुणसाम्यात्प्रायेण शब्दसाम्याच्च महावीरचरितमेव तादृशः संदर्भ इति पर्यवसितम् । तदाह—**महावीरचरितमित्यादिना** । अत्रभवद्भिरार्यमिश्रैरर्थतोऽनुमानादादिष्टमाज्ञप्तम् । **वश्येत्यादि** । वश्यवाचः स्वाधीनवाक्प्रवृत्तेः कवेः क्रान्तदर्शिनो वाक्यं तिङ्सुबन्तचयरूपः शब्दराशिः अभिनेतव्यमिति शेषः । किंच सा वश्यवाक्कविवाक्यरूपा कथेतिवृत्तप्रतिपादकशब्दपरिपाटी रामाश्रया सकलगुणाभिरामरामविषयिका । भवतीति शेषः । किंच वाक्यनिष्यन्दस्य वाक्यप्रयोज्यशृङ्गारादिरसस्य निष्पेष उत्कर्षावगमार्थविमर्दनविषये निकषः शाणभूतो जनः सामाजिकवर्गो लब्धः प्राप्तः । अस्माभिरिति [शेषः] ॥ ४ ॥ **सोऽहमित्यादि** । सोऽहं सामाजिकेनादिष्टोऽहम् । एतद्वक्ष्यमाणकविकाव्यादिविशेषम् । **अस्तीत्यादि** । दक्षिणापथे दक्षिणस्या दिशः पथि । 'ऋक्पूरब्धूःपथामानक्षे' इति समासान्तोऽप्रत्ययः । शरावत्या दक्षिणे देश इत्यर्थः । तैत्तिरीयास्तित्तिरिणा प्रोक्तमधीयानाः । काश्यपाः काश्यपापत्यभूताः । चरणानां शाखाध्येतॄणां गुरवो महोपाध्यायाः । पङ्क्तिं पावयन्तीति पङ्क्तिपावनाः भवन्तीति शेषः । 'अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च । श्रोत्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः ॥' इति मनुः । पञ्चाग्नयो गार्हपत्य आहवनीयो दक्षिणाग्निः सभ्य आवसथ्यश्चेति पञ्चाग्नयो येषां ते तथोक्ताः । धृतं व्रतं 'तस्य व्रतं–' इत्यादिश्रुत्युक्तनियतानुष्ठेयधर्मरूपं यैस्ते यथोक्ताः । सोमपीथिनः सोमपानवन्तः । उदुम्बरनामानः । अभिजननामेदम् । ब्रह्मवादिनो वेदान्तवेद्यपरब्रह्मप्रवचनशीलाः प्रतिवसन्तीत्यर्थः । **तदामुष्यायणेत्यादि** । अमुष्य पुत्र

तत्रभवतो वाजपेययाजिनो महाकवेः पञ्चमः सुगृहीतनाम्नो भट्टगोपालस्य पौत्रः पवित्रकीर्तेर्नीलकण्ठस्यात्मसंभवः श्रीकण्ठपदलाञ्छनः पदवाक्यप्रमाणज्ञो भवभूतिर्नाम जतुकर्णीपुत्रः कविर्मित्रधेयमस्माकमिति भवन्तो विदांकुर्वन्तु ।

श्रेष्ठः परमहंसानां महर्षीणां यथाङ्गिराः ।
यथार्थनामा भगवान्यस्य ज्ञाननिधिर्गुरुः ॥ ५ ॥

तेनेदमद्भुतजगत्त्रयमन्यमूल-
मस्तोकवीरगुरुसाहसमद्भुतं च ।
वीराद्भुतप्रियतया रघुनन्दनस्य
धर्मद्रुहो दमयितुश्चरितं निबद्धम् ॥ ६ ॥

तदिदं भवन्तः परिपुनन्तु । उक्तं च तेन श्रोत्रियपुत्रेण—

---

आमुष्यायणः । नडादित्वात्फक्प्रत्ययः । 'आमुष्यायणामुष्यपुत्र–' इत्यदिना षष्ठ्या अलुगभावः । तेषामामुष्यायणस्तदामुष्यायणः । तदीयस्य कस्यचित्पुत्र इत्यर्थः । देवदत्तस्य गुरुकुलमित्यत्रेवान्वयः । तथाविधस्य तत्रभवतः पूज्यस्य वाजपेययाजिनो वाजपेयेनेष्टवतो महाकवेः पञ्चमः पौत्रः पौत्रस्य पौत्रः । सुगृहीतनाम्नः कीर्तनीयनामधेयस्य । 'स सुगृहीतनामा स्याद्यः प्रातः सुखदः स्मृतः' इति । भट्टगोपालस्य पौत्रः । पवित्रकीर्तेः पावनयशसो नीलकण्ठस्यात्मसंभवः पुत्रः श्रीकण्ठपदं लाञ्छनं नाम यस्य सः। 'लाञ्छनं नामलक्ष्मणोः' इति रत्नमाला । पितृकृतनामेदम् । पदवाक्यप्रमाणज्ञो व्याकरणतर्कमीमांसाभिज्ञो भवभूतिर्नाम 'साम्बा पुनातु भवभूतिपवित्रमूर्तिः' इति श्लोकरचनासंतुष्टेन राज्ञा भवभूतिरिति ख्यापितः । जतुकर्णीपुत्रो जतुकर्णीति मातुर्नाम तस्याः पुत्रः । अस्माकं मित्रधेयम् । मित्रमित्यर्थः । 'भागरूपनामभ्यो धेयः' इति प्रकरणे 'मित्राच्च' इति मित्रशब्दात्स्वार्थे धेयप्रत्ययः । इति विदांकुर्वन्तु । जानन्त्वित्यर्थः । **श्रेष्ठ इत्यादि** । महर्षीणां महतां सत्यवचसां अङ्गिरा यथाङ्गिरा इव । परमहंसानामुत्तमाश्रमिणां श्रेष्ठो यथार्थनामार्थानतिक्रान्तनामको ज्ञाननिधिर्यस्य गुरुः । भवतीति शेषः ॥ ५ ॥ **तेनेत्यादि** । तेन पूर्वोक्तेन भवभूतिना । धर्मद्रुहः। द्वितीयान्तमिदम् । धर्मद्रोहिणां रावणादीनां दमयितुः । तृन्नन्तमिदम् । शासितू रघुनन्दनस्य रामस्य । वीरश्चासावद्भुतश्चासौ प्रियश्चेति विशेषणसमासः । तस्य भावो वीराद्भुतप्रियता तयोद्भृतं जगत्त्रयस्य मन्युमूलं दैन्यमूलं कोपमूलं वा येन तथोक्तम् । 'मन्युर्दैन्ये क्रतौ क्रुधि' इति विश्वः । अस्तोको विपुलो वीरो वीररसो यस्मिंस्तथोक्तम् । गुर्वधिकं साहसं भयंकरं कर्म यस्मिंस्तथोक्तम् । किंच । अद्भुतमाश्चर्यकरं रघुनन्दनस्य चरितं जामदग्न्यजयप्रभृति रावणवधपर्यन्तं चरितं निबद्धम् । प्रबन्धेन प्रतिपादितमित्यर्थः॥ ६ ॥ **परिपुनन्त्विति** । परिपुनन्तु परिशुद्धं कुर्वन्तु । श्रोत्रि-

प्राचेतसो मुनिवृषा प्रथमः कवीनां
यत्पावनं रघुपतेः प्रणिनाय वृत्तम् ।
भक्तस्य तत्र समरन्त ममापि वाच-
स्तासु प्रसन्नमनसः कृतिनो भजन्ताम् ॥ ७ ॥

(प्रविश्य ।)

**नटः**—कृतप्रसादाः पारिषदाः । किंत्वपूर्वत्वात्प्रबन्धस्य कथाप्रदेशं समारम्भे श्रोतुमिच्छन्ति ।

**सूत्रधारः**—स तु भगवान्दीक्षिष्यमाणः कौशिको विश्वामित्र ऐक्ष्वाकस्य वसिष्ठपुरोधसो दशरथस्य गृहानुपेत्य स्वयमेव तपोवनं प्रत्यागतः । स च

विजयसहजमस्त्रैर्वीर्यमुच्छ्राययिष्य-
ञ्जगदुपकृतिबीजं मैथिलीं प्रापयिष्यन् ।
दशमुखकुलघातश्लाघ्यकल्याणपात्रं
धनुरनुजसहायं रामदेवं निनाय ॥ ८ ॥

---

यस्य समग्रवेदाध्यायिनः पुत्रेण तेन भवभूतिनोक्तं च—**प्राचेतस इत्यादि**। प्रचेतसो वरुणस्यापत्यं मुनिवृषा मुनीन्द्रः । 'कनिन्युवृषि–'इत्यादिना वृषशब्दो नकारान्तो व्युत्पादितः । कवीनां प्रथमः क्रान्तदर्शिनामाद्यो वाल्मीकिः । पावनं पवित्रं रघुपते रामस्य यद्वृत्तं चरित्रं प्रणिनाय प्रबन्धेन प्रतिपादयामास । तत्र रामचरिते भक्तस्य भक्तिमतो ममाप्यतदर्हस्यापि मम वाचः समरन्त संगताः । 'समो गम्यृच्छिभ्यां–' इति प्रकरणे 'अर्तिश्रुदृशिभ्यश्च' इति वार्तिकेनात्मनेपदम् । 'सर्तिशास्त्यर्तिभ्यश्च' इत्यङ् । आगमशासनस्यानित्यत्वादाडागमाभावः । 'बहुलं छन्दसि' इति बहुलग्रहणादच्छन्दस्यप्याड्विरहो वा । तासु भक्तिप्रेरितासु मद्वाक्षु प्रसन्नमनसः सन्तः सानुग्रहहृदयाः सन्तः कृतिनः पण्डिता भजन्तां प्रीतिमन्तो भवन्तु । 'प्रीतिपूर्वमनुध्यानं भक्तिरित्यभिधीयते' इत्युक्तेः ॥ ७ ॥ कृतप्रसादाः कृतानुग्रहाः पारिषदाः । सतां सन्मन्त्राणां समाजः परिषत्तत्रभवाः पारिषदाः । योगविभागात्परिषच्छब्दाण्णप्रत्ययः। अपूर्वत्वान्नूतनत्वात् । कथाया इतिवृत्तस्य प्रदेशमंशम् । समारम्भे प्रबन्धप्रारम्भे ॥ दीक्षिष्यमाणः श्वोभूते यागदीक्षां प्रवेष्टा । ऐक्ष्वाकस्येक्ष्वाकोरपत्यस्य । 'दाण्डिनायन–' इत्यादिना टिलोपः वसिष्ठः पुरोधाः पुरोहितो यस्य स तस्य । स च विश्वामित्रश्च । **विजयेत्यादि**। विजयस्य शत्रुविजयस्य सहजं ज्येष्ठभ्रातृभूतं वीर्यमस्त्रैर्जृम्भकाद्यस्त्रैरुच्छ्राययिष्यन्नुत्तुङ्गं करिष्यन्, जगदुपकृतेर्भगवदवतारप्रयोजनभूतकण्टकोद्धारणादिलोकोपकारस्य बीजं कारणभूताम् । उक्तं च पराशरेण—'निस्त्रानपायिनी विष्णोर्जगतामुपकारिणी' इति । मैथिलीं सीताम् । रामदेवमित्यस्यापकर्षः ।

निमन्त्रितस्तेन विदेहनाथः
स प्राहिणोद्भ्रातरमात्तदीक्षः ।
कुशध्वजो नाम स एष राजा
सीतोर्मिलाभ्यां सहितोऽभ्युपैति ॥ ९ ॥

(इति निष्क्रान्तौ ।)

प्रस्तावना ।

---

(ततः प्रविशति रथस्थो राजा सूतः कन्ये च ।)

**राजा**—आयुष्मत्यौ सीतोर्मिले, अद्य भगवान्विश्वामित्रः कौशिकः श्रद्दधानेन चेतसा वत्साभ्यां प्रणन्तव्यः ।

**कन्ये**—[1]जह कणिट्ठतादो आणवेदि ।

---

१. यथा कनिष्ठतात आज्ञापयति ।

---

रामदेवं प्रापयिष्यन् । दशमुखकुलघातेन रावणवंशनाशनेन श्लाघ्यस्य कल्याणस्य मङ्गलस्य पात्रं भाजनम् । धनुश्चानुजश्च धनुरनुजौ तौ सहायौ यस्य तथोक्तस्तं रामदेवं निनाय प्रापितवान् । स्वतपोवनमिति शेषः । अत्र कालप्रियानाथस्येत्यनेन देशः, यात्रायामित्यनेन कालश्च निर्दिष्टः। महापुरुषसंरम्भ इत्यादिना प्रयोज्यनिवेदनं कृतम्। अस्ति खल्वित्यादिना कवेः, तेनेदमित्यादिना काव्यस्य च प्रशंसा कृता । तदुक्तम्—'निवेदनं प्रयोज्यस्य निर्देशो देशकालयोः। कविकाव्यनटादीनां प्रशंसा च प्ररोचना॥' इति ॥ ८ ॥ **निमन्त्रित इत्यादि** । स प्रसिद्धः । मैथिलीमिति पूर्वश्लोके मैथिलशब्देन प्रस्तुतो वा । आत्तदीक्षः स्वीकृतयागदीक्षो विदेहनाथो जनकस्तेन विश्वामित्रेण निमन्त्रितः सन्नावश्यकयागकर्मणाहूतः सन्भ्रातरमनुजभ्रातरं प्राहिणोत्प्रेषयामास । 'दीक्षितो न ददाति न जुहोति–' इत्यादिशास्त्रेण दीक्षितस्यागमनादिप्रतिषेधादिति भावः । स जनकभ्राता कुशध्वजो नाम कुशध्वज इति प्रसिद्ध एष राजा पुरोवर्ती राजा सीतोर्मिलाभ्यां सहितोऽभ्युपैति प्राप्नोति । रङ्गस्थलमिति शेषः । अत्र प्रयोगातिशयो नाम प्रस्तावनाङ्गमुक्तम् । तदुक्तम्–'एषोऽयमित्युपक्षेपात्प्रयोगातिशयो मतः' [इति] ॥ ९ ॥ इति निष्क्रान्तौ । नटः सूत्रधारश्च रङ्गस्थलमिति शेषः । **प्रस्तावनेति** । तल्लक्षणं तु—'सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम् । स्वकार्यप्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् ॥ प्रस्तावना वा तत्र स्यात्' इति ॥ अथाङ्कः प्रस्तूयते । अङ्कलक्षणं तु—'प्रत्यक्षनेतृचरितो बिन्दुव्यक्तिपुरस्कृतः । अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ॥' इति । **ततः प्रविशतीत्यादि** । ततः सूत्रधारादिनिष्क्रमणानन्तरम् । कन्ये चेति प्रविशत इति शेषः । आयुष्मत्यौ आशासनीयातिशयितायुष्के । सीतोर्मिले संबोधनद्विवचनम् । श्रद्दधानेन फलावश्यंभावनिश्चयरूपश्रद्धायुक्तेन प्रणन्तव्यो वन्दनीयः॥ **जह इत्यादि** । कनिष्ठतातः पितुरनुजः । तथा-

राजा—

तुरीयो ह्येष मेध्याग्निराम्नायः पञ्चमोऽपि वा।
अथवा जङ्गमं तीर्थं धर्मो वा मूर्तिसंचरः॥ १०॥

सूतः—सांकाश्यनाथ, एवमेतत्। न खलु विश्वामित्राद्दषेर्महत्त्वेन कश्चिदपरः प्रकृष्यते। यस्य भगवतस्त्रैशङ्कवं शौनःशेपं रम्भास्तम्भनं चेत्यपरिमेयमाश्चर्यजातमाख्यानविद आचक्षते।

---

स्त्विति शेषः। अत्र श्रद्दधानेनेत्यनेन विश्वामित्रकर्तृकसीतारामपरिणयादिप्रयत्नरूपबीजन्यासादुपक्षेपो नाम मुखसंध्यङ्गमुक्तम्। 'बीजन्यास उपक्षेपः' इति॥ **तुरीय इति**। एष विश्वामित्रस्तुरीयो मेध्याग्निश्चतुर्थोऽयं परिशुद्धाग्निः। त्रयोऽग्नयः प्रसिद्धाः, तेभ्योऽप्ययमतिशयितोऽग्निः। अखिलाभ्युदयहेतुत्वानभिभवनीयत्वतेजिष्ठत्वादिना निरूपणम्। इदं च त्रेताग्निमदभिप्रायेण। हिशब्दः प्रसिद्धौ। अपि वा। किंचेत्यर्थः। एष विश्वामित्रः पञ्चम आम्नायः। ऋगादयश्चत्वारो वेदाः प्रसिद्धाः, तेभ्योऽप्यतिशयितोऽयमाम्नायः। भ्रमप्रमादादिदोषराहित्येन नित्यं हितानुशासनाद्वेदत्वरूपणम्। इदं च भारतानाकलनेनेति मन्तव्यम्। अथवेति। एष विश्वामित्रो जङ्गमं तीर्थं संचरिष्णु पुण्यसलिलं पुण्यक्षेत्रं वा। 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु। अवतारर्षिजुष्टाम्भस्त्रीरजःसु च विश्रुतम्॥' इत्यभिधानात्। यात्रादिनैरपेक्ष्येण स्वयमागत्याभ्युदयप्रदानाज्जङ्गमत्वनिरूपणं कृतम्। वेति। अथवेत्यर्थः। एष मूर्त्या संचरो मूर्तिसंचरः। संपूर्वाच्चरतेः पचाद्यच्। 'कर्तृकरणे कृता बहुलम्' इति तृतीयासमासः। धर्मः फलाव्यवहितसाधनभूतो भावार्थनिष्पाद्यो लिङादिवाच्योऽपूर्वात्मको धर्मः। प्रसिद्धस्य हि धर्मस्य परोक्षत्वादनध्यवसायावस्कन्दितत्वान्मूर्तिमद्धर्मत्वरूपणं कृतम्। अत्र पूर्वार्धेऽनुभयरूपकद्वयम्। उत्तरार्धे त्वधिकरूपकद्वयमिति विवेकः। धर्मो हि निर्दोषप्रमाणेन बोधितोऽनुपादेयोपकारकेण देशादिनोपादेयोपकारकेणाग्निना चोपस्कृतः स्वयं साक्षादभ्युदयं साधयतीति सपरिकरधर्मसादृश्यं विश्वामित्रस्यास्तीति चत्वारि रूपकाण्युक्तानीति द्रष्टव्यम्॥१०॥ संकाशेन निर्वृत्तं सांकाश्यम्। 'संकाशादिभ्यो ण्यः' इति ण्यप्रत्ययः। तस्य नाथेति कुशध्वजं प्रति संबुद्धिः। **न खल्वित्यादि**। कश्चिदपरो महत्त्वेन पूज्यत्वेन विश्वामित्राद्दषेर्न प्रकृष्यते खलु विश्वामित्रादधिको न भवति किल। यस्येत्यादि। यस्य विश्वामित्रस्य त्रिशङ्कोरिदं त्रैशङ्कवं वसिष्ठशापाच्चण्डलतां प्राप्तस्य त्रिशङ्कोः सशरीरस्वर्गारोपणम्। शुनः शेप इव शेपो यस्य स शुनःशेपः। 'शेपपुच्छलाङ्गूलेषु शुनः' इति षष्ठ्या अलुक्। शुनःशेपस्येदं शौनःशेपम्। पूर्वत्रात्र च 'तस्येदम्' इत्यण्। मातापितृभ्यामुपेक्षितस्य शुनःशेपस्य शरणागतस्य मन्त्रविशेषोपदेशेन प्राणपरित्राणम्। रम्भायास्तपोभङ्गार्थमागतायाः स्तम्भनं वैरूप्यापादनेन प्रतिघातश्चेत्यपरिमेयमपरिच्छेद्यमाश्चर्यजातं विस्मयनीयचरितसमूहमाख्यानविदः पुरावृत्तप्रतिपादकग्रन्थज्ञा आचक्षते वदन्ति। उत्तरयच्छब्दस्य तच्छब्दनिरपेक्षत्वात्पू-

तदस्मिन्ब्रह्माद्यैस्त्रिदशगुरुभिर्नाथितशमे
तपस्तेजोधाम्नि स्वयमुपनतब्रह्मणि गुरौ ।
निवासे विद्यानामुपहितकुटुम्बव्यवहृति-
र्भवानेव श्लाघ्यो जगति गृहमेधी गृहवताम् ॥ ११ ॥

**राजा**—साधु । सूत, साधु । सूनृतं भाषसे । प्रकृष्टकल्याणोदर्कसंगमा ह्येते भवन्ति भगवन्तः सत्यसंधाः साक्षात्कृतब्रह्माणो महर्षयः ।

तमांसि ध्वंसन्ते परिणमति भूयानुपशमः
सकृत्संवादेऽपि प्रथत इह चामुत्र च शुभम् ।
अथ प्रत्यासङ्गः कमपि महिमानं वितरति
प्रसन्नानां वाचः फलमपरिमेयं प्रसुवते ॥ १२ ॥

---

र्वेवाक्येनास्यैकवाक्यत्वम् । **तदस्मिन्नित्यादि** । तत्तस्माद्ब्रह्माद्यैश्चतुर्मुखप्रभृतिभिस्त्रिदशगुरुभिर्देवश्रेष्ठैर्नाथितो याचितः शमः कोपनिवृत्तिर्यस्य स तथोक्तस्तस्मिन् । 'नाथृ-नाधृयाच्ञोपताप–' इत्यादिना धातुपाठान्नाथतिर्याच्ञार्थकः । 'अन्यमिन्द्रं करिष्यामि लोको वा स्यादनिन्द्रकः' इति जगत्क्षोभप्रवृत्तस्य विश्वामित्रस्य प्रसादं ब्रह्मादयोऽर्थितवन्त इति पौराणिकी कथात्रानुसंधेया । तपसः कायशोषणात्मकनियमस्य तेजसः पराभिभवनसामर्थ्यस्य च धाम्नि स्थानभूते स्वयं स्वीयतपोमूलकवसिष्ठवाक्येनोपनतं प्राप्तं ब्रह्म ब्राह्मण्यं यस्य स तथोक्तः । अस्मिन्गुरौ मन्त्रद्रष्टरि विद्यानां वेदादीनां चतुर्दशानां विद्यानां निवासे निलयभूतेऽस्मिन्विश्वामित्र उपहिता निहिता कुटुम्बव्यवहृतिः कन्यादानादिगृहकृत्यव्यापारो यस्य स तथोक्तः । भवानेव जगति गृहवतां गृहिणां मध्ये श्लाघ्यो गृहमेधी । प्रशंसनीयो गृहस्थाश्रमनिष्ठ इत्यर्थः । गृहैर्दारैर्मेधते संगच्छत इति गृहमेधी । 'मेधृ संगमे' इत्यस्मात् 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः । 'गृहं गृहाश्च भूम्नि स्याद्वाविमौ गेहभार्ययोः' इति रत्नमाला । एष ऋषिप्रयत्नरूपबीजस्य बहूकरणात्परिकरो नाम संध्यङ्गमुक्तम् । यदुक्तम्—'बीजस्य बहूकरणं परिकरः' इति ॥११॥ सूनृतं सत्यं प्रियं च भाषसे वदसि । प्रकृष्टमतिशयितं कल्याणं मङ्गलमुदर्को भाविफलं येन स तथोक्तः । तथाविधः संगमः संबन्धो येषां ते तथोक्ताः । 'एष्यतोः कालफलयोरुदर्कः स्यात्' इति रत्नमाला । साक्षात्कृतं विशदतमज्ञानविषयीकृतं ब्रह्म परमात्मा यैस्ते तथोक्ताः । महान्तश्च ते ऋषयश्चेति विग्रहे कर्मधारयः । 'ऋषयः सत्यवचसः' इति । अत्र साधु सूतेत्यादिना ऋषिप्रयत्नरूपबीजाङ्गीकरणरूपसमाधानं नाम संध्यङ्गमुक्तम् । तदुक्तम्—'बीजाङ्गीकरणं समाधानम्' इति । **तमांसीति** । एतेषां महर्षीणां सकृत्संवादेऽपि कदाचिदप्युक्तिप्रत्युक्तिकायामपि जनस्य तमांस्यज्ञानहेतुभूतास्तमोगुणा ध्वंसन्ते नश्यन्ति । किंच भूयान्प्रचुर उपशमोऽन्तरिन्द्रियनिवृत्तिः परिणमति प्रवृद्धो भवति । किंचेह चामुत्र चास्मिँल्लोके परस्मिँल्लोके च शुभमभीहितेष्टार्थसिद्धिः प्रथते प्रवृद्धं भवति । अथेति वाक्यान्तरारम्भे । एतेषां प्रत्यासङ्ग

**सूतः**—दृश्यते हरितपरिसरारण्यरमणीयं कौशिकीपरिक्षिप्तमायतनमृषेस्तस्य सिद्धाश्रमपदं नाम । किं बहुना । स एवायमात्मनातृतीयः कुशिकनन्दनो नूनं भवन्तमेवाभ्युपैति ।

**राजा**—यद्येवमवतरामो रथात् । (कन्याभ्यां सहावतीर्य ।) सूत, न केनचिदाश्रमाभ्यर्णभूमयोऽतिक्रमयितव्या इति ।

**सूतः**—यदाज्ञापयति । (इति निष्क्रान्तः ।)

(ततः प्रविशति विश्वामित्रो रामलक्ष्मणौ च ।)

**विश्वामित्रः**—(स्वगतम् ।)

रक्षोघ्नानि च मङ्गलानि सुदिने कल्प्यानि दारक्रिया
वैदेह्याश्च रघूद्वहस्य च कुले दीक्षाप्रवेशश्च नः ।
आस्थेयानि च तानि तानि जगतां क्षेमाय रामात्मनो
दैत्यारेश्चरिताद्भुतान्यथ खलु व्यग्राः प्रमोदामहे ॥ १३ ॥

---

एकस्थानसहासिकादिसंसर्गविशेषः कमपि महिमानमनिर्वाच्यं माहात्म्यं वितरति ददाति । प्रसन्नानामकस्माद्धेतुतो वा प्रसादं प्राप्तानामेतेषां वाचो जनस्यापरिमेयमपरिच्छेद्यं फलं सुखं प्रसुवते जनयन्ति । अत्र महिमानं वितरतीति 'ब्रह्मणो महिमानमाप्नोति' इति श्रुतिः स्फोर्यते । अत्र बीजगुणवर्णनाद्विलोभनं नाम संध्यङ्गमुक्तम् ॥ १२ ॥ **हरितेत्यादि** । हरितो वृक्षादिना श्यामः परिसरोऽभ्यर्णदेशो यस्य तत्तथोक्तम् । तथाविधेनारण्येन रमणीयम् । कौशिक्या नद्या परिक्षिप्तं परिवृतम् । सिद्धाश्रमपदं नाम सिद्धाश्रमस्थानमिति प्रसिद्धं तस्यर्षेर्विश्वामित्रस्यायतनं स्थानं दृश्यते । आत्मनातृतीयः । रामलक्ष्मणौ स्वयं चेति त्रयाणां संपत्त्या विश्वामित्रस्यात्मनातृतीयत्वम् । 'आत्मनश्च पूरणे' इति तृतीयाया अलुक् । कुशिकनन्दनो विश्वामित्रः ॥ यद्येवं विश्वामित्रश्चेत् । आश्रमाभ्यर्णभूमय आश्रमसमीपप्रदेशाः । नातिक्रमयितव्या न पदेन स्प्रष्टव्याः । इति प्रसिद्धौ ॥ यदाज्ञापयति । तदस्त्विति शेषः ॥ **रक्षोघ्नानीति** । सुदिने शोभनदिवसे राक्षसोपलक्षितानि प्रत्यूहशमनादीनि रक्षांसि घ्नन्तीति रक्षोघ्नानि । 'अमनुष्यकर्तृके च' इति हन्तेष्टक् । मङ्गलान्यङ्गहितेष्टार्थसिद्धिहेतुभूतानि कर्माणि कल्प्यानि कर्तव्यानि । किंच वैदेह्याश्च विदेहराजकन्यायाश्च रघूद्वहस्य च रघुश्रेष्ठस्य च दारक्रिया विवाहः कल्प्या निष्पाद्या । कल्प्यानीत्यस्यानुषङ्गः स्त्रीलिङ्गैकवचनाभ्यां विपरिणामश्च । किंच नः कुलेऽस्माकं गृहे । 'गेहे देहे जनपदे सजातीयगुणेऽन्वये । कुलम्' इति रत्नमाला । दीक्षाप्रवेशो दीक्षायां यागकर्तव्यतासंकल्पे प्रवेशः प्राथमिकसंबन्धो नः कल्प्यो मया कर्तव्यः । पूर्ववदनुषक्तस्य पुंलिङ्गैकवचनाभ्यां विपरिणामः । नः कल्प्य इत्यत्र 'कृत्यानां कर्तरि वा' इति षष्ठी । अथवा दीक्षाप्रवेशो दारक्रियामङ्गलानि च नः कल्प्यानि इत्येकमेव वाक्यम् ।

(प्रकाशम् ।) संदिष्टं च मैथिलस्य राजर्षेरस्माभिः—'आचार इति यजमानोऽपि यज्ञे निमन्त्रितोऽसि । कुशध्वजस्तु सीतोर्मिलासहितः प्रेषितव्यः' इति । कृतं च तत्प्रियसुहृदा ।

**कुमारौ**—भगवन्, कः पुनरयं महात्मा यत्र भवन्तोऽप्येवमभ्युपगताः ।

**विश्वामित्रः**—श्रूयन्त एव निमिजनकसंभवा राजर्षयो विदेहेषु ।

तेषामिदानीं दायादो वृद्धः सीरध्वजो नृपः ।
याज्ञवल्क्यो मुनिर्यस्मै ब्रह्मपारायणं जगौ ॥ १४ ॥

**कुमारौ**—यस्य तद्गृहेषु माहेश्वरं धनुः पूज्यते ।

---

कल्प्यानीत्यत्र 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इति नपुंसकैकशेषः । एकवद्भावविकल्पाद्बहुवचनम् । किंच तानि तानि नानाविधानि रामात्मनो दैत्यारे रामस्वरूपस्य भगवतो विष्णोश्चरिताद्भुतानि ताटकाताटकेयनिरसनादिवृत्तरूपाण्याश्चर्याणि जगतां क्षेमाय लोकानां मङ्गलाय लब्धांशपरित्राणाय वा । 'क्षेममस्त्री स्यान्मङ्गले लब्धरक्षणे' इति रत्नमाला । आस्थेयान्यस्माभिरावश्यकत्वेन प्रतिज्ञातव्यानि । अत्रापि 'कृत्यानां कर्तरि वा' इति षष्ठी । अथ खल्वथापि वयमहम् । 'अस्मदो द्वयोश्च' इत्येकत्वे बहुवचनम् । व्यग्राः सन्त उक्तेषु कर्तव्येषु व्यापृताः सन्तः । 'व्यग्रो व्यापृत आकुले' इति रत्नमाला । प्रमोदामहे प्रकृष्टहर्षवन्तो भवामः । प्रमोदामह इत्युक्तत्वेन वयमिति लभ्यते । अत्र बीजानुगुणप्रयोजनविभावनारूपा युक्तिर्नाम संध्यङ्गमुक्तम् ॥ १३ ॥ **संदिष्टमिति** । मैथिलस्य राजर्षेर्जनकं प्रत्यस्माभिर्मया संदिष्टं वाचिकं प्रेषितम् । किमित्यत्राह—**आचार इत्यादि** । यजमानोऽपि प्रारब्धापरिसमाप्तयागोऽपि । आगमनानर्होऽपीत्यर्थः । आचार इति यज्ञे निमन्त्रितोऽसि । निमन्त्रणं शिष्टाचारसिद्धमिति हेतोः । आरब्धयागस्त्वमागमनानर्होऽपि मद्यज्ञविषये मयागमनादौ प्रवर्तितोऽसीत्यर्थः । किंतु कुशध्वजः सीतोर्मिलाभ्यां सहितः सन्प्रेषितव्य इति संदिष्टं चेति पूर्वेण संबन्धः । निमन्त्रणमात्रेण त्वया नागन्तव्यम्, किंतु त्वत्स्थाने सीतोर्मिलाभ्यां सह कुशध्वजः प्रेषितव्य इति जनकं प्रति मया संदिष्टमित्यर्थः । तत्सीतोर्मिलाभ्यां सह कुशध्वजप्रेषणम् । प्रियसुहृदा जनकेन कुमारौ रामलक्ष्मणौ एवमभ्युपगता एवं प्रियसुहृत्त्वेनाभ्युपगममङ्गीकारं प्राप्ताः ॥ निमिजनकसंभवाः । निमिजनकेति मूलपुरुषव्यपदेशः । विदेहेषु विदेहदेशेषु । **तेषामिति** । सीरध्वजः सीरध्वजाभिधानो वृद्धो ज्ञानवयःशीलैः प्रकृष्टस्तेषां दायादो निमिजनकसंभवानां राजर्षीणामपत्यभूतो नृप इदानीमस्मिन्काले । वर्तत इत्यर्थः । यस्मै यं सीरध्वजमुज्जीवयितुम् । 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी । याज्ञवल्क्यो मुनिः । ब्रह्मणो वेदस्य । शुक्लस्य यजुष इत्यर्थः । पारायणं समग्राध्ययनं जगौ गीतवान् । उत्तरे यच्छब्दस्तच्छब्दं नापेक्षते ॥ १४ ॥ **यस्येति** । तत्प्रसिद्धं माहे-

**विश्वामित्रः**—अथकिम् ।

**कुमारौ**—श्रूयते किलान्यदपि तत्राश्चर्यं यदयोनिजा कन्येति ।

**विश्वामित्रः**—(विहस्य ।) तदप्यस्ति ।

अयं तु यजमानेन यक्ष्यमाणस्य मे गृहम् ।
प्रेषितस्तेन वात्सल्यादनुजन्मा कुशध्वजः ॥ १५ ॥

तदस्मिन्राजन्यश्रोत्रिये वत्साभ्यां प्रश्रयेण वर्तितव्यम् ।

**कुमारौ**—एवम् ।

**राजा**—(निर्वर्ण्य) ।

प्रकृत्या पुण्यलक्ष्मीकौ कावेतौ ज्ञायते त्विदम् ।
राजन्यदारकौ नूनं कृतोपनयनाविति ॥ १६ ॥
द्वितीयस्य च वर्णस्य प्रथमस्याश्रमस्य च ।
अहो रम्यानयोर्मूर्तिर्वयसो नूतनस्य च ॥ १७ ॥

---

श्वरं धनुः शैवं धनुर्यस्य जनकस्य गृहेषु पूज्यते ॥ अथ किमित्यङ्गीकारे । 'अङ्गीकृतौ स्यादथकिम्' इत्यमरः ॥ **श्रूयत इति** । तत्र जनकगृहे । यदिति । अयोनिजा कन्येति यदिदमन्यदप्याश्चर्यं तत्र श्रूयत इत्यर्थः ॥ **अयं त्विति** । यजमानेन वर्तमानयागेन तेन सीरध्वजेनानुजन्मानुजोऽयं कुशध्वजो वात्सल्यान्मयि प्रीत्यतिशयात् । 'वत्सांसाभ्यां कामबले' इति लच्प्रत्ययान्ताद्वत्सलशब्दाद्ब्राह्मणादित्वाद्भावे ष्यञ् । यक्ष्यमाणस्य करिष्यमाणयागस्य मे गृहं प्रेषितः । प्रेषयतेर्द्विकर्मकत्वाद्गृहस्यापि कर्मत्वम् ॥ १५ ॥ **तदिति** । तस्मादस्मिन्संनिहिते राजन्यश्रोत्रिये साङ्गवेदाध्येतरि । जातिवाचिनो राजन्यशब्दस्य 'पोटायुवति–' इत्यादिना श्रोत्रियशब्देन सह समानाधिकरणसमासः । 'श्रोत्रियंश्छन्दोऽधीते' इति सूत्रेण छन्दोध्येतरि श्रोत्रियशब्दो निपातितः । वत्साभ्यां युवाभ्यां प्रश्रयेण प्रियेण विनयेन ॥ एवमित्यङ्गीकारे ॥ निर्वर्ण्य निध्याय । 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः ॥ **प्रकृत्येति** । प्रकृत्या स्वभावतः । 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीया । पुण्यलक्ष्मीकौ पुण्यश्रीकौ । 'उरःप्रभृतिभ्यः कप्' इत्युरःप्रभृतित्वात्कप् ॥ एतौ काविति स्वगता जिज्ञासा । तत्र लिङ्गात्स्वगतं विशेषनिर्णयमाह—ज्ञायत इत्यादिना । कृतोपनयनौ राजन्यदारकावितीदमेव नूनं ज्ञायते संभावनात्मकज्ञानविषयीक्रियते । तुशब्दोऽवधारणे । मातापित्राद्यत्यन्तविशेषो न ज्ञायत इत्यर्थः ॥ १६ ॥ **द्वितीयस्येति** । अनयोः कुमारयोर्मूर्तिर्द्वितीयस्य वर्णस्य च । 'द्वेस्तीयः' इति द्विशब्दात्पूरणार्थे तीयप्रत्ययः । क्षत्रियवर्णस्य च प्रथमस्याश्रमस्य च ब्रह्मचर्याश्रमस्य च नूतनस्य वयसश्च बाल्यस्य च रम्या । क्षत्रियवर्णादित्रितयप्रयुक्तसौभाग्यवतीत्यर्थः ।

तथा हि ।

चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो
भस्मस्तोकपवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम् ।
मौर्व्या मेखलया नियन्त्रितमधोवासश्च माञ्जिष्ठकं
पाणौ कार्मुकमक्षसूत्रवलयं दण्डोऽपरः पैप्पलः ॥ १८ ॥

**कन्ये—** [1]सोम्मदंसणा क्खु एदे ।

**राजा—**(उपसृत्य ।) भगवन्, अभिवादये ।

**विश्वामित्रः—**दिष्ट्या गर्भरूपं त्वां कुशलिनं राजर्षि गृहानागतं पश्यामि । तत्परिष्वजस्व । (आलिङ्ग्य ।)

अपि प्रवृत्तयज्ञोऽसौ विदेहाधिपतिः सुखी ।
गौतमश्च शतानन्दो जनकानां पुरोहितः ॥ १९ ॥

**राजा—**स एवार्यः सुखी सह पुरोधसा गौतमेन, यस्यैवं भवन्तः कुटुम्बवृत्तिमनुपतिताः ।

---

१. सौम्यदर्शनौ खल्वेतौ ।

---

अहो इति विस्मये ॥ १७ ॥ 'राजन्यदारकौ नूनं कृतोपनयनाविति' इति पूर्वोक्तार्थे लिङ्गमुपन्यस्यति—**तथा हीति । चूडेति** । चूडया चुम्बितानि संयुक्ताग्राणि कङ्कपत्राणि बाणपक्षा यस्मिंस्तथोक्तं पृष्ठतोऽभितः पृष्ठे । द्वयोर्भागयोरित्यर्थः । तूणीद्वयं निषङ्गयुगलम् । भस्म भस्ममयं स्तोकं स्वल्पं पवित्रं पावनं लाञ्छनं पुण्ड्रं यस्य तथोक्तमुरो रौरवीमैणेयीं त्वचं धत्ते । मौर्व्या मेखलया मौर्व्यात्मकरशनया नियन्त्रितं बद्धं माञ्जिष्ठकं मञ्जिष्ठया रक्तं वासोऽध उरसोऽधस्तात्पाणौ कार्मुकं धनुरक्षसूत्रवलयं जपमालिकावलयम् । अस्तीति शेषः । 'अपरे पैप्पलः' इति पाठेऽपरे पाणावश्वत्थदण्ड इत्यर्थः । 'अपरः पैप्पलः' इति पाठे धनुर्दण्डादपरः । अन्य इत्यर्थः । अत्र 'ज्या राजन्यस्य माञ्जिष्ठं राजन्यस्य रौरवी राजन्यस्य' इत्यापस्तम्बवचनम्, 'आश्वत्थपैप्पलौ' इति गौतमवचनं च द्रष्टव्यम् । रौरवीं राजन्यस्येत्यत्र 'रुरुर्बिन्दुमान्मृगः' इत्युज्ज्वलायामुक्तम् । अतः कृतोपनयनौ राजन्यदारकाविति संभाव्यत इत्यर्थः ॥ १८ ॥ सौम्यदर्शनौ खल्वेतौ । एतौ रामलक्ष्मणौ ॥ अभिवादये । नमस्करणेनाशिषो वाचयामीत्यर्थः ॥ दिष्ट्येत्यानन्दे । 'दिष्ट्या समुपजोषं चेत्यानन्दे' इत्यमरः । गर्भरूपं गर्भवद्भरणीयम् । गृहानागतमस्मद्गृहं प्राप्तं त्वां कुशलिनं पश्यामीत्यन्वयः । परिष्वजस्व मामालिङ्गेत्यर्थः । **अपीत्यादि** । प्रवृत्तयज्ञः प्रारब्धयागोऽसावदूरविप्रकृष्टो विदेहाधिपतिः सीरध्वजोऽपि सुखी । सुखवान्किमित्यर्थः । जनकानां पुरोहितो गौतमो गौतमपुत्रः । 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यण्प्रत्ययः । शतानन्दश्चापि सुखीत्यनुषज्यते ॥ १९ ॥ आर्यो ज्येष्ठभ्राता पुरोधसा

**कन्ये**—पणमामो[1] ।

**राजा**—

लाङ्गलोल्लिख्यमानाया यज्ञभूमेः समुद्गता ।
सीतेयमूर्मिला चेयं द्वितीया जनकात्मजा ॥ २० ॥

**विश्वामित्रः**—भद्रमस्तु ।

**लक्ष्मणः**—(जनान्तिकम् ।) आश्चर्यमियदद्भुतसूतिरार्ये ।

**रामः**—

उत्पत्तिर्देवयजनाद्ब्रह्मवादी नृपः पिता ।
सुप्रसन्नोज्ज्वला मूर्तिरस्यां स्नेहं करोति मे ॥ २१ ॥

**राजा**—भगवन्,

कौ त्वामनुगतावेतौ क्षत्रियब्रह्मचारिणौ ।
प्रतापविक्रमौ धर्मं पुरस्कृत्योद्गताविव ॥ २२ ॥

---

१. प्रणमावः ।

---

पुरोहितेन गौतमेन सह स एव सुखी । सीरध्वज एव सुखातिशयवानित्यर्थः । 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संबन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥' इत्यतिशायने मतुप् । यस्य सीरध्वजस्यैवं पूर्वोक्तप्रकारेण कुटुम्बवृत्तिं गृहकृत्यव्यापृतिमनुपतिताः । अनुप्राप्ता इत्यर्थः ॥ पणमामो प्रणमावो नमस्कुर्वः ॥ **लाङ्गलेति** । लाङ्गलेन सीराग्रेणोल्लिख्यमानायाः कृष्यमाणायाः । यज्ञभूमेरिति पञ्चमी । या समुद्गता सा सीतेयमित्यर्थः ॥ २० ॥ **भद्रमस्त्विति** । एतदप्यनुग्रहरूपं बीजमुक्तम् ॥ **जनान्तिकमिति** । 'अर्थस्त्वेकेन विज्ञेयः पश्चाज्ज्ञाप्यः प्रसङ्गतः । तज्जनान्तिकमित्युक्त्वा काव्यबन्धे निवेशयेत् ॥' इत्युक्त्या कुशध्वजविश्वामित्राद्यविदितं राममात्रवेद्यं लक्ष्मणः किंचिदाहेत्यर्थः । आर्ये पूज्य । अद्भुतसूतिर्विस्मयनीयजन्मेतीयदाश्चर्यमेतावदेवाश्चर्यम् ॥ किमन्यदप्याश्चर्यमस्तीत्यर्थः । तदाह रामः—**उत्पत्तिरित्यादिना** । देवा इज्यन्तेऽस्मिन्निति देवयजनं यज्ञक्षेत्रम् । तस्मादुत्पत्तिराविर्भावः । ब्रह्मवादी 'ब्रह्म परिवृढं सर्वतः' इत्युक्तरीत्या सर्वप्रकारतोऽपि सर्वस्मादपि परिवृढस्य परमात्मन उपदेष्टा नृपः क्षत्रियवर्णोचितराज्यपरिपालनात्मककर्मयोगनिष्ठः सीरध्वजरूपः पिता । सुप्रसन्ना प्रसादातिशयवती मूर्तिर्विग्रहोऽस्यां सीतायां मे मम स्नेहं करोत्यौत्सुक्यं जनयति । उत्पत्तिरित्यादि वाक्यत्रयमिदम् । अतः करोतीत्येकत्वमुपपन्नम् । अत्र गुम्भालंकारः । 'गुम्भः कारणमाला स्यात्' इति लक्षणात् । अत्र स्नेहं करोतीत्यनेनौत्सुक्यात्मकारम्भ उक्तः । तदुक्तम्—'औत्सुक्यमात्रमारम्भः फललाभाय भूयसे' इति । तथा च भद्रमस्तु स्नेहं करोतीत्याभ्यां बीजारम्भसमन्वयान्मुखसंधिरुक्तः ॥ २१ ॥ **कौ त्वामित्यादि** । प्रतापः स्थान एव स्थित्वा शत्रु-

**विश्वामित्रः**—रामलक्ष्मणौ दाशरथी ।

**तौ**—(सविनयमुपसृत्य ।) गुरो, अभिवादयावहे ।

**राजा**—दिष्ट्या महाराजदशरथप्रसूतिर्दृश्यते । (परिष्वज्य ।)

नान्यत्र राघवाद्वंशात्प्रसूतिरनयोः समा ।
दुग्धार्णवादृते जन्म चन्द्रकौस्तुभयोः कुतः ॥ २३ ॥

श्रुतपूर्वं ह्येतदस्माभिः कर्णामृतम् ।

प्राप्ताः कृच्छ्रादृष्यशृङ्गोपचारैः
पुण्यश्रीकाः कोसलेन्द्रेण पुत्राः ।
ये दीप्तस्य श्रेयसः पारकामा-
श्चत्वारोऽपि ब्रह्मचर्यं चरन्ति ॥ २४ ॥

तदत्रभवतोररिष्टतातिमाशास्महे । सिद्ध एव रघूणां प्रसूतेरुत्कर्षातिशयः ।

---

तापनशक्तिः, विक्रमोऽभियानेन शत्रुपीडनम् । धर्मोऽलौकिकश्रेयःसाधनम् । धर्मं पुरस्कृत्योद्गतौ प्रतापविक्रमाविव स्थितौ त्वां पुरस्कृत्योद्गतौ क्षत्रियब्रह्मचारिणौ कौ कस्य पुत्रौ । किंनामधेयावित्यर्थः ॥ २२ ॥ तस्योत्तरं रामलक्ष्मणौ । दाशरथी इति दशरथपुत्रौ । 'अत इञ्' । तौ रामलक्ष्मणौ । उपसृत्य । कुशध्वजमिति शेषः ॥ **गुरो इति** । पितृसखत्वाद्गुरुत्वोक्तिः । श्वशुरस्याप्ययं व्यपदेश इति ध्वन्यते । भार्यायाः पिता स्वस्य पितेति स्मृतिसिद्धम् ॥ दशरथप्रसूतिर्दशरथापत्यम् । 'प्रसूतिर्जन्मतनयौ' इति रत्नमाला । **नान्यत्रेति** । अनयो रामलक्ष्मणयोः प्रसूतिरुत्पत्ती राघवाद्रघुसंबन्धिनो वंशात्संतानादन्यत्र न समानुरूपा । अनयो रघुवंशादुत्पत्तिरनुरूपेत्यर्थः । चन्द्रकौस्तुभयोर्जन्म दुग्धार्णवादृते कुतः क्षीरसमुद्रादन्यस्मात्कस्मात् । न कस्मादित्यर्थः । दृष्टान्तालंकारः । 'चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलंकृतिः' इति लक्षणात् ॥ २३ ॥ **श्रुतेति** । एतद्वक्ष्यमाणं कर्णामृतं कर्णयोरमृतवद्भोग्यं श्रुतपूर्वं पूर्वमेव श्रुतम् । **प्राप्ता इत्यादि** । कोसलेन्द्रेण दाशरथेन कृच्छ्राद्दुःखादृष्यशृङ्गस्योपचारैः पूजाभिर्हेतुभिः पुण्यश्रीकाः पावनलक्ष्मीकाः पुत्राः प्राप्ता लब्धाः । चत्वारोऽपि ये पुनर्दीप्तस्य दीप्तियुक्तस्य । ज्ञानगर्भस्येत्यर्थः । श्रेयसो वेदरूपस्य पुरुषार्थसाधनस्य पुरुषार्थस्य वा पारकामाः सन्तः काष्ठाप्रेप्सवः सन्तो ब्रह्मचर्यं वेदार्थाध्ययनार्थं व्रतं चरन्त्यनुतिष्ठन्तीत्येतच्छ्रुतपूर्वमिति संबन्धः ॥ २४ ॥ **तदिति** । अत्रभवतोः कुमारयोररिष्टतातिं क्षेमहेतुम् । 'शिवशमरिष्टस्य करे' इत्यरिष्टशब्दात्तातिल् । 'क्षेमंकरोऽरिष्टतातिः शिवतातिः शिवंकरः' इत्यमरः । 'रिष्टं स्यादशुभक्षेमनाशनिर्स्त्रिंशपाप्मसु' इति रत्नमाला । रिष्टमशुभं तद्विपरीतमरिष्टम् । तद्धेतुररिष्टतातिः । तमाशास्महे इच्छामहे । 'आङः शासु इच्छायाम्' इति पठितात्लडुत्तमपुरुषबहुवचनम् । **सिद्ध इति** । रघूणां रघ्वपत्यानां प्रसूतेरपत्यस्योत्कर्षातिशयो वीर्यादिगुणातिशयः

यान्मैत्रावरुणिः प्रशास्ति भगवानाम्नायपूते विधौ
शश्वद्येषु विशामनन्यविषयो रक्षाधिकारः स्थितः ।
सावित्रस्य मनोर्महीयसि कुले तेषामवाप्तात्मनां
राज्ञां वो महिमा न जातु वचनप्रज्ञानयोर्गोचरः ॥ २५ ॥

**विश्वामित्रः**—एवम् ।

अश्रान्तपुण्यकर्माणः पावनप्रायकीर्तयः ।
महाभाग्यविदस्तेषां यूयमेव स्तवक्षमाः ॥ २६ ॥

---

सिद्ध एव निष्पन्न एव । अतो नाशासनीयं किंचिदस्तीति पूर्वोक्तार्थाक्षेपोऽयम् । उत्कर्षातिशयं विशिनष्टि—**यानित्यादिना** । मित्रावरुणयोरपत्यं मैत्रावरुणिर्वसिष्ठः । 'देवताद्वन्द्वे च' इत्यानङ् । बाह्वादित्वादिञ् । आम्नायेन वेदेन पूते शुद्धे निर्दोषे वेदबोधितत्वात्स्वयमेव निर्दोषे विधावनुष्ठेयकर्मणि यान्युष्मान्प्रशास्ति प्रकर्षेण हिताहिते ज्ञापयति । शश्वदिति पूर्वोत्तराभ्यामन्वेति । वसिष्ठो येषां वो नित्यपुरोहित इत्यर्थः । अन्यो विषय आश्रयो यस्य स तथोक्तोऽन्यविषयः, स न भवतीत्यनन्यविषयः । राजान्तरानाश्रित इत्यर्थः । विशां मनुष्याणां रक्षायां पालनेऽधिकारः । पारार्थ्ये रक्षणैकार्थतेत्यर्थः । येषु युष्मासु शश्वत्स्थितः । नित्यं वर्तत इत्यर्थः । यूयमेव प्रधानरक्षकाः । वयमन्ये च युष्मभ्यं करप्रदा इत्यर्थः । 'सर्वा पूर्वमियं येषामासीत्कृत्स्ना वसुंधरा' इति ह्युक्तम् । महीयसि पूज्यतमे सावित्रस्य सवितुरपत्यस्य मनोः कुले वंशेऽवाप्तात्मनां लब्धशरीराणाम् । उत्पन्नानामिति यावत् । 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' इत्यमरः । राज्ञां वो निरुपाधिकराजत्ववतां युष्माकं महिमा निरतिशयगुणोत्कर्षो वचनप्रज्ञानयोर्वाङ्मनसयोर्जातु कदाचिदपि न गोचरः । न विषय इत्यर्थः । अत्र प्रथमपादेन विद्योक्ता । द्वितीयेन वृत्तमुक्तम् । तृतीयेनाभिजन उक्तः । एवमभिजनविद्यावृत्तोत्कर्षरूपो युष्माकं महिमायमप्रमेय इत्यर्थः ॥ २५ ॥

**अश्रान्तेति** । अश्रान्तान्यविच्छिन्नानि पुण्यकर्माणि नित्यनैमित्तिकादिसत्कर्माणि येषां तथोक्ताः । अश्रान्तेति काम्यव्यावृत्तिः । पुण्येत्यभिचारनिषिद्धयोर्व्यावृत्तिः । एतेन मोक्षसाधनकर्मानुष्ठान इति सिद्धम् । गीतं भगवता 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इति । पावनप्राया पवित्रत्वप्रचुरा कीर्तिर्गुणवत्ताप्रथा येषां ते तथोक्ताः । प्रायशब्देन कीर्तेर्भोग्यत्वमप्यस्तीति लभ्यते । पावनत्वभोग्यत्वे हि सह प्रसिद्धे । तत्र कस्यचित्प्राचुर्योक्तावन्यस्यान्वयमात्रमनुक्तसिद्धम् । प्रियादपि हितमभ्यर्हितमिति पावनप्रायेत्युक्तम् । एतत्कीर्तिर्लोकानां दुरितहारिणी स्वयं भोग्या चेत्यर्थः । तेषां रघुकुलराजानां महाभाग्यं महाभागत्वं पूर्वोक्ताभिजनविद्यावृत्तोत्कर्षरूपभाग्यातिशयफलं विदन्ति जानन्तीति महाभाग्यविदः । महान्भागो भाग्यं येषां ते तथोक्ता महाभागाः । 'भागो भाग्ये रूपकार्थे चतुर्थांशैकदेशयोः' इति रत्नमाला । महाभागशब्दाद्ब्राह्मणादित्वात्ष्यञ् । एवंभूता यूयमेव तेषां रघुकुलराजानां स्तवक्षमाः । स्तुत्यर्हा इत्यर्थः । 'न जातु वचनप्रज्ञानयोर्गोचरः' इति भवद्वचनं भवद्व्यतिरिक्तवि-

(सर्वे विश्रम्य कौशिकाश्रमसंस्त्यायमनुप्रविशन्ति ।)

**विश्वामित्रः**—तदस्मिन्वैकङ्कतच्छाये मुहूर्तमास्महे ।

(इति परिक्रम्योपविशन्ति ।)

(नेपथ्ये ।)

जय जय जगत्पते रामचन्द्र ।

(सर्वे साद्भुतमवलोकयन्ति ।)

**राजा**—भगवन्, का पुनरियं देवता ।

**विश्वामित्रः**—अहल्या नाम गौतमस्य महर्षेरौचथ्यस्य धर्मपत्नी । यस्याः शतानन्द आङ्गिरसोऽजायत । तामिन्द्रश्चकमे । तस्माद्गौतमदारावस्कन्दिनमहल्यायैजार इतीन्द्रं जानन्ति । अथ भगवान्मन्युमवाप । तस्याः पाप्मना शरीरमन्धतामिस्रमभ्ययात् । सेयमद्य रामभद्रतेजसा तस्मादेनसो निरमुच्यत ।

---

षयमिति भावः ॥ २६ ॥ कौशिकाश्रमसंस्त्यायं कौशिकावाससंनिवेशम् । 'मुनिस्थाने मठे ब्रह्मचर्यादावाश्रमोऽस्त्रियाम्' इति रत्नमाला । 'संघाते संनिवेशे च संस्त्यायः' इत्यमरः । वैकङ्कतस्य छाया वैकङ्कतच्छायम् । 'छाया बाहुल्ये' इति क्लीबत्वम् । तस्मिन्नास्महे उपविशामः । 'आस उपवेशने' लडुत्तमः । यद्वा विकङ्कतस्येयं वैकङ्कती । 'तस्येदम्' इत्यण् । वैकङ्कती छाया यस्येति स तथोक्तः । तथाविधेऽस्मिन्प्रदेश इत्यर्थः । शेषं पूर्ववत् ॥ नेपथ्ये कुशीलववर्गस्थाने । तदुक्तम्—'कुशीलवकुटुम्बस्य स्थली नेपथ्यमिष्यते' इति । 'जय जय' इति आदराद्विरुक्तिः ॥ **का पुनरिति**। तेजोऽतिशयेन देवतासादृश्याद्देवतेत्युक्तम् । **अहल्येत्यादि** । उचथ्यस्यापत्यमौचथ्यः । 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यण् । अङ्गिरसोऽपत्यमाङ्गिरसः । 'ऋष्यन्धक–' इत्यादिनाण् । तामहल्याम् । चकमे कामितवान् । 'आयादय आर्धधातुके वा' इत्युक्तेर्णिङभावः । तस्मादहल्याकामनावशाद्गौतमदारावस्कन्दिनं गौतमदारानवस्कन्दत्यपहरतीत्यर्थे अवपूर्वात् 'स्कन्दिर् गतिशोषणयोः' इति पठितात्स्कन्देः 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः । इन्द्रम् । अहल्यायैजार इति जानन्ति । 'अहल्यायैजार' इति श्रुत्यनुकरणम् । अहल्याया जार इत्यर्थः । जानन्तीत्यत्र वेदविद इति शेषः । अथ दारावस्कन्दनानन्तरं भगवान्गौतमो मन्युं कोपम् । तस्या अहल्यायाः पाप्मना परपुरुषोपभोगदुरितेन शरीरं कर्तृ अन्धतामिस्रमन्धतामिस्राख्यनरकविशेषानुभाव्यकाष्ठपाषाणादिभावम् । तथा च भागवते—'एवमेवान्धतामिस्रे यस्तु वञ्चयित्वा पुरुषं दारादीनुपयुङ्क्ते यत्र शरीरी निपात्यमानो यातनास्थो वेदनया नष्टमतिर्नष्टदृष्टिश्च भवति यथा वनस्पतिर्वृश्च्यमानमूलस्तदन्धतामिस्रं तमुपदिशन्ति'[1] इति । सेयमहल्या तस्मादेनसः पूर्वोक्तात्पापान्निरमुच्यत निर्मुक्ता

---

१ स्कं. ५ अध्यायः २६.

**राजा**—कथमप्रमेयानुभावसामर्थ्य एष वैकर्तनकुलकुमारः ।

**सीता**—(सविस्मयानुरागं निर्वर्ण्य । अपवार्य च ।) सरीरनिम्माणसरिसो से अणुभावो ।

**राजा**—

रामाय पुण्यमहसे सदृशाय सीता
दत्तैव दाशरथिचन्द्रमसेऽभविष्यत् ।
आरोपणेन पणमप्रतिकार्यमार्ये-
स्त्रैयम्बकस्य धनुषो यदि नाकरिष्यत् ॥ २७ ॥

(प्रविश्य ।)

**तापसः**—रावणपुरोहितः सर्वमायो नाम वृद्धराक्षसः संप्राप्तः । स किल राजकार्याद्वः पश्यति ।

---

१. शरीरनिर्माणसदृशोऽस्यानुभावः ।

---

मुचेः कर्मकर्तरि यकि लङ् । कर्मणि वा यकि लङ् । रामभद्रतेजसा कर्त्रा पूर्वयोजनाया हेतुना ॥ **कथमित्यादि** । कथमिति विस्मये । अप्रमेयेऽपरिच्छेद्येऽनुभावः प्रभावः सामर्थ्यं शक्तिश्च यस्य स तथोक्तः । 'अनुभावः प्रभावे च' इत्यमरः । विकर्तनस्य सूर्यस्येदं वैकर्तनम् । 'तस्येदम्' इत्यण् । तस्य कुलस्य कुमारो बालः । राम इत्यर्थः ॥ **सविस्मयेति** । विस्मयोऽहल्याशापविमोचनात्, अनुरागः सौन्दर्यातिशयात् । निर्वर्ण्यालोक्य । अपवार्य विश्वामित्रायवेदनार्थं संवृत्य शरीरनिर्माणसदृशोऽस्यानुभावः शरीरनिर्माणस्य निरतिशयसौन्दर्ययुक्तशरीरसृष्टेः सदृशोऽनुरूपोऽस्य रामस्य ॥ **रामायेत्यादि** । आर्यो जनकोऽप्रतिकार्यमप्रतिनिवर्त्यं त्र्यम्बकस्येदं त्रैयम्बकम् । 'तस्येदम्' इत्यण् । 'नय्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्' इत्यैजागमः । तस्य धनुष आरोपणेन मौर्व्याः सज्जनेन पणं धनम् । धनुरारोपणात्मकं कन्याशुल्कधनमित्यर्थः । नाकरिष्यद्यदि न कृतवांश्चेत् । तेनेतिशेषः । तेन जनकेन सीता पुण्यमहसे पावनतेजस्काय । चन्द्रमा इव दाशरथिर्दाशरथिचन्द्रमाः । उपमितसमासः । तस्मै सदृशायानुरूपाय । तथा च सदृशाय रामात्मकाय पुण्यतेजस्काय चन्द्रतुल्याय दाशरथये दत्तैवाभविष्यत् । अत्राह्लादकरत्वरूपसामान्यधर्मस्यानुपादानादुपमितसमासः । प्रधानस्य सापेक्षस्यापि समास इत्युक्तेः । रामादिविशेषणानां दाशरथिपदार्थे तादात्म्येनान्वयः । अभविष्यदकरिष्यदित्यनयोः 'लिङ्निमित्ते लृङ्क्रियातिपत्तौ' इति लृङ् । तथा च रौद्रधनुरारोपणपणकरणाभावे रामात्मकदाशरथिसंप्रदानकसीताप्रदानहेतुरिति सिद्धेस्तादृशपणकरणं सीताप्रदानप्रतिबन्धकमिति पर्यवसितम् ॥ २७॥ तापसस्तपःशीलः । शीलमित्यधिकारे 'छत्रादिभ्यो णः' । सर्वा माया यस्य स तथोक्तः सर्वमायः । राजकार्याद्रावणकार्यनिमित्तं वो युष्मान्पश्यति द्रष्टुमिच्छति ॥

**कन्ये**—[1]हुं, रक्खसो ।

**कुमारौ**—महत्कौतुकस्थानम् ।

**राजविश्वामित्रौ**—आगच्छतु ।

(तापसो निष्क्रान्तः ।)

(प्रविश्य ।)

**राक्षसः**—

मातामहेन प्रतिषिध्यमानः
स्वयंग्रहान्माल्यवता दशास्यः ।
अयोनिजां राजसुतां वरीतुं
मां प्राहिणोन्मैथिलराजधानीम् ॥ २८ ॥

दृष्टश्च तत्र यजमानः स राजा । तद्वचनात्कौशिककुशध्वजावनुगतोऽस्मि । (इति परिक्रामति ।)

**रामलक्ष्मणौ**—(सीतोर्मिले प्रति यथासंख्यमात्मगतम् ।) तत्किमियममृतवर्तिरिव मे चक्षुराप्याययति ।

**सीतोर्मिले**—(तथैव तौ प्रति ।) [2]किंत्ति सज्जइ इमस्सिं लोअणाणन्दे मे दिट्ठी ।

---

१. हुं, राक्षसः ।
२. किमिति सज्जतेऽस्मिंल्लोचनानन्दे मे दृष्टिः ।

---

हुं राक्षसः । हुमिति वितर्के । किमर्थमिहागतो राक्षस इत्यर्थः ॥ कौतुकस्थानं हर्षहेतुः ॥ **मातामहेनेति** । दशास्यो रावणो मातामहेन मातुः पित्रा माल्यवता माल्यवन्नाम्ना दैत्येन प्रतिषिध्यमानो निवार्यमाणः सन्स्वयंग्रहाद्बलात्कारेण ग्रहणात् । 'ल्यब्लोपे कर्मण्यधिकरणे च' इति पञ्चमी । बलात्कारेण ग्रहणं विहायेत्यर्थः । अयोनिजां राजसुतां सीतां वरीतुमुद्वोढुम् । 'वृतो वा' इति इटो दीर्घः । मैथिलराजधानीं सीरध्वजस्य नगरीं प्रति मां प्राहिणोत्प्रेषयामास ॥ २८ ॥ तत्र मैथिलराजधान्याम् । यजमान आरब्धयागः । स राजा सीरध्वजः । तद्वचनात्सीरध्वजवचनादनुगतोऽस्म्यनुप्राप्तोऽस्मि । इति परिक्रामति । इति वदन्नाब्येन परिक्रामतीत्यर्थः ॥ **यथासंख्यमिति** । प्रथमनिर्दिष्टो रामः प्रथमनिर्दिष्टां सीतां प्रति द्वितीयनिर्दिष्टो लक्ष्मणो द्वितीयनिर्दिष्टामूर्मिलां प्रतीत्यर्थः । आत्मगतं मनोगतं वक्ष्यमाणम् । अनुसंधत्त इत्यर्थः । तत्किमिति । केनापि तादृशेन हेतुनेत्यर्थः । अमृतवर्तिरिवामृताञ्जनरेखेव । 'वर्तिर्दीपदशागात्रालेपयोर्मणिरञ्जके । व्रणभेषजभेदे च नयनाञ्जनरेखयोः ॥' इति रत्नमाला । इयं सीता ऊर्मिला चाप्याययति ॥ तथैव यथासंख्यं सीता रामं

**राक्षसः**—(उपेत्य ।) इयं साद्भुताकृतिः सीता । स्थाने देवस्य यत्नः । ऋषे, नमस्ते । अप्यनामयं राज्ञः ।

**तौ**—स्वागतम् । इहास्यताम् ।

अपि प्रभोर्वः कुशलं तस्य यस्यार्चयत्यसौ ।
मूर्ध्ना स्खलत्किरीटेन शासनं पाकशासनः ॥ २९ ॥

**राक्षसः**—(उपविश्य ।) कुशलं स्वामिनः । संदिष्टं च वो महाराजेन—

'कन्यारत्नमयोनिजन्म भवतामास्ते वयं चार्थिनो
रत्नं चेत्क्वचिदस्ति तत्परिणमत्यस्मासु शक्रादपि ।
कन्यायाश्च परार्थतैव हि मता तस्याः प्रदानादहं
बन्धुर्वो भविता पुलस्त्यपुलहप्रष्ठाश्च संबन्धिनः ॥ ३० ॥'

---

प्रत्यूर्मिला लक्ष्मणं प्रतीत्यर्थः । किमिति सज्जतेऽस्मिल्लोचनानन्दे मे दृष्टिः । किमिति कुतो हेतोः सज्जते लग्ना भवति । अस्मिन्रामे लक्ष्मणे चानन्दहेतावानन्दत्वव्यपदेशः । तत्किमियमित्यादिना दृष्टिरित्यन्तेन द्वादशसु शृङ्गारावस्थासु चक्षुःप्रीतिर्नाम प्रथमावस्थोक्ता । तदुक्तम्—'आदराद्वीक्षणं यत्तच्चक्षुःप्रीतिर्भवेत्तु सा' इति ॥ सा बहुशोऽस्माभिः श्रुतपूर्वाद्भुताकृतिर्विस्मनीयसौन्दर्या सीतेत्यन्वयः । देवस्य रावणस्य यत्नः स्वयंग्रहादिप्रवृत्त्युद्योगः स्थाने । उचित इत्यर्थः । अनामयमारोग्यम् । 'ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम्' इति स्मरणात् ॥ तौ राजविश्वामित्रौ । राक्षसं प्रतीति शेषः । स्वागतम् । तव सुखागमनं किमित्यर्थः । इहास्यताम् । त्वयेति शेषः । **अपीत्यादि** । उत्तरयच्छब्दस्य तच्छब्दनिरपेक्षत्वात्तस्येत्यस्य प्रसिद्धस्येत्यर्थः । वः प्रभोर्युष्माकं राज्ञो रावणस्यापि कुशलमित्यन्वयः । असौ पाकशासन इन्द्रः स्खलत्किरीटेन मूर्ध्ना यस्य रावणस्य शासनमाज्ञामर्चयति पूजयति ॥ २९ ॥ कुशलं स्वामिनः । रावणस्य कुशलमित्यर्थः । महाराजेन रावणेन वो युष्माकं संदिष्टम् । मन्मुखेन किंचिद्वाक्यमित्यर्थः । चकारः कुशलं समुच्चिनोति । संदेशं विशिनष्टि—**कन्येत्यादिना** । योनेर्जन्म यस्य तद्योनिजन्म । तन्न भवतीत्ययोनिजन्म कन्यारत्नम् । 'रत्नं मणौ च श्रेष्ठे च' इति रत्नमाला । भवतां युष्माकमास्ते वर्तते । ततः किमित्यत्राह—**वयमित्यादि** । वयमहमर्थिनश्च तद्विषये स्वोद्देश्यकदानेच्छां युष्माकं प्रकटयन्तो भवामश्च । किंच रत्नं क्वचिदस्ति चेच्छ्रेष्ठवस्तु यत्र क्वचन विद्यते चेच्छक्रादपीन्द्रं विहायापि । 'ल्यब्लोपे पञ्चमी' । अस्मासु मयि । पूर्वत्रात्र च 'अस्मदो द्वयोश्च' इत्येकत्वे बहुवचनम् । 'सविशेषणस्य प्रतिषेधः' इति तु न विधेयविशेषणविषयम् । परिणमत्यन्ततो गत्वापि विश्राम्यति । 'रत्नहारी च पार्थिवः' इति हि प्रसिद्धम् । किंच कन्यायाः परार्थता परकीयतैव मता हि शास्त्रकृतामिष्टा हि । 'अर्थो

सीता—हद्धी हद्धी। रक्खसो मं अब्भत्थअदि।

ऊर्मिला—हा, कहं एदम्।

(राजविश्वामित्रौ चिन्तयतः।)

लक्ष्मणः—आर्य, निशाचरपतिर्देवीमिमां प्रार्थयते।

रामः—वत्स,

साधारण्यान्निरातङ्कः कन्यामन्योऽपि याचते।
किं पुनर्जगतां जेता प्रपौत्रः परमेष्ठिनः॥ ३१॥

लक्ष्मणः—अति हि सौजन्यमार्यस्य तस्मिन्नपि निसर्गवैरिणि निशाचरे बहुमानः।

---

१. हा धिक् हा धिक्। राक्षसो मामभ्यर्थयते।

२. हा, कथमेतत्।

---

हि कन्या परकीय एव' इति हि प्रसिद्धम्। अत्र चायोनिजन्मेत्यनेन युष्माकं शरीर-संबन्धाभावाद्युष्माकमसाधारणत्वं न भवतीत्युक्तम्। क्षेत्रजत्वमात्रेण स्वत्वाभिमाने तु कैश्चिदर्थितत्वे तत्तेभ्योऽवश्यं दातव्यम्। तत्रापि याञ्चा दैन्यपराधीत्यर्थित्वगन्ध-विधुरेण मयार्थितत्वेऽवश्यं मह्यं देयम्। अथापि 'मदभ्यर्थनोल्लङ्घने रत्नहारि' इति न्यायेन कथंचिदपि मदीयमेव तद्भवेत्। किंच कन्यायाः परार्थत्वादवश्यं कस्मै-चिद्दीयते। एवमेतैर्हेतुभिस्तस्या रत्नभूतायाः कन्यायाः 'दशैते राजमातङ्गास्तस्यैव हि तुरंगमाः' इतिवद्दृश्येकदेशस्यापि तच्छब्देन परामर्शः। प्रदानात्प्रार्थनापूर्वकत्वरूप-प्रकर्षयुक्तदानेन हेतुनाहं प्रजापतिप्रपौत्रोऽहं वः क्षत्रियाणां युष्माकं बन्धुर्भविता बन्धुर्भविष्यति (ष्यामि)। 'सुवर्णं कुण्डले भवतः' इतिवद्विकृतिकर्त्रनुसारिणी तिङ्वि-भक्तिरिति भवतेर्लुटि प्रथमपुरुषः। पुलस्त्यपुलहौ प्रष्ठावग्रगौ येषां ते तथोक्ताः। 'प्रष्ठोऽग्रगामिनि' इति सूत्रेण निपातितः। 'प्रष्ठश्रीष्वग्रगे वरे' इति रत्नमाला। संब-न्धिनो भवितार इत्यनुषङ्गविपरिणामौ। भविष्यन्तीत्यर्थः॥ ३०॥ हा धिक् इति दुःखनिर्वेदयोः॥ चिन्तयतः। एतद्राक्षसाभ्यर्थनं चिन्तयतः। प्रतिवचनमिति शेषः॥ निशाचरपती रावणो देवीमिमां प्रार्थयते सीतां याचते॥ **साधारण्यादिति।** साधारण्यात्साधारणत्वात्सर्वेषां साम्यात्। समानो धारणो यस्य स सधारणः। सधारण एव साधारणः। तस्य भावः साधारण्यम्। ब्राह्मणादित्वात्ष्यञ्। कन्या-मन्योऽपि रावणादन्योऽपि निरातङ्कः सन्निर्भयः सन्याचते प्रार्थयते। परमेष्ठिनश्चतु-र्मुखस्य प्रपौत्रः पौत्रस्य पुत्रो जगतां जेता जगद्विजयी रावणः कन्यां याचत इति किं पुनः। किमु वक्तव्यमित्यर्थः॥ ३१॥ सौजन्यं गुणाविष्कारहेतुभूतं सुजनत्वम्। अति ह्यतिशयितं हि। 'प्रकर्षे लङ्घनेऽप्यति' इत्यमरः। निसर्गं स्वभावभूतं वैरं विद्वेषोऽस्यातिशयेनास्तीति निसर्गवैरी। निसर्गवैरिशब्दादतिशायनार्थं इनिप्रत्ययः।

योनस्त्रयीपरिध्वंसात्क्षात्रं तेजोऽपकर्षति ।
अस्माकं यश्च राजानमनरण्यं किलावधीत् ॥ ३२ ॥

**रामः**—कामं शत्रुरिति वध्यः स्यात् । न पुनरतिवीर्यमप्रमेयतपसमप्राकृतं प्राकृतवदर्हसि व्यपदेष्टुम् ।

**लक्ष्मणः**—निरस्तवीरपुरुषाचारस्य का वीरता ।

**रामः**—वत्स, मा मैवम् ।

यद्विद्वानपि तादृशेऽप्यभिजने धर्म्यात्पथोऽपि च्युतः
किं ब्रूमोऽत्र तदन्यदेव न वसन्त्येकत्र सर्वे गुणाः ।
लीलानिर्जितषण्मुखाद्भगवतः श्रीजामदग्न्यादृते
निर्विघ्नप्रतिपन्नविश्वविजयो वीरस्तु कस्तादृशः ॥ ३३ ॥

---

न कर्मधारयादिति निषेधस्तु बहुव्रीहिणा तुल्यार्थतायाम् । नत्वतिशयादिविवक्षायाम् । तस्मिन्नपि रावणेऽपि बहुमानः पूजा । निसर्गवैरमुपपादयति—**यो न इत्यादिना ।** यो रावणस्त्रयीपरिध्वंसाद्वेदमार्गप्रणाशनान्नः क्षात्रं तेजः क्षत्रसंबन्धिपराभिभवनसामर्थ्यम् । 'तेजो बले प्रतापेऽग्नौ' इति रत्नमाला । अपकर्षत्यभिभवति । किंच यो रावणो राजानमस्माकमनरण्यमस्मत्कूटस्थमवधीत्किल जघानेति प्रसिद्धम् । एवं साधारणेनासाधारणेन चापकारेण निसर्गवैरातिशये रावणेऽपि बहुमानादार्यस्य सौजन्यमतिशयितमिति भावः ॥ ३२ ॥ कामं शत्रुरिति वध्यः स्यात् । शत्रुत्वाद्धेतोस्तस्य वध्यत्वं मयाप्यनुज्ञातमित्यर्थः । 'स्मराभिलाषयोः कामोऽनुज्ञायां काममव्ययम्' इति रत्नमाला । किमत्राननुज्ञातमित्यत्राह—**न पुनरित्यादि ।** अतिवीर्यमतिशयितपराक्रमम् । 'वीर्यं पराक्रमे शुक्रे' इति रत्नमाला । अप्रमेयतपसमपरिच्छिन्नतपस्कम् । अप्राकृतमपृथग्जनं प्राकृतवत्प्राकृतेन तुल्यम् । 'विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः' इत्यमरः । व्यपदेष्टुं पुनर्वक्तुं नार्हसीत्यन्वयः ॥ निरस्तवीरपुरुषाचारस्य त्यक्तवीरपुरुषधर्मस्य ॥ मा मैवम् । एवं त्वदुक्तरीतिः मा मा । नैवेत्यर्थः । **यदित्यादि ।** अत्र रावण इत्यादि रावणो विद्वानपि ज्ञातापि तादृशेऽप्यभिजने लोकश्रेष्ठे । पुलस्त्यवंशे जातोऽपीति शेषः । धर्म्याद्धर्मादनपेतात् । 'धर्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्ययः । अपि च्युतो गर्हणीयतया च्युतो भ्रष्टः । 'गर्हा समुच्चयप्रश्नशङ्कासंभावनास्वपि' इत्यमरः । विदुषोऽतिक्रमे दण्डभूयस्त्वमित्यभिप्रायेण विद्वानपीत्युक्तम् । आरूढपतनाभिप्रायेण 'तादृशेऽप्यभिजने' इत्युक्तम् । च्युत इति यदत्र किं ब्रूमः किं वदामः । धर्ममार्गान्न च्युत इति न वदाम इत्यर्थः । धर्ममार्गाद्भ्रष्टत्वमन्यदेव । दोष एवेत्यर्थः । सर्वे गुणाः शौर्याचारादय एकत्र न वसन्ति । एकस्मिन्स्थाने न तिष्ठन्तीत्यर्थः । दोषस्तिष्ठतु, गुण एवादरणीय इत्याह—लीलेत्यादिना । किं तु लीलानिर्जितषण्मुखादनायासनिर्जितस्कन्दाद्भगवत ऐश्वर्यादिगुणवतः श्रीजामदग्न्यादृते जमदग्नितनयं परशुरामं विना निर्विघ्नप्रतिपन्नविश्वविजयो निर्विघ्न-

**राक्षसः**—ननु भोः, किमत्र चिन्त्यते ।

द्राङ्निष्पेषविशीर्णवज्रशकलप्रत्युप्तरूढव्रण-
ग्रन्थ्युद्भासिनि भग्नमोघमघवन्मातङ्गदन्तोद्यमे ।
भर्तुर्नन्दनदेवताविरचितस्रग्धाम्नि भूमेः सुता
वीरश्रीरिव तस्य वक्षसि जगद्वीरस्य विश्राम्यतु ॥ ३४ ॥

(नेपथ्ये कलकलः ।)

**राजा**—भगवन्, यत एते यज्ञोपनिमन्त्रिताः पुत्रदारैः सह दिगन्तरेभ्यो महर्षयः संपतन्ति, तत एवमाक्रन्दकलिलः कलकलः ।

(सर्वे उत्तिष्ठन्ति ।)

**लक्ष्मणः**—भगवन्, का पुनरियम् ।

आन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम् ।

---

प्राप्तसर्वविजयस्तादृशो रावणतुल्यो वीरः कः । न कोऽपीत्यर्थः । अनन्तरापत्येऽपि गोत्रत्वारोपणाज्जामदग्न्य इति यञ्प्रत्ययः ॥ ३३ ॥ किमत्र चिन्त्यते । मन्मुखेन मत्प्रभुसंदिष्टेऽर्थे वक्ष्यमाणादन्यत्किं विमृश्यत इत्यर्थः । **द्रागित्यादि** । भूमेः सुता जगद्वीरस्य जगति मुख्यवीरस्य तस्य भर्तुः पाणिग्रहीतृ रावणस्य इदं च वक्षसीत्यनेनान्वेति । द्राग्झटिति निष्पेषेण संघट्टनेन विशीर्णस्य भग्नस्य वज्रस्य शकलैः खण्डैः प्रत्युप्तैः खचितैः रूढानां प्रादुर्भूतानां व्रणानां ग्रन्थिभिः पर्वभिः । 'ग्रन्थिः पर्वगदान्तरे' इति रत्नमाला । तैरुद्भासिन्यत्यन्तद्योतमाने । पद्मरागमणितुल्येषु व्रणग्रन्थिषु लग्नानि दम्भोलिशकलानि हीरमणय इव खचिता दृश्यन्त इति भावः । भग्नः प्रारम्भ एव नष्टो मोघः प्रवृत्तोऽपि विफलो मघवन्मातङ्गदन्तानामुद्यमो व्यापारो यस्मिंस्तत्तथोक्तं तस्मिन् । नन्दनदेवताभिरिन्द्रोद्यानपालिकाभिर्देवताभिर्विरचितानां गुम्फितानां स्रजां दाम्नां धाम्नि स्थानभूते । 'धाम जन्मप्रभास्थानप्रभावसुखसद्मसु' इति रत्नमाला । 'विरचितस्रग्दाम्नि' इति पाठे विरचितानि गुम्फितानि स्रजो माला दामानि प्रालम्बवैकक्ष्यकादीनि च यस्मिंस्तत्तथोक्तं तस्मिन्नित्यर्थो बोध्यः । तस्य रावणस्य वक्षसि वीरश्रीरिव वीरलक्ष्मीरिव विश्राम्यतु । विश्रमं प्राप्नोत्वित्यर्थः । अतोऽन्यत्किं चिन्त्यत इत्यर्थः । वीरश्रीरिवेत्युपमालंकारः । 'द्राङ्निष्पेष–' इत्यादिना 'नन्दनदेवता' इत्यादिना च विशेषणद्वयेन वक्षसो विश्रमस्थानत्वौपयिकरत्नमालापुष्पमालालंकृतत्वोक्तेः परिकरालंकारः । 'अलंकारः परिकरः साभिप्राये विशेषणे' इति तल्लक्षणात् ॥ ३४ ॥ यज्ञोपनिमन्त्रिता यज्ञार्थमाहूताः । पुत्रदारैः सह पुत्रकलत्रैः सह । संपतन्ति समागच्छन्ति । आक्रन्देन शिशूनां रोदनशब्देन कलिलः कलुषः ॥ **आन्त्रेत्यादि** । आन्त्रेषु पुरीतत्सु प्रोतानि गुम्फितानि बृहन्ति । नलकानीव घुटिका इव कपालाः कपालनलकानि । यद्वा । कपालाश्च नलकानि चेति द्वन्द्वः । 'शङ्खास्थि नल-

पीतोच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लल-
व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥ ३५ ॥

**विश्वामित्रः**—
सेयं सुकेतोर्दुहिता भार्या सुन्दासुरस्य च ।
मारीचजननी घोरा ताटका नाम राक्षसी ॥ ३६ ॥

**कन्ये**—तांद[1], भीसणा हदासा ।

**राजा**—मा भैष्टमायुष्मत्यौ ।

**विश्वामित्रः**—(रामं चिबुकप्रदेशे स्पृशन् ।) वत्स, हन्यतामियम् ।

**सीता**—हद्धी[2] हद्धी । एसो एव्व एत्थ णिउत्तो ।

**रामः**—भगवन्, स्त्री खल्वियम् ।

**ऊर्मिला**—सुदं[3] अज्जाए ।

**सीता**—(सविस्मयानुरागम् ।) अण्णदोमुहो[4] एव्व से चित्तभेदो ।

---

१. तात, भीषणा हताशा ।
२. हा धिक् हा धिक् । एष एवात्र नियुक्तः ।
३. श्रुतमार्यया ।
४. अन्यतोमुख एवास्य चित्तभेदः ।

---

कम्' इति हलायुधः । क्रूरं यथा भवति तथा क्वणन्ति ध्वनन्ति कङ्कणानि करभूषणानि । आन्त्रप्रोतबृहत्कपालनलकान्येव क्रूरक्वणत्कङ्कणानि तानि प्रायो बहूनि येषु तानि तथोक्तानि । तेषां प्रेङ्खितानां चलितानां भूरीणां प्रचुराणां भूषणानां रवैः शब्दैरम्बरमाकाशमाघोषयन्ती समन्ताद्धोषयुक्तं कुर्वती । पीतस्योच्छर्दितस्यातिमात्रत्वादुद्वान्तस्य कर्दमस्य घनेन सान्द्रेण प्राग्भारेण समूहेन । प्राग्भारशब्दः समूहे रूढ इति व्याख्यातारः । घोरौ भयंकरावुल्ललन्तावुत्पतन्तौ व्यालोलावभितश्चलन्तौ यौ स्तनौ तयोर्भारेण भैरवं भयंकरं वपुर्यस्याः सा तथोक्ता । केयं दर्पेणोद्धतमुदग्रं यथा तथा धावति शीघ्रं गच्छति । 'सृ गतौ' इत्यस्य 'पाघ्राध्मास्थाम्नादाण्–' इत्यादिना शीघ्रगमने धावादेशः । 'आन्त्रं पुरीतत्' इत्यमरः । 'प्रायो वयोमृत्युतुल्यबाहुल्यानशनेषु ना । प्रायोऽव्ययं च बाहुल्ये' इति रत्नमाला ॥३५॥ **सेयमित्यादि ।** सुकेतोः सुकेतुनामकस्य यक्षस्य दुहिता सुता । सुन्दासुरस्य भार्या । मारीचस्य जननी माता । ताटका नाम घोरा भयावहा राक्षसीति पूर्वस्मादनुषङ्गः ॥ ३६ ॥ हताशा इति निन्दायाम् ॥ मा भैष्टं भीतिमत्यौ न भवेतम् । भैष्टमिति बिभेतेर्लुङ्मध्यमपुरुषद्विवचनम् । 'न माङ्योगे' इत्यडागमाभावः । 'अधस्ताच्चिबुकम्' इत्यमरः । अध-

**रामः**—साधु । सत्यमैक्ष्वाको रामभद्रः ।

**राक्षसः**—( स्वगतम् ।) अयं स रामो दाशरथिः, य एषः

उत्तालताटकोत्पातदर्शनेऽप्यप्रकम्पितः ।
नियुक्तस्तत्प्रमाथाय स्त्रैणेन विचिकित्सति ॥ ३७ ॥

**विश्वामित्रः**—त्वरस्व वत्स, किं न पश्यसि ब्राह्मणजनस्य संघात-मृत्युमग्रतः ।

**रामः**—एवं भगवन्तो जानन्ति ।

सर्वदोषानभिष्वङ्गादाम्नायसमतां गताः ।
युष्माकमभ्युपगमाः प्रमाणं पुण्यपापयोः ॥ ३८ ॥

(इति निष्क्रान्तः ।)

---

राधोदेशे रामं स्पृशन्नित्यर्थः । हन्यतामियम् । इयं ताटका हन्यतां वध्यताम् । त्वयेति शेषः ॥ एष एवातिसुकुमारो राम एवातिदुष्करेऽस्मिंस्ताटकावधे समाज्ञप्तः ॥ भगवन्विश्वामित्र, इयं ताटका स्त्री खलु । अतो न वध्येत्यर्थः ॥ श्रुतमार्ययाप्रजया त्वया । स्त्री खल्वियमिति रामवाक्यं श्रुतं किमित्यर्थः । अस्य रामस्य चित्तभेदोऽभिप्रायविशेषः ॥ अन्यतो वधादन्यस्मिन्मुखमौन्मुख्यं यस्य स तथोक्तः ॥ ऐक्ष्वाक इक्ष्वाकुवंश्यः । स्त्रीवधाज्जुगुप्समानत्वाद्रामभद्रस्यैक्ष्वाकुवंश्यत्वं सत्यमित्यर्थः ॥ **अयमित्यादि** । एष उत्तालायास्तालमुद्गतायाः । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः । ताटकाया उत्पातस्योत्पतनस्य ताटकात्मकदुःखसूचकदुर्ग्रहस्य वा दर्शनेऽप्यप्रकम्पितोऽचलितस्तस्यास्ताटकायाः प्रमाथाय वधाय नियुक्त आज्ञप्तः । विश्वामित्रेणेति शेषः । स्त्रैणेन स्त्रीत्वेन । 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' इति स्त्रीशब्दाद्भावे स्नञ्प्रत्ययः । विचिकित्सति । हन्यतां न हन्यतां वेति संदेग्धीत्यर्थः । 'विचिकित्सा तु संशयः' इत्यमरः । अयं स इति संबन्धः ॥ ३७ ॥ त्वरस्व । हन्तुमिति शेषः । संघातस्य मृत्युः संघातमृत्युः । एककाले बहूनां मरणमित्यर्थः । ब्राह्मणजनस्य संघातमृत्युमिति देवदत्तस्य गुरुकुलमितिवदन्वयः । अग्रत उत्तरदक्षिणेन । तथा च 'त्यजेदेकं कुलस्यार्थे' इति न्यायेन भूयिष्ठब्राह्मणजनव्यपेक्षयैकस्या दुष्टस्त्रियो वधो न दोषायेत्यर्थः ॥ भगवन्तः 'उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥' इत्युक्तरीत्या भूतोत्पत्त्यादिवेदिनो यूयमेवं पूर्वोक्तप्रकारेण जानन्ति मन्यन्ते । **सर्वेति** । सर्वदोषाणां भ्रमप्रमादाविप्रलिप्सादिवक्तृदोषाणामनभिष्वङ्गादसंबन्धाद्धेतोराम्नायसमतां गता वेदतुल्यतां प्राप्ताः । युष्माकं भवादृशामभ्युपगमा अङ्गीकाराः पुण्यपापयोः कृत्याकृत्ययोर्विषये प्रमाणं प्रमितिहेतवः । भवन्तीति शेषः । अतो भवन्नियोगात्ताटकां हनिष्यामीति भावः ॥ ३८ ॥ **निष्क्रान्त इति** । वधस्य 'दूराध्वानं वधं युद्धम्' इति प्रत्यक्षप्रयोगनिषेधात्ताट-

**सीता**—[1]अम्महे, परागदो एव्व । हद्धी हद्धी । उप्पादवादावली विअ सा हदासा महाणुभावं अहिद्दवदि ।

**राजा**—(धनुरास्फाल्य ।) आः पापे, तिष्ठ तिष्ठ ।

**ऊर्मिला**—[2]अए, सअं एव्व तादो पत्थिदो ।

**लक्ष्मणः**—(विहस्य ।) पश्यन्तु भवन्तस्ताटकाम् ।

हृन्मर्मभेदिपतदुत्कटकङ्कपत्र-
संवेगतत्क्षणकृतस्फुटदङ्गभङ्गा ।
नासाकुटीरकुहरद्वयतुल्यनिर्य-
दुद्बुद्बुदध्वनदसृक्प्रसरा मृतैव ॥ ३९ ॥

**कन्ये**—[3]अच्चरिअं अच्चरिअम् । पिअं णो पिअं णो ।

**राजा**—अहो दृढप्रहारिता राजपुत्रस्य ।

**राक्षसः**—भो आर्ये ताटके, किं हि नामैतत् । अम्बुनि मज्जन्त्यलाबूनि, ग्रावाणः प्लवन्ते ।

---

१. अहो, परागत एव । हा धिक् हा धिक् । उत्पातपातावलिरिव सा हताशा महानुभावमभिद्रवति ।

२. अये, स्वयमेव तातः प्रस्थितः ।

३. आश्चर्यमाश्चर्यम् । प्रियं नः प्रियं नः ।

---

कावधार्य रामो रङ्गस्थलान्निष्क्रान्त इत्यर्थः ॥ उत्पातवातावलिरनर्थसूचिका चक्रवात्या । हताशा दुष्टाशया ॥ धनुरास्फाल्य धनुष्टंकृत्य । आः इति कोपे । 'आस्तु स्यात्कोपपीडयोः' इत्यमरः ॥ तातः कुशध्वजः । **हृन्मर्मेति** ॥ हृदो हृदयस्य वक्षःस्थलस्य मध्यं भिन्दन्तीति हृन्मर्मभेदिनः । तथाविधैः पतद्भिर्गच्छद्भिरुत्कटैरुदग्रैः कङ्कपत्रैः । 'कङ्कपत्रः शिलीमुखः' इत्यमरः । संवेगेन संभ्रमेण तत्क्षणे पतनक्षणे कृतो जनितः स्फुटतां दलतामङ्गानां भङ्गो नाशो यस्याः सा तथोक्ता । 'समौ संवेगसंभ्रमौ' इत्यमरः । ह्रस्वा कुटी कुटीरः । 'कुटीशमीशुण्डाभ्यो रः' इति रप्रत्ययः । नासैव कुटीरो नासाकुटीरः । तस्य कुहरयो रन्ध्रयोः । 'कुहरं सुषिरं विवरं बिलम्' इत्याद्यमरः । द्वयाद्युग्मात्तुल्यं युगपन्निर्यन्निर्गच्छन्नुद्बुद्बुदोऽतिशयितबुद्बुदयुक्तो ध्वनञ्शब्दयुक्तश्चासृजां रक्तानां प्रसरः प्रवाहो यस्याः सा तथोक्ता मृतैव । ताटकेति शेषः ॥ ३९ ॥ आदराद्विरुक्तिः—प्रियं नः प्रियं न इति ॥ दृढप्रहारिता निष्ठुरप्रहारकर्तृता । आहो । विस्मयनीयेत्यर्थः ॥ **आर्ये इति** । स्वयं वृद्धो राक्षसः स्वापेक्षयापि कालज्यैष्ठ्यात्ताटकामार्ये इति संबोधयति । एतन्मानुषान्मरणम् । अलाब्वाः फलान्यलाबूनि । 'फले लुक्'

ननु अद्य राक्षसपतेः स्खलितः प्रतापः
प्राप्तोऽद्भुतः परिभवोऽद्य मनुष्यपोतात् ।
दृष्टः स्थितेन च मया स्वजनप्रमारो
दैन्यं जरा च निरुणद्धि कथं करोमि ॥ ४० ॥

**विश्वामित्रः**—(स्वगतम् ।) एष तावदोंकारः सकलराक्षससंहारनिगमाध्ययनस्य ।

**राक्षसः**—अयि भोः, किमस्मासु वः प्रतिवचनम् ।

---

इति विकारप्रत्ययस्य लुक् । 'तुम्ब्यलाबूरुभे समे' इत्यमरः । तानि हि शुष्काणि लाघवातिशयाज्जले प्रक्षिप्तानि प्लवनस्वभावानि भवन्ति । ग्रावाणः शिला अम्बुनि प्लवन्ते तरन्ति । ते हि गुरुत्वातिशयाज्जले प्रक्षिप्ता मज्जनस्वभावा भवन्ति । तेषामुभयेषामपि प्रतिनियतस्वभावविपर्यासो यथात्यन्तासंभाव्यः, तथैवात्यन्तासंभाव्योऽप्ययं मानुषराक्षसयोः स्वभावविपर्यासोऽद्य कालदोषात्संभावित इत्यर्थः । मानुषस्य राक्षसवध्यत्वं स्वभावः, राक्षसस्य तु मानुषघातकत्वम् । इति स्वभावप्रतिनियमेऽप्यनयोरद्य वध्यघातकभावो विपर्यस्त इति भावः । उक्तं च—'मानुषान्घ्नन्ति राक्षसाः' । 'अप्सु प्लवन्ते पाषाणाः' इति रूपकातिशयोक्तिरियम् । उपमानभूतेनालाबुमज्जनादिनोपमेयस्य मानुषकर्तृकराक्षसवधस्य निगरणात् 'रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसानतः' इति लक्षणात् । उपमानं चेहासंभावितमित्यसंभावितोपमा व्यज्यते । 'चन्द्रबिम्बादिव विषं चन्दनादिव चानलः । परुषा वागतो वक्त्रादित्यसंभावितोपमा ॥' इति ह्युक्तम् । **नन्वित्यादि** । राक्षसपते रावणस्य प्रतापः शत्रुतापनस्वभावोऽद्य स्खलितो ननु । अद्य भ्रष्ट एवेत्यर्थः । 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' इत्यमरः । अद्भुतो विस्मयनीयो मनुष्यपोतान्मनुष्यशिशोः परिभवस्तिरस्कारो राक्षसपतेरित्यनुषङ्गः । रावणस्याद्यागत इत्यर्थः । किंच स्थितेन स्वामिकार्यार्थं स्थितवता मया स्वजनप्रमारो राक्षसवधो दृष्टः । दैन्यं याञ्चया क्षीणसत्त्वता जरा वयोहानिश्च निरुणद्धि प्रतिचिकीर्षुर्मां निवर्तयति । कथं करोमि । किं करोमीत्यर्थः ॥ ४० ॥ एष ताटकावधः सकलराक्षससंहार एव सुबाहुप्रभृतिरावणपर्यन्तसर्वराक्षसवध एव निगमाध्ययनं स्वाध्यायाध्ययनं तस्य 'निष्कारणं षडङ्गो वेदोऽध्येयः' इति नित्यत्वात्पुरुषार्थसाधनत्वाच्च स्वाध्यायाध्ययनस्य राक्षससंहारोऽपि क्षत्रियस्य रामस्य नित्यः पुरुषार्थसाधनभूतश्चेति बोधयितुं तस्य निगमाध्ययनरूपणं कृतम् । ॐकारः प्रणवोच्चारणरूपः । 'ब्रह्मणः प्रणवं कुर्यादादावन्ते च नित्यशः । स्रवत्यनोंकृतं ब्रह्म परस्ताच्च विशीर्यते ॥' इत्युक्तरीत्या प्रणवो यथा स्वाध्यायाध्ययनप्रारम्भभूतोऽध्ययनप्रतिष्ठापनश्च भवति, तद्वत्ताटकावधोऽपि करिष्यमाणसर्वराक्षसवधप्रारम्भभूतस्तत्प्रतिष्ठापकश्च भवतीति तस्योंकारत्वरूपणं कृतम् ॥ अस्मासु मयि मत्स्वामिनि च । द्वित्वे बहुवचनम् ॥

**विश्वामित्रः**—

अत्र सीरध्वजो वेत्ता कनिष्ठो हि कुशध्वजः ।
अस्याः पिता स कन्यायाः कुलज्येष्ठः प्रभुश्च सः ॥ ४१ ॥

**राक्षसः**—सोऽप्याह कुशध्वजो जानाति कौशिकश्चेति ।

**विश्वामित्रः**—(स्वगतम् ।) अस्यायमवसरो दिव्यास्त्रमङ्गलानां दानस्य वर्तते मङ्गल्यो मुहूर्तः । (प्रकाशम् ।) सखे कुशध्वज, यानि हि भगवतः कृशाश्वाद्गुरुचर्याव्रतैरधीतस्य सरहस्यजृम्भकप्रयोगसंहारस्य दिव्यास्त्रमन्त्रपारायणस्य विद्यातत्त्वबीजानि, तानि मत्प्रसादादर्थतः शब्दात्मना च रामभद्रस्य संप्रति प्रकाशन्ताम् ।

---

**अत्रेति** । अत्र कन्यारत्नमित्यादित्वदुक्तरावणसंदेशे विषये सीरध्वजो जनको वेत्ता । प्रतिवचनमिति शेषः । 'विद ज्ञाने' इत्यस्माल्लुट् प्रथमपुरुषः । कुशध्वजोऽयं प्रतिवक्तुमित्यत्राह—कनिष्ठ इति । कुशध्वजः कनिष्ठ इति त्वमपि जानास्येवेत्यर्थः । भ्रात्रोः संसृष्टत्वात्कनिष्ठोऽपि वक्त्वित्यत्राह—अस्या इति । स सीरध्वजोऽस्याः कन्यायाः पिता । कन्यादाने हि पितुरेवाधिकारो न पितृव्यादेरिति भावः । कन्येयं तस्यानौरसी । क्षेत्रलब्धत्वप्रयुक्तप्रत्यासत्तिस्तूभयोरपि शिष्टेत्यत्राह—कुलेति । स सीरध्वजः कुले वंशे ज्येष्ठः कालतो गुणतश्चाधिकः । स एव प्रभुः स्वामी च भवति । क्षत्रियेषु ज्येष्ठस्यैव भूमिस्वाम्यात्क्षेत्रलब्धापीयं तेनैव प्रतिपाद्येति भावः ॥ ४१ ॥ सोऽपि सीरध्वजो जानाति प्रतिवचनमिति शेषः । अतस्तदनुमते कुशध्वजः प्रतिवक्त्वेवेति राक्षसाभिप्रायः ॥ इदानीं विश्वामित्रः प्रकारान्तरेण प्रतिवचनस्य विरचयति—**अस्येत्यादि** । दिव्यास्त्राण्येव जृम्भकास्त्राण्येव मङ्गलानि तेषां दानस्यास्य रामस्यायमवसरः प्राप्तकालः । मङ्गले साधुर्मङ्गल्यः । 'तत्र साधुः' इति यत्प्रत्ययः । यानीत्यादि । भगवतो ज्ञानादिपूर्णात्कृशाश्वात्कृशाश्वनाम्नो मुनेः । 'आख्यातोपयोगे' इति पञ्चमी । गुरोश्चर्या गुरुचर्याः काष्ठोदकाद्याहरणानि गुरोः कर्माणि ता एव व्रतान्यवश्यानुष्ठेयधर्मास्तैरधीतस्य प्राप्तस्य । रहस्यमुपदेशैकगम्यं कवचपञ्जरादिकम् । प्रयोगः प्रेषणम् । संहारः प्रत्यावर्तनम् । जृम्भकास्त्राणां प्रयोगसंहारौ जृम्भकप्रयोगसंहारौ । रहस्यं च जृम्भकास्त्रप्रयोगसंहारौ च रहस्यजृम्भकप्रयोगसंहाराः । तैः सहितस्येत्यर्थः । दिव्यास्त्रमन्त्राणां दिव्यास्त्रप्रकाशकोपनिषद्भागविशेषाणां पारायणस्यादित आरभ्यान्तादविच्छेदेनाध्येयसमुदायस्य यानि विद्यातत्त्वबीजानि विद्यातत्त्वस्य विद्यावस्तुनो बीजानि बीजशक्तिकीलकादिषु मन्त्रशास्त्रपरिगणितेषु मन्त्राङ्गेषु बीजरूपाण्यङ्गानि । भवन्तीति शेषः । तानि मत्प्रसादान्मदनुग्रहात् । गुरुचर्याव्रताभावेऽपीत्यर्थः । अर्थतो वाच्यभूततत्तद्देवतात्मना शब्दात्मना च वाचकशब्दस्वरूपेण च प्रकाशन्तां प्रत्यक्षीभवन्तु । 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' इत्यनेन विधौ लोट् ।

ब्रह्मादयो ब्रह्महिताय तप्त्वा
परःसहस्रं शरदस्तपांसि ।
एतान्यदर्शन्गुरवः पुराणाः
स्वान्येव तेजांसि तपोमयानि ॥ ४२ ॥

**राजा**—अनुगृहीतं रघुकुलम् ।

**लक्ष्मणः**—दिष्ट्या देवदुन्दुभिध्वनिः पुष्पवृष्टिश्च ।

**राक्षसः**—(आत्मगतम् ।) दिवौकसोऽपि राजविरुद्धमनुतिष्ठन्ति ।

**लक्ष्मणः**—कथम् ।

झटित्येवोत्तप्तद्रुतकनकसिक्ता इव दिशः
पिशङ्गत्वात्संध्यान्तरित इव निर्भाति दिवसः ।
ज्वलत्केतुव्रातस्थगितमिव दिव्यास्त्रनिचितं
नभो नैरन्तर्यप्रचलिततडित्पिञ्जरमिव ॥ ४३ ॥

---

**ब्रह्मादय इति** । पुराणाः पुरातना गुरवो विद्योपदेष्टारो ब्रह्मादयश्चतुर्मुखादयो ब्रह्महिताय वेदहिताय ब्राह्मणहिताय वा परःसहस्रं सहस्रात्परम् । सुप्सुपेति समासः । पारस्करादित्वात्सुट् । राजदन्तादित्वात्परनिपातः । 'विंशत्याद्याः सदैकत्वे' इत्येकत्वम् । सहस्रसंख्याधिकसंख्याकाः शरदः संवत्सरान् । 'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः' इत्यमरः । अत्यन्तसंयोगे द्वितीया । यद्यपि 'अपवर्गे तृतीया' इति फलप्राप्तौ विवक्षितायामत्यन्तसंयोगे तृतीयया भवितव्यम्, तथापि यत्र तृतीययैव फलप्राप्तिर्विवक्षिता तत्रैव सा । यथा 'अह्ना क्रोशेन वानुवाकोऽधीतः' इत्यादौ । अत्र शब्दान्तरेण फलप्राप्तेर्विवक्षितत्वादत्यन्तसंयोगमात्रे द्वितीयैव । तपांसि कायशोषणानि कर्माणि तप्त्वा कृत्वा । पाकं पचतीतिवन्निर्देशः । तपोमयानि तपस आगतानि । 'तत आगतः' इत्यधिकारे 'मयट् च' इति मयट् प्रत्ययः । स्वानि स्वकीयानि तेजांसि बलान्येतानि जृम्भकास्त्राणि । विधेयविशेषणमिदम् । अदर्शन्नपश्यन् । कार्यकारणभावात्तपसामस्त्राणां चाभेददर्शनम् । 'दृशिर् प्रेक्षणे' । लुङ्लादङ् । 'ऋदृशोऽङि गुणः' इति गुणः । तपोमयानीत्यत्र स्वार्थिको मयट् ॥४२॥ दिष्ट्येत्यानन्दे । देवदुन्दुभीनां ध्वनिः । 'भेरी स्त्री दुन्दुभिः पुमान्' इत्यमरः । दिवीति शेषः । पुष्पवृष्टिश्च । देवानामिति शेषः । पूर्वत्र श्रूयत इति, अपरत्र पततीति क्रियापदमध्याहर्तव्यम् । राजविरुद्धं रावणानभिमतं दुन्दुभिताडनादिकमनुतिष्ठन्ति कुर्वन्ति ॥ कथमिति विस्मये । **झटितीत्यादि** । दिश उत्तप्तेनात्यन्तानलसंयुक्तेनात एव द्रुतेन द्रवत्वगुणवता कनकेन स्वर्णेन सिक्ता इव क्षरिता इव झटित्येवास्मिन्नेव क्षणे । भवन्तीति शेषः । दिव्यास्त्रदेवताकान्तिभिरावृतत्वाद्दिशामेवंविधत्वम् । दिवसः पिशङ्गत्वात्कपिलत्वात् । 'कडारः कपिलः पिङ्गपिशङ्गौ' इत्यमरः । संध्यया संध्या-

अपि च ।

तेजोभिर्दिशिदिशि विश्वतः प्रदीप्तै-
राद‍ित्यद्युतिमपविध्य विस्फुरद्भिः ।
पर्यायत्वरितगृहीतविप्रमुक्तः
सामर्थ्यं रहयति नायनो मयूखः ॥ ४४ ॥

**कन्ये—**[1]समन्तदो पज्जलिदविज्जुप्पुञ्जपिञ्जरेण उब्भमन्ति विअ लोअणाइं प्पहापरिप्पन्देण ।

**राक्षसः—**अहो, दुरासदं दिव्यास्त्रतेजः स्त्यायति । येन रावणपुरंदरद्वन्द्वसंरम्भं सारितोऽस्मि ।

सर्वप्राणप्रवणमघवन्मुक्तमाहत्य वक्ष-
स्तत्संघट्टाद्विघटितबृहत्खण्डमुच्चण्डरोचिः ।
एवं वेगात्कुलिशमकरोद्व्योम विद्युत्सहस्रै-
र्भर्तुर्वक्त्रज्वलनकपिशास्ते च रोषाट्टहासाः ॥ ४५ ॥

---

१. समन्ततः प्रज्वलितविद्युत्पुञ्जपिञ्जरेणोद्भ्रमत इव लोचने प्रभापरिस्पन्देन ।

---

रागेणान्तरित एव तिरोहित एव निर्भाति प्रकाशते । अत्रापि दिव्यास्त्रदेवताकान्तयोऽभिप्रेताः । दिव्यास्त्रैर्दिव्यास्त्रदेवताभिर्निचितं व्याप्तं नभोऽन्तरिक्षं ज्वलद्भिर्दीप्तैः केतुव्रातैर्ध्वजसमूहैः स्थगितमिव च्छादितमिव । किंच नैरन्तर्येण नीरन्ध्रतया प्रचलिताभिस्तडिद्भिः पिञ्जरमिव पिशङ्गवर्णयुक्तमिव । 'पिञ्जरं कनके क्लीबं पीते त्रिषु हये पुमान्' इति रत्नमाला ॥ ४३ ॥ भवतीति शेषः । **तेजोभिरित्यादि** । दिशिदिशि सर्वासु दिक्षु विश्वतः सर्वस्मिन्देशे । 'सार्वविभक्तिकस्तसिः' इति सप्तम्यर्थे तसिः । प्रदीप्तैः प्रकाशमानैरादित्यद्युतिं सूर्यकान्तिमपविध्य प्रतिहत्य विस्फुरद्भिः प्रकाशमानैः । 'स्फुरतिस्फुलत्योर्निर्निविभ्यः' इत्यनेन षत्वम् । तेजोभिर्दिव्यास्त्रतेजोभिर्हेतुभिः पर्यायेण क्रमेण त्वरितं यथा तथा गृहीतो ग्रस्तो विप्रमुक्तो विसृष्टश्च । खञ्जकुब्जादिवद्विशेषणसमासः । नायनो नेत्रसंबन्धी । शैषिकोऽण्प्रत्ययः । मयूखो रश्मिः सामर्थ्यं पदार्थग्रहणशक्तिं रहयति त्यजति । 'रह त्यागे' चौरादिकः ॥ ४४ ॥ प्राकृते द्विवचनाभावात्तत्स्थाने बहुवचनम् 'सिद्धिर्लोकाच्च' इति प्राकृतव्याकरणसिद्धम् ॥ दुरासदं दुष्प्रापम् । स्त्यायति संघातीभवति । 'स्त्यै शब्दसंघातयोः' इत्यतो लट् प्रथमपुरुषः । येन तेजसा द्वन्द्वसंरम्भं द्वन्द्वयुद्धोद्योगम् । **सर्वेत्यादि** । सर्वेण समस्तेन प्राणेन बलेन प्रवणं यथा तथा प्रह्वं यथा तथा । 'देहान्तरनिले प्राणो जीवात्मपरमात्मनोः । आयुरिन्द्रियसत्त्वेषु' इति रत्नमाला । 'प्रवणं क्रमनिम्नोर्व्यां प्रह्वे' इत्यमरः ।

**विश्वामित्रः**—अभिवन्दस्व रामभद्र, दिव्यास्त्राणि ।

ब्रह्मेन्द्रद्रविणेशरुद्रवरुणप्राचीनबर्हिर्मरु-
त्कालाग्निव्यतिरेकिणां भगवतामाम्नायमन्त्रात्मनाम् ।
एतेषां तपसामिवाप्रतिहतैस्तेजोभिरुत्कर्षिणा-
मेकैकस्य जगत्त्रयप्रमथनत्राणावधिर्योग्यता ॥ ४६ ॥

(नेपथ्ये।)

एष प्रह्वोऽस्मि भगवन्नेषा विज्ञापना च नः ।
दिव्यास्त्रसंप्रदायोऽयं लक्ष्मणेन सहास्तु मे ॥ ४७ ॥

**विश्वामित्रः**—रामभद्र, तथास्तु ।

**लक्ष्मणः**—अहो प्रसादः ।

झटित्युन्मीलितप्रज्ञमप्रतर्क्यं च शक्तिभिः ।
ज्योतिर्मयमिवात्मानं मन्ये विद्याप्रकाशनात् ॥ ४८ ॥

---

मघवतेन्द्रेण मुक्तम् । कुलिशविशेषणमिदम् । वक्षो रावणवक्षः कर्म । आहत्य संताड्य तत्संघट्टाद्रावणवक्षःसंमर्दाद्विघटिता विशकलिता बृहन्तः स्थूलाः खण्डाः शकलानि यस्य तं तथोक्तमुच्चण्डं करालं रोचिस्तेजो यस्य तथोक्तम् । कुलिशं कर्तृ । विद्युत्सहस्रैः स्वशकलात्मकतडित्सहस्रैः करणैः । व्योम नभः कर्म । एवं दिव्यास्त्रतेजःपिञ्जरितमिवाकरोत् । किंच ते पूर्वानुभूता वक्त्रज्वलनेन मुखाग्निना कपिशा धूम्रा भर्तू रावणस्य रोषेण कोपेनाट्टहासाः शुष्कहासाः । 'अट्टस्त्वट्टालके पूरे भृशशुष्के त्वयं त्रिषु' इति रत्नमाला । व्योम कर्म एवमकुर्वन् । अकरोदित्यस्यानुषङ्गः, विपरिणामश्च । अतो द्वन्द्वसंरम्भं स्मारितोऽस्मीति संबन्धः ॥ ४५ ॥ अभिवन्दस्वाभिवादयस्व । 'वदि अभिवादनस्तुत्योः' । **ब्रह्मेति** । ब्रह्मा चतुर्मुखः, इन्द्र उपेन्द्र इन्द्रो वा, द्रविणेशः कुबेरः, रुद्र ईशः, वरुणः प्रचेताः, प्राचीनबर्हिः सुरेन्द्रः । यद्वा प्राचीनबर्हिर्नाम प्रजापतिः । तदुक्तं पुराणरत्ने—'प्राचीनबर्हिर्भगवान्महानासीत्प्रजापतिः' इति । मरुद्वायुः, कालो यमः, अग्निरनलः, इत्येतेभ्यो व्यतिरेकिणामधिकानां भगवतां ज्ञानशक्त्यादिपूर्णानामाम्नायमन्त्राणामाथर्वणवेदमन्त्राणामात्मनां प्राणभूतानामप्रतिहतैरकुण्ठितैस्तेजोभिर्दीप्तिभिर्बलैर्वा तपसामिवैतद्धेतुभूततपोवदुत्कर्षिणामतिशयवतामेतेषामस्त्राणां मध्य एकैकस्यैकस्यैकस्य योग्यता सामर्थ्यं जगत्त्रयस्य प्रमथनं विध्वंसनं त्राणं रक्षणमित्येतेऽवधिः काष्ठा यस्याः सा तथोक्ता । भवतीति शेषः ॥ ४६ ॥ **एष इति** । प्रह्वोऽस्मि प्रणतोऽस्मि । दिव्यास्त्रसंप्रदायो दिव्यास्त्राणां प्राथमिकं दानम् । उपदेश इति यावत् । लक्ष्मणेन सहास्तु । ममेव लक्ष्मणस्याप्यस्त्विति भावः ॥ ४७ ॥ **झटितीति** । आत्मानम् । मामित्यर्थः । विद्याया अस्त्रविद्यायाः प्रकाशनात्साक्षात्काराज्झटिति शीघ्रमुन्मीलिता निखिलवस्तुग्राहिनी

(नेपथ्ये ।)

राम राम महाबाहो वयं त्वयि यतामहे ।
विश्वामित्राभ्यनुज्ञानात्सह भ्रात्रा प्रशाधि नः ॥ ४९ ॥

**कन्ये**—अहो, देवदाओ मन्तेन्ति । अच्चरिअं अच्चरिअम् ।

(नेपथ्ये ।)

भगवन्तो दिव्यास्त्रनिकायाः,
विश्वामित्रात्प्राप्य विश्वस्य मित्रा-
त्पुण्यैर्युष्मानद्य रामः कृतार्थः ।
ध्यातैर्ध्यातैः संनिधेयं भवद्भिः
स्वं स्वं स्थानं यात यूयं नमो वः ॥ ५० ॥

---

१. अहो, देवता मन्त्रयन्ते । आश्चर्यमाश्चर्यम् ।

---

प्रज्ञा प्रकटं ज्ञानं यस्य स तथोक्तस्तम् । शक्तिभिर्दुष्करकार्यनिर्वाहकैः सामर्थ्यैरप्रतर्क्य-मितरसजातीयतया चिन्तयितुमनर्हम् । किंच ज्योतिर्मयमिव प्रकाशप्रचुरमिव । 'तत्प्रकृतवचने मयट्' इति प्राचुर्ये मयट् । विधेयविशेषणानीमानि । मन्ये । निश्चिनोमीत्यर्थः ॥ ४८ ॥ **राम रामेति** । 'वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु' इति प्रीत्यतिशये द्विरुक्तिः । विश्वामित्राभ्यनुज्ञानाद्विश्वामित्रानुमतेर्हेतोर्वयं त्वयि यतामहे आयतामहे । त्वदधीना भवाम इत्यर्थः । 'अधीनो निघ्न आयत्तः' इत्यमरः । अभ्यनुज्ञापदेन दिव्यास्त्राणां रामायत्तत्वं स्वारसिकमिति गम्यते । सह भ्रात्रेति पूर्वोत्तरान्वयि । भ्रातरि त्वयि चायत्ता इत्यर्थः । सह भ्रात्रा प्रशाधि नः । अस्मांस्तव भ्राता लक्ष्मणः कर्तव्यान्याज्ञापयतु । त्वमपि कर्तव्यान्याज्ञापयेत्यर्थः । 'शासु अनुशिष्टौ' इत्यस्मात्प्रपूर्वकाल्लोण्मध्यमः ॥ ४९ ॥ देवता मन्त्रयन्त इत्याश्चर्यम् । 'मत्रि गुप्तभाषणे' इति चौरादिक आत्मनेपदी ॥ **भगवन्त इति** । भगवन्तो ज्ञानशक्त्यादिपूर्णा दिव्यास्त्रनिकाया दिव्यास्त्रसमूहा इति संबोधनम् । पुण्यैः सुकृतैर्युष्मान्विश्वस्य मित्रात्सर्वसुहृदो विश्वामित्रात्कौशिकात् । विश्वस्य मित्रं विश्वामित्रः । 'मित्रे चर्षौ' इति पूर्वपदस्य दीर्घः । शब्दस्वभावात्पुंस्त्वम् । 'आख्यातोपयोगे' इति पञ्चमी । विश्वस्य मित्रमित्यवयवार्थो व्युत्पत्तिमात्रोपयोगी प्रयोगस्थलेषु वैवक्षिकः । यथा 'सप्तसप्तर्षयो माला' इति सप्तत्वस्य पृथग्विवक्षया सप्तेति पृथक्प्रयोगः । अत एव 'गमेर्डोस्' इति गच्छतीत्यर्थे व्युत्पन्नस्य गोपदस्य गच्छतीत्यनेन पौनरुक्त्यं तिष्ठतीत्यनेन व्याघातश्च नेत्याचार्यचरणाः । इह च विश्वेषामस्माकं चामित्रो विश्वामित्र इति प्रतिपक्षजनाभिमतव्युत्पत्तेर्व्यावृत्त्यर्थः । प्राप्य लब्ध्वा । रामोऽद्य कृतार्थः । रामवचनमिदम् । अहमद्य लब्धसर्वपुरुषार्थ इत्यर्थः । भवद्भिः सर्वप्रकारपूज्यैर्युष्माभिर्ध्यातैः सद्भिस्तदा तदा संनिधानार्थं चिन्तितैः सद्भिः संनिधेयं संनिधिः कार्यः । अकर्मकत्वाद्भावे यत् । 'नित्यवीप्सयोः' इति वीप्सायां

**लक्ष्मणः**—आर्यवचनादन्तरितान्यस्त्राणि ।

**राजा**—भगवन्महाद्भुतनिधे कुशिकनन्दन, नमस्ते ।

ज्वलिततपसस्तेजोराशेर्जगत्यमितौजस-
स्तव निरवधौ माहाभाग्ये कृतस्तुतिसाहसः ।
प्रमितिविषयां शक्तिं विन्दन्न वाचि न चेतसि
प्रतिहतपरिस्पन्दः स्तोता विपद्य घृणीयते ॥ ५१ ॥

तत्स्पृहयामि युष्मदनुगृहीतरामभद्रालंकृताय दशरथाय राज्ञे । वयं पुनरार्येण वञ्चिता यदीदृशेन जामात्रा न संयुज्यामहे ।

---

द्विरुक्तिः । वीप्सा च व्यापकत्वं व्याप्तिश्च । कालिकतया यदा यदा मया ध्यानं क्रियते तदा मम युष्माभिः संनिधानं कार्यमित्यर्थः । यूयं स्वं स्वं स्थानं यात गच्छत । 'या प्रापणे' इत्यस्माल्लोण्मध्यमबहुवचनम् । वो युष्मभ्यं नमः । 'नमःस्वस्ति-' इत्यादिना चतुर्थी ॥ ५० ॥ आर्यवचनाद्रामवचनात् । अन्तरितान्यन्तर्हितानि ॥ महाद्भुतनिधे महाश्चर्यनिधे । **ज्वलितेति** । ज्वलितानि प्रकाशमानानि तपांसि कृच्छ्रादीनि यस्य स तथोक्तस्तस्य तेजसां पराभिभवनसामर्थ्यानां राशेः समुदायभूतस्यामितान्यसंख्यातान्योजांसि ज्ञानानि बलानि यस्य स तथोक्तस्तस्य । 'ओजः शब्दगुणे ज्ञाने बले गर्वप्रकाशयोः' इति रत्नमाला । तव निरवधावपरिच्छिन्ने माहाभाग्ये महाभागत्वे विषये कृतं स्तुतिसाहसं स्तुतिविषयसाहसप्रवृत्तिर्येन स तथोक्तः । अविमृश्य स्तुतौ प्रवृत्त इत्यर्थः । स्तोता स्तुतिकर्ता वाचि प्रमितिविषयां स्तुत्यनुगुणयथार्थज्ञानसंबन्धिनीं शक्तिं समर्थतां न विन्दन्नलभमानश्चेतसि च मनसि च प्रमितिविषयां शक्तिं न विन्दन्सन्प्रतिहतः परिस्पन्दः किंचित्प्रवृत्तिरपि यस्य स तथोक्तश्च सन् । यद्वा प्रतिहतः परिस्पन्दो रचना यस्य स तथोक्तः । 'रचना स्यात्परिस्पन्दः' इत्यमरः । विपद्य विपदं प्राप्य जगति लोके घृणीयते घृणां प्राप्नोति । 'घृणा जुगुप्सा कृपयोः' इति रत्नमाला । यद्वा मामसमीक्ष्यकारिणमिति स्वात्मानं गर्हते । विषयप्रभावमपर्यालोच्य वराकोऽयं स्तुतौ प्रवृत्तो दुःख्यतीति विशेषज्ञैः कृपाविषयीक्रियन्त इति वार्थः । 'घृणिङ् रोषणे लज्जायां च' इत्यस्मात् 'कण्ड्वादिभ्यो यक्' इति यकि दीर्घे च सति ङित्वादात्मनेपदे च घृणीयत इति रूपम् । धातूनामनेकार्थत्वाज्जुगुप्साकृपयोर्वृत्तिः ॥ ५१ ॥ **तदिति** । तस्माद्युष्माभिरनुगृहीतेन दिव्यास्त्रप्रदानहेतुभूतविषयीकृतेन रामभद्रेणालंकृताय शोभिताय । युक्तायेति यावत् । राज्ञे दशरथाय स्पृहयामि दशरथविषयकस्पृहावान्भवामि । 'स्पृह ईप्सायाम्' चुरादौ कथादिः । 'स्पृहेरीप्सितः' इति संप्रदानसंज्ञायां चतुर्थी । वयं पुनर्वयं त्वार्येण सीरध्वजेन वञ्चिता अपहृतपुरुषार्थाः । भवाम इति शेषः । ईदृशेनाप्रतिमप्रभावेन जामात्रा पुत्रीपतिना न संयुज्यामहे । यदि संयुक्ता न भवामश्चेद्दुष्करधनुरारोपणपणकरणेन हेतुना सीरध्वजेन वयं वञ्चिता इति संबन्धः । 'युज समाधौ' इति दैवादिकाल्लडुत्तमबहुवचनम् ।

**विश्वामित्रः**—किमद्याप्यसंभावनेयमस्मासु ।

**राजा**—नहि नहि ।

**विश्वामित्रः**—

शंभोर्वरादनुध्यानमात्रोपस्थानदायि वः ।
रामभद्रस्य पुरतः प्रादुर्भवतु तद्धनुः ॥ ५२ ॥

**राजा**—एवमस्तु । (ध्यात्वा प्रणमति ।)

**राक्षसः**—(स्वगतम् ।) एभिरन्यदेव किमपि प्रस्तुतम् । (प्रकाशम् ।) प्रभो कुशध्वज, कियच्चिरमनादृतोऽस्मि ।

**राजा**—उक्तमेतत्सीरध्वजो जानातीति ।

(नेपथ्ये कलकलः ।)

स्फूर्जद्वज्रसहस्रनिर्जितमिव प्रादुर्भवत्यग्रतो
रामस्य त्रिपुरान्तकृद्दिविषदां तेजोभिरिद्धं धनुः ।

**सीता**—(स्वगतम् ।) [1]संपदं संसइदह्मि ।

**राजा**—

शुण्डारः कलभेन यद्वदचले वत्सेन दोर्दण्डक-
स्तस्मिन्नाहित एव—

---

१. सांप्रतं संशयितास्मि ।

---

समित्युपसर्गवशाच्च संयोगार्थकत्वम् ॥ अद्यापि ताटकावधजृम्भकास्त्रोपदेशानन्तरमपीयं यदि न संयुज्यामह इति पूर्ववाक्यप्रस्तुतासंभावनास्थानसंभावना उत्कटैककोटिकसंशयरूपा संभावना । अस्मासु मयि रामलक्ष्मणयोश्च ॥ नहि नहि । असंभावनेत्यनुषङ्गः ॥ **शंभोरिति** । शंभोर्वराद्रुद्रवराद्वो युष्माकम् । अनुध्यानमात्रेण चिन्तनमात्रेणोपस्थानदायि गमनदायि । अनुचिन्तनमात्रेण संनिधानशीलमित्यर्थः । 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः । तत् शंभोर्धनुः कर्तृ, रामभद्रस्य पुरतः प्रादुर्भवतु संनिधत्ताम् ॥ ५२ ॥ एवमस्तु भवदुक्तं स्यात् ॥ एभिर्विश्वामित्रादिभिरन्यदेवास्मद्विरुद्धमेव प्रस्तुतं प्रक्रान्तम् । कियच्चिरं कियन्तं दीर्घकालम् । अनादृतोऽस्मि प्रतिवचनानुक्त्या परिभूतोऽस्मि ॥ एतत्प्रतिवचनम् ॥ **स्फूर्जदिति** । दिविषदां देवतानां तेजोभिः प्रभावैः कान्तिभिर्वा । 'तेजः प्रभावे दीप्तौ च' इत्यमरः । इद्धं दीप्तम् । 'ञिइन्धी दीप्तौ' इत्यस्मात्कर्तरि क्तः । त्रयाणां पुराणां समाहारस्त्रिपुरं तस्यान्तं नाशं करोतीति त्रिपुरान्तकृत् । रौद्रत्वादिति भावः । धनुः कर्तृ । स्फूर्जतां शब्दतां वज्राणां दम्भोलीनां सहस्रं निर्जितं तिरस्कृतं येन तथोक्तम् । आहिताग्न्यादेराकृतिगणत्वान्निर्जितशब्दस्य परनिपातः । 'निर्मितमिव' इति पाठे सृष्टमिव ।

**ऊर्मिला**—[1]अवि णाम एदं भवे ।

**राजा**—

गर्जितगुणं कृष्टं च—

**ऊर्मिला**—(हृष्टां लज्जितां सीतामालिङ्ग्य ।) [2]दिट्ठिआ वड्ढामो ।

**राजा**—(साद्भुतम् ।)

भग्नं च तत् ॥ ५३ ॥

**राक्षसः**—(स्वगतम् ।) अहो, दुरात्मनो रामहतकस्य सर्वंकषः प्रभावः।

**लक्ष्मणः**—

दोर्लीलाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत-
टंकारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः ।
द्राक्पर्यस्तकपालसंपुटमितब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥ ५४ ॥

---

१. अपि नामैतद्भवेत् ।

२. दिष्ट्या वर्धामहे ।

---

स्थितमित्यर्थः । रामस्याग्रतः प्रादुर्भवति रामस्य पुरतः प्रकाशते ॥ एतच्छ्रुत्वा सीता-वाक्यम्—सांप्रतं संशयितास्मीति । रामस्तदारोपयिष्यति न वेति संदेहवत्यस्मि ॥ अनन्तरं राजवाक्यम्—कलभेन गजपोतेन शुण्डारः करिहस्तः । 'शुण्डा करिकरे मद्ये' इति वैजयन्ती । 'अल्पे' इत्यनुवर्तमाने 'कुटीशमीशुण्डाभ्यो रः' इति शुण्डाशब्दाद्रप्र-त्ययः । अल्पा शुण्डेत्यर्थः । 'त्रयं शुण्डं च शुण्डा च शुण्डारश्चेति कथ्यते' इति त्रिरू-पकोशः । अचले यद्वत्पर्वत इव वत्सेन रामेण बालेन दोर्दण्डकोऽल्पो दोर्दण्डः । 'अल्पे' इति कन्प्रत्ययः । तस्मिन्धनुष्याहित एव निहित एव ॥ एतच्छ्रुत्वोर्मिला वाक्यम्—अपि नामैतद्भवेदिति । एतद्धनुषि रामभद्रेण दोर्दण्डनिधानम् ॥ पुना राजवाक्यम्—**गर्जितेति** । तद्धनुर्गर्जितः शब्दयुक्तो गुणो मौर्वी यस्मिन्कर्मणि तद्यथा तथा कृष्टं च । मौर्व्यारोपणेनाकृष्टमित्यर्थः । एतच्छ्रुत्वा पुनरप्यूर्मिलावाक्यम् । हृष्टां रामाय स्वप्रदानात्, लज्जितां मौग्ध्यात् । दिष्ट्येत्यानन्दे । वर्धामहे वृद्धिं प्राप्नुमः ॥ पुनरपि राजवाक्यमेतत्—तद्धनुर्भग्नं चामर्दितम् । वत्सेनेत्यनुषङ्गः । उपमानं कलभः । उपमेयं वत्सः । तदनुसारेण शुण्डारो दोर्दण्डक इत्यल्पार्थप्रत्ययौ प्रयुक्तौ । इदं चाश्चर्यातिशयख्यापनार्थम् ॥ ५३ ॥ सर्वं कषतीति सर्वंकषः । 'सर्वकूलाभ्रकरी-षेषु कषः' इति खच्प्रत्ययः । प्रभावस्तेजः । ताटकानिरसनरुद्रधनुर्भङ्गाभ्यां सर्वंक-षत्वम् । **दोर्लीलेति** । दोष्णोर्बाह्वोर्लीलयानायासव्यापारेणाञ्चितात्प्रापिताच्चन्द्रशेख-रधनुर्दण्डावभङ्गादुद्यत उत्पन्न आर्यस्य रामस्य बालचरितानां प्रस्तावनायाः प्रादुर्भवस्य डिण्डिमस्तत्सूचकवाद्यविशेषकध्वनिभूतः । द्राग्झटिति पर्यस्तस्य विघटितस्य कपाल-

**रामः**—(सहर्षोन्माद इव ।)

एह्येहि वत्स रघुनन्दन रामभद्र
चुम्बामि मूर्धनि चिराय परिष्वजे त्वाम् ।
आरोप्य वा हृदि दिवानिशमुद्वहामि
वन्देऽथवा चरणपुष्करकद्वयं ते ॥ ५५ ॥

(प्रविश्य)

**रामः**—कथमतिवात्सल्यादतिक्रामति प्रसङ्गः ।

**विश्वामित्रः**—राजन्, गुरुर्भवान् । गर्भरूपश्च ते वत्सो रामभद्रः ।

**राजा**—(प्रणम्य ।) भगवन्,

रामेण पत्या सीतायाः पूर्णा युष्माकमाशिषः ।
अस्मिन्नेवोत्सवे दत्ता लक्ष्मणाय मयोर्मिला ॥ ५६ ॥

**कन्ये**—(सास्रम् ।) अह्मो[1], दिण्णं ह्म ।

**राक्षसः**—दृष्टं चैतद्द्रष्टव्यम् ।

**विश्वामित्रः**—सुष्ठुतरं बहुमन्यामहे । वक्तव्यशेषस्त्वस्ति ।

---

१. अहो, दत्ते स्वः ।

---

संपुटमितस्य कपालसंपुटसदृशस्य कपालसंपुटवत्स्वल्पस्य मितस्य वा । ध्वन्याधिक्यापेक्षया मितत्वोक्तिः । ब्रह्माण्डलक्षणभाण्डस्योदरे मध्ये भ्राम्यन्, अत एव पिण्डितचण्डिमा पुञ्जीभूतक्रूरभावष्टंकारध्वनिष्टंकारात्मकशब्दोऽद्यापि व्यवहितकालोऽपि न विश्राम्यति न विरमति । अहो इति विस्मये । कथमिति वैयाकुल्यमितःपरं किंचित्कालमयं ध्वनिरविरतश्चेत्प्रपञ्चप्रलयो भवितेति व्याकुलत्वम् ॥ ५४ ॥ हर्षोऽनुरूपवरलाभात् । उन्मादो दुर्घटत्वाच्चित्तविभ्रमः । **एह्येहीति** । आदराद्द्विरुक्तिः । चरणपुष्करकद्वयमल्पयोश्चरणपङ्कजयोर्द्वयम् । 'अल्पे' इति कन्प्रत्ययः । वत्स रघुनन्दनेति संबुद्ध्यनुगुणं चुम्बनमित्यादिकम् । रामभद्रेति संबुद्ध्यनुगुणमुद्वहामीत्यादिकम् । 'रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि । इति रामपदेनासौ परं ब्रह्माभिधीयते ॥' इति रामपदनिरुक्तेः । अत्र हर्षान्मूर्ध्नि चुम्बनादिकम्, उन्मादाच्चरणोद्वहादिकम् । सुप्तानां कुपितानां स्वभावज्ञानं दृष्टमिति हि प्रसिद्धम् ॥ ५५ ॥ अतिवात्सल्यादतिस्नेहात् । 'वत्सांसाभ्यां कामबले' इति लच्प्रत्ययान्ताद्वत्सलशब्दाद्ब्राह्मणादित्वाद्भावे ष्यञ् । प्रसङ्गः प्रकृतो वाग्व्यापारः । अतिक्रामति सीमानमिति शेषः ॥ गुरुः पितृभूत इत्यर्थः । गर्भरूपः पुत्रभूतः ॥ **रामेणेति** । रामेण पत्या रामात्मकेन भूभर्त्रा हेतुना सीताया युष्माकमाशिषः पूर्णाः । समग्रा इत्यर्थः । अस्मिन्नेवोत्सवे रामाय सीताप्रदानहेतुभूतधनुरारोपणात्मकोत्सवे मयोर्मिला लक्ष्मणाय दत्ता ॥ ५६ ॥ एतद्रामाय सीताप्रदानरूपम् ॥ सुष्ठुतरं समीचीनतरम् । 'अवदुःसुषु स्थः'

**राजा**—नन्वाज्ञापय ।

**विश्वामित्रः**—दुहितरौ माण्डवी श्रुतकीर्तिश्च ते च भरतशत्रुघ्नाभ्यामभ्यर्थये ।

**राक्षसः**—(स्वगतम् ।) तपस्यतो वनेचरस्य सतः क्षत्रियकुटुम्बवैयात्यं ब्राह्मणस्य ।

**राजा**—किमत्र किंचिद्विचार्यमस्ति । किं त्वत्र वस्तुनि परवानस्मि ।

**विश्वामित्रः**—केन ।

**राजा**—एकेन तावद्भगवतैव ।

**विश्वामित्रः**—अथान्येन केन ।

**राजा**—आर्यसीरध्वजेन गौतमेन शतानन्देन च ।

**विश्वामित्रः**—सीरध्वजशतानन्दयोरहमावेदयिता ।

**राजा**—भवानिदानीं जानाति ।

जनकानां रघूणां च संबन्धः कस्य न प्रियः ।
यत्र दाता ग्रहीता च कल्याणप्रतिभूर्भवान् ॥ ५७ ॥

---

इति सुशब्द उपपदे स्थाधातोस्तरप्प्रत्ययः । 'सुषामादिषु च' इति षत्वम् । रामाय सीताप्रदानं सुष्ठु । लक्ष्मणायोर्मिलाप्रदानं सुष्ठुतरमिति समर्थः । वक्तव्यशेषोऽन्यत्किंचिद्वक्तव्यम् । 'शेषोऽनन्तो हरिः शेषं त्रिष्वन्यदुपयुक्ततः' इति रत्नमाला । विद्यते हीति शेषः ॥ **ते चेति** । ते इति द्वितीयान्तम् । भरतशत्रुघ्नाभ्यामिति चतुर्थी ॥ तपस्यतस्तपश्चरतः । तपसधातोः कण्ड्वादेर्यक् ॥ वनेचरस्य 'हलदन्तात्सप्तम्याः संज्ञायाम्' इति सप्तम्या अलुक् ॥ क्षत्रियकुटुम्बे क्षत्रियाणां गृहकृत्ये वैयात्यं धृष्टता । वियातशब्दाद्भावे कर्मणि वा ष्यञ् । 'धृष्टे धृष्णुर्वियातश्च' इत्यमरः ॥ विचार्यं विमर्शनीयम् । अत्र वस्तुनि भरतशत्रुघ्नाभ्यां माण्डवीश्रुतकीर्त्योः प्रदानरूपेऽर्थे परवानस्मि । 'परतन्त्रः पराधीनः परवान्नाथवानपि' इत्यमरः ॥ **केनेति** । परवानित्यनुषङ्गः ॥ तावच्छब्दः क्रमार्थकः । प्रथमं भगवतैव । युष्माभिरित्यर्थः ॥ अथेत्यानन्तर्ये ॥ गौतमेन गौतमपुत्रेण । 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यण् । अहमावेदयिता । अस्मिन्नर्थे युवाभ्यां न विमतिः कार्येति तयोरहं प्रतिबोधयिता भवामीत्यर्थः ॥ इदानीं जानाति । अर्थस्थितिमिति शेषः ॥ **जनकानामिति** । जनकानां कर्मयोगनिष्ठानां जनकवंश्यानां रघूणां ज्ञानयोगनिष्ठानां रघ्वपत्यानां च संबन्धोऽपत्यसंबन्धः कस्य न प्रियः । सर्वस्यापि प्रिय इत्यर्थः । विस्तरस्त्वस्मत्कृतायामुत्तररामचरितव्याख्यायां तत्त्वस्पर्शिनीसमाख्यायामनुसंधेयः । यत्र यस्मिन्संबन्धे कल्याणस्य प्रतिभूर्मध्यस्थः' कल्याणो मङ्गलकरः प्रतिभूरिति वा । 'भुवः संज्ञान्तरयोः' इति क्विप् । 'धनिकाधमर्णयोरन्तरे यस्तिष्ठति विश्वासार्थं स प्रतिभूः' इति शाब्दिकाः । 'स्युर्लग्नकाः प्रतिभुवः,

**विश्वामित्रः**—(आकाशे ।) वत्स शुनःशेप, अयोध्यां गत्वा ब्रूहि भगवन्तमस्मद्वचनाद्वसिष्ठम् ।

एताश्चतुर्भ्यो रघुनन्दनेभ्यो
निमेर्गृहे राजसुताश्चतस्रः ।
वसिष्ठवद्गौतमवच्च भूत्वा
दत्ताः प्रतीष्टाश्च समं मयैव ॥ ५८ ॥

तदुपमन्त्र्य सर्वान्ब्रह्मर्षीन्महाराजदशरथानुयातो वैदेहनगरीमागच्छ । राज्ञो यज्ञपरिसमाप्तौ विततगोदानमङ्गलाः कुमाराः परिणेष्यन्तीति ।

**कुमारौ**—प्रियात्प्रियतरं नः ।

**कन्ये**—[1]दिट्ठिआ अविप्पवासो दाणिं भइणीआणं भविस्सदि ।

**राक्षसः**—अद्यापि भोः, शृणुत धर्माक्षराणि । **अनर्थ एष यत्कन्येयमन्यस्मै दीयत इति ।**

---

१. दिष्ट्या अविप्रवास इदानीं भगिनीनां भविष्यति ।

---

इति चामरः । भवान् । त्वमित्यर्थः ॥ ५७ ॥ **आकाश इति** । 'अप्रविष्टैः सहालापे भवत्याकाशभाषितम्' इत्युक्तेः । शुनःशेपपात्रस्याप्रविष्टत्वादाकाश इत्युक्तम् । अस्मद्वचनान्मद्वचनमुच्चार्य । ल्यब्लोपे पञ्चमी । वचनप्रकारमाह—**एता इत्यादिना** । मयैव कर्त्रा निमेर्गृहे सीरध्वजस्य गृह एताश्चतस्रो राजसुताः सीतोर्मिलामाण्डवीश्रुतकीर्तयश्चतुर्भ्यो रघुनन्दनेभ्यो रामलक्ष्मणभरतशत्रुघ्नेभ्यः समं युगपद्गौतमवद्भूत्वा दत्ता जनककुलपुरोहितेन गौतमपुत्रेण शतानन्देन तुल्यं भूत्वा दत्ताः । वसिष्ठवच्च भूत्वा प्रतीष्टाश्च रघुकुलपुरोहितेन वसिष्ठेन भूत्वा प्रतिगृहीताश्च । अभूवन्निति शेषः ॥ 'इषु इच्छायाम्' इत्यस्मात्प्रतिपूर्वात्कर्मणि क्तः । उपसर्गवशेन च प्रतिग्रहार्थत्वम् । 'प्रतीच्छ चैनां भद्रं ते' इति प्रतिग्रहे प्रयोगः ॥ ५८ ॥ तत्तस्मात् । उपमन्त्र्याहूय । राज्ञः सीरध्वजस्य । विततं विस्तृतं गोदानमेव मङ्गलं येषां ते तथोक्ताः । गावो लोमानि दीयन्ते खण्ड्यन्तेऽस्मिन्निति गोदानम् । 'दो अवखण्डने' । परिणेष्यन्ति विवाहं करिष्यन्ति । इत्यस्मद्वचनाद्ब्रूहीति पूर्वेण संबन्धः ॥ कुमारौ रामलक्ष्मणौ । प्रियादावाभ्यां सीतोर्मिलयोर्दानात्प्रियतरमतिशयितप्रियम् । भरतशत्रुघ्नाभ्यां माण्डवीश्रुतकीर्त्योः प्रदानमाचार्यतातपादामन्त्रणं चेत्यर्थः ॥ अविप्रवासो विदेहस्थितिविरहः । एकगृहे भ्रातॄणां भार्यात्वादित्यर्थः ॥ अद्यापि वाग्दानकालेऽपि । धर्माक्षराण्यनर्थपरिहारकत्वात्केवलधर्मार्थमनृशंसेन मया प्रत्युक्तान्यक्षराणि । यद्वा वाग्दत्ताया अपि सप्तमपदात्पूर्वमन्यस्मै दानस्य धर्मत्वात्तद्बाधकानि मदक्षराणीत्यर्थः । इयं कन्या सीतान्यस्मै दीयत इति यदेषोऽनर्थः । प्रयोजनविपरीतमित्यर्थः । **अनर्थ** इति विधेयप्राधान्यादेष इति पुंलिङ्गम् । कन्येयमित्यनेनोर्मिलादिष्वनपेक्ष इति ध्वनि-

पौलस्त्यो विनयेन याचत इति श्लाघ्येऽपि योऽनादरः
संबन्धे सति यत्र लोकपतिना सौख्यं न तत्र स्पृहा ।
गन्तव्या पुनरन्यथैव नियतं लङ्का च यत्सीतया
तन्माभूदिह वः पुरंदरपुरीबन्दीप्रसक्तो विधिः ॥ ५९ ॥

(नेपथ्ये कलकलः ।)

**रामः**—

तत्कावकालपर्जन्यभीमौ वृन्देन धावतः ।

**विश्वामित्रः**—

एतौ सुबाहुमारीचौ पुत्रौ सुन्दोपसुन्दयोः ॥ ६० ॥

तद्वत्सौ, हन्यतामेष यज्ञप्रत्यूहः ।

**कुमारौ**—यदाज्ञापयति । (इति विकटं परिक्रामतः ।)

**कन्ये**—एत्थ दाणिं कहम्[1] ।

**राक्षसः**—

हन्त साध्विव संपन्नं विपर्यस्तो विधिर्भवेत् ।
तद्वीक्ष्य कार्यपर्यन्तं माल्यवत्युपवेदये ॥ ६१ ॥

---

१. अत्रेदानीं कथम् ।

---

तम् । इति धर्माक्षराणि शृणुतेति पूर्वेण संबन्धः । **पौलस्त्य इति** । पौलस्त्यः पुलस्त्यपौत्रो रावणो विनयेनानौद्धत्येन याचत इति प्रार्थयत इत्यस्मिन्नर्थे श्लाघ्येऽप्यभिनन्दनार्हेऽपि योऽनादर आदराभावः परिभवो वा । यत्र यस्मिँल्लोकपतिना रावणेन संबन्धे सति जामातृश्वशुरभावसंबन्धे सति सौख्यं सुखं भवति । तत्र स्पृहा न तस्मिन्संबन्धे स्पृहाविरहः । किंच सीतयान्यथा रावणाय प्रदानाभावेऽपि लङ्का नियतं गन्तव्या । नियतमिति संभावनायाम् । प्राप्तव्यैवेत्यर्थः । 'रत्नहारी च पार्थिवः' इति ह्युक्तमिति भावः । इति यत्तत्तेभ्यो हेतुभ्यः । 'वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्' इत्युक्तत्वाद्बहुत्वलाभः । अनादरात्स्पृहाविरहात्स्पृहयालुतया गन्तव्यत्वाच्च हेतोः संभाव्यमान इत्यर्थः । पुरंदरपुर्यास्तत्स्थानामप्सरसां बन्द्याः कारायाः । निरोधार्थमिति यावत् । प्रसक्तो विधिर्बलात्कारो वो युष्माकमिह सीतायां माभून्न भवेदिति च धर्माक्षराणीति पूर्वेण सम्बन्धः ॥ ५९ ॥ इमौ कौ । किंनामकौ कस्य पुत्राविति चार्थः । एताविति तस्योत्तरम् ॥ ६० ॥ यज्ञप्रत्यूहो यज्ञविघ्नः । विघ्नहेतोर्विभ्रत्वव्यदेहः । हेत्वलंकारः । 'हेतुहेतुमतोरैक्यं हेतुं केचित्प्रचक्षते' इति तल्लक्षणात् ॥ विकटं विषमम् ॥ ताटका हि स्त्रीत्वान्मृता । पुंसोः सुबाहुमारीचयोर्विषये कथमित्यर्थः ॥ **हन्तेति** । साधुसंपन्नमिवास्मदनुकूलं संपन्नमिति संभावयामि । विधिस्ताटकावधधनुर्भङ्गसीताप्रदानरूपोऽनुष्ठीयमानो व्यापारो विपर्यस्तो भवेदन्यथा

राजा—(धनुरास्फालयन् ।) वत्स रामभद्र, वत्स लक्ष्मण, अप्रमत्तः प्रमत्तं विजयस्व । अयमहं परागत एव ।

विश्वामित्रः—(विहस्य ।)

राजन्नितो ह्येहि सहानुजस्य रामस्य पश्याप्रतिमानमोजः ।
ब्रह्मद्विषो ह्येष निहन्ति सर्वानाथर्वणस्तीव्र इवाभिजारः ॥ ६२ ॥

(इति निष्क्रान्ताः सर्वे ।)

**इति महाकविश्रीभवभूतिविरचिते महावीरचरिते प्रथमोऽङ्कः ।**

---

भवेत् । सुबाहुमारीचाभ्यां रामस्य पराभवे पूर्वोक्तं सर्वमन्यथा भवेदित्यर्थः । यद्वा विधिर्भाग्यमन्यथा भवेदित्यर्थः । अथवा विधिः कालोऽन्यथा भवेदित्यर्थः । यद्वा विधिश्चतुर्मुखोऽन्यथा भवेदित्यर्थः । 'विधिर्विधाने नियतौ काले पद्मोद्भवेऽपि च' इति रत्नमाला । तत्तस्मात्कार्यमिष्टानिष्टरूपं पर्यन्तो विधिर्यस्मिंस्तथोक्तं वीक्ष्य माल्यवति भर्तुः कनिष्ठमातामह उपवेदये निवेदयिष्ये । अत्र माल्यवत्युपवेदय इत्यनेनोत्तराङ्कादौ प्रवेक्ष्यतो माल्यवत्पात्रस्य सूचितत्वादङ्कमुखं नामार्थोपक्षेपकमुक्तं भवति । यथोक्तम्—'अङ्कान्तपात्रेणार्थस्य उत्तराङ्कस्य सूचनात्' इति ॥ ६१ ॥ अप्रमत्तोऽवहितः प्रमत्तमनवहितं विजयस्वाभिभूयाः । 'जि अभिभवे' इत्यस्मात् 'विपराभ्यां जेः' इत्यात्मनेपदम् । पूर्वं सुबाहुमभिप्रायेण हन्यतामेष इति विश्वामित्रेणोक्तम्, इदानीं मारीचाभिप्रायेण प्रमत्तं विजयस्वेत्युक्तं कुशध्वजेन । परागत एव सहानुगत एव ॥ हे राजन्कुशध्वज, इतो ह्येह्यत्रागच्छ । यद्यपि भवान्राजैव तथापि न भवतोऽत्रावकाशः । अतस्त्वं तत्र मा गा इत्यर्थः । सहानुजस्यानुजसहितस्य । 'वोपसर्जनस्य' इति सहस्य सो वैकल्पिकः । रामस्याप्रतिमानं निस्तुलम् । 'प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना' इत्यमरः । ओजः पराक्रमं पश्य । हि यस्मादेष रामः सर्वान्ब्रह्मद्विषः समस्तानपि ब्राह्मणशत्रून्सुबाह्वादीन् । कर्म । आथर्वणोऽथर्वणोक्तस्तीव्र उग्रोऽभिचार इव हिंसकाकल्प इव निहन्ति । हिनस्तीत्यर्थः । पञ्चसंहितात्मको ह्यथर्वणवेदः । यथाह वायुः—'नक्षत्रकल्पो वेदानां संहितानां तथा विधिः । चतुर्थोऽङ्गिरसां कल्पः शान्तिकल्पश्च पञ्चमः । श्रेष्ठास्त्वथर्वणामेते संहितानां विकल्पकाः ॥' इति । नक्षत्रकल्पो ज्योतिषांशः । वेदकल्पो ब्रह्मयज्ञादिविधिः । संहिताकल्पो मन्त्रभागविधिः । आङ्गिरसः कल्पोऽभिचारविधिः । शान्तिकल्पोऽष्टादशमहामारीशान्त्यादिविधिरित्यर्थः । इति ब्रह्मद्विष इत्यनेनाभिचारविधेर्वेदवैदिकविरोधिनिबर्हणमेव प्रयोजनमित्युक्तं भवति ॥ ६२ ॥ इति निष्क्रान्ताः सर्वे । रङ्गस्थलादिति शेषः ॥ **इति प्रथमोऽङ्कः** । प्रथमोऽङ्कः समाप्त इत्यर्थः । 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यमरः ॥

यो महीसारवास्तव्यो वाधूलो वीरराघवः ।
स महावीरचरिते व्यवृणोदङ्कमादिमम् ॥

**इत्यण्णाप्पङ्गार्यनामधेयेन वाधूलवीरराघवेण विरचितायां महावीरचरितव्याख्यायां भावप्रद्योतिनीसमाख्यायां प्रथमोऽङ्कः ॥**

द्वितीयोऽङ्कः ।

(ततः प्रविशत्युपविष्टः सचिन्तो माल्यवान् ।)

माल्यवान्—यतः प्रभृति सर्वमायात्सिद्धाश्रमवृत्तान्तमश्रौषम्, तदारभ्य—

दूराद्दवीयो धरणीधराभं
यस्ताटकेयं तृणवद्व्यधूनोत् ।
हन्ता सुबाहोरपि ताटकारिः
स राजपुत्रो हृदि बाधते माम् ॥ १ ॥

तदनुप्लवानां भूयसां लक्ष्मणेनैकेन वध इति किमेतदाश्चर्यम् ।

वीर्योत्कर्षैर्यदमृतभुजां निर्ममे पद्मयोनि-
स्तस्य द्वैधं व्यधित धनुषः शांभवीयस्य रामः ।
दिव्यामस्त्रोपनिषदमृषेर्यः कृशाश्वस्य शिष्या-
द्विश्वामित्राद्विजयजननीमप्रमेयः प्रपेदे ॥ २ ॥

प्रसह्य रावणद्विष्टमस्मद्दूतस्य पश्यतः ।
अस्त्रदानाद्भुतं काले प्रौढेन मुनिना कृतम् ॥ ३ ॥

---

इदानीमङ्कान्तरमारभमाणस्तदीयविष्कम्भमाह—**ततः प्रविशतीत्यादिना** । विष्कम्भलक्षणं तु—'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः ॥' इति ॥ यतः प्रभृति यस्मात्कालादारभ्य । सर्वमायात्सर्वमाय-नाम्नः । सिद्धाश्रमवृत्तान्तं ताटकावधादिकम् । तदारभ्य । तदिति पञ्चम्यन्तमव्ययम् । तत आरभ्येत्यर्थः । **दूरादिति** । धरणीधराभं पर्वतसदृशं ताटकेयं ताटकापत्यं मारीचम् । 'स्त्रीभ्यो ढक्' । तृणवत्तृणेन तुल्यं दूरादपि दवीयानत्यन्तदूरो यस्मिन्कर्मणि तद्यथा भवति तथा तत्तथोक्तम् । यद्वा दवीय इत्यव्ययम् । दूरादतिदूर इत्यर्थः । व्यधूनोत्प्राक्षिपत् । स ताटकारिः सुबाहोरपि हन्ता राजपुत्रो मां हृदि बाधते ॥ १ ॥ तदनुप्लवानां तस्य मारीचस्य सहायानाम् । 'अनुप्लवः सहायश्च' इत्यमरः । **वीर्येति** । पद्मयोनिश्चतुर्मुखोऽमृतभुजां देवानां वीर्योत्कर्षैर्वीर्यातिशयैः करणैर्यद्धनुर्निर्ममे सृष्टवान् । अमृतभुजामिति साभिप्रायम् । अमृतं हि बलातिशयहेतुः । तस्य सर्वदेववीर्यातिशयात्मकस्य । शंभोरिदं शांभवीयम् । 'वा नामधेयस्य वृद्धसंज्ञा वक्तव्या' इति शंभुशब्दस्य वृद्धसंज्ञायां 'वृद्धाच्छः' इति छप्रत्ययः । शंभुसंबन्धिन इत्यर्थः । धनुषो द्वैधं द्विधाभावम् । 'द्वित्र्योश्च धमुञ्' इति धमुञ्प्रत्ययः । रामो व्यधित कृतवान् । विपूर्वाद्दधातेर्लुङि सिचः कित्त्वेन 'स्थाघ्वोरिच्च' इतीत्वे 'ह्रस्वादङ्गात्' इति सिचो लोपः । अप्रमेयोऽचिन्त्यो यो रामः कृशाश्वस्य ऋषेः सत्यवचनस्य । 'ऋषयः सत्यवचसः' इत्यमरः । शिष्याद्विश्वामित्राद्विजयजननीं विजयप्रदां दिव्यां प्रशस्तामस्त्रोपनिषदमस्त्रमन्त्रात्मकरहस्यवेदभागं प्रपेदे प्राप्तवान् ॥ २ ॥ **प्रसह्येति** । प्रौढेन

सीताबन्दीग्रहपरिभवस्तस्य राज्ञो निरस्तो
नीतं चास्मान्प्रति शिथिलतामैकमुख्यं सुराणाम् ।
नान्दीदानप्रभृति हि कृतं मङ्गलं तैस्तदानीं
सर्वः प्रायो भजति विकृतिं भिद्यमाने प्रतापे ॥ ४ ॥

कथं वत्सापि शूर्पणखा प्राप्ता ।

(प्रविश्य ।)

**शूर्पणखा**—जेदु[1] कणिट्ठमादामहो ।

**माल्यवान्**—वत्से, आस्यताम् । राजसंनिधौ का वार्ता ।

**शूर्पणखा**—णिव्वुत्ताइं[2] किल तहिं पाणिग्गहमङ्गलाइं । अगत्थिअमहेसिणा रामं मङ्गलोवहारीकिदं माहेन्दं धणुवरं अणुप्पेसिदम् ।

**माल्यवान्**—पराध्यान्यायुधानि तानि रामे ब्रह्मर्षिभ्यः परिणमन्ति । (सचिन्तम्)

---

१. जयतु कनिष्ठमातामहः ।

२. निर्वृत्तानि किल तत्र पाणिग्रहमङ्गलानि । अगस्त्यमहर्षिणा रामाय मङ्गलोपहारीकृतं माहेन्द्रं धनुर्वरमनुप्रेषितम् ।

---

प्रगल्भेन । 'प्रादूहोढोढ्येषैष्येषु' इत्यनेन वृद्धिः । मुनिना विश्वामित्रेण काले ताटकावधानन्तरयोग्यकाले पश्यतोऽस्मद्दूतस्य पश्यन्तमस्मद्दूतमनादृत्य । 'षष्ठी चानादरे' इति षष्ठी । प्रसह्य निषेधाक्षराण्युपलङ्घ्य रावणद्विष्टे रावणानिष्टमस्त्रदानाद्भुतमस्त्रदानात्मकमाश्चर्यं कृतम् । रामायेति शेषः ॥ ३ ॥ **सीतेति** । तस्य राज्ञः सीरध्वजस्य सीताया बन्दीग्रहेण बलात्कृत्यग्रहणेन प्रसक्तः परिभवो निरस्तोऽगणितः । किंच सुराणां देवानामस्मान्प्रत्येकमुख्यमस्मान्प्रति गुणभावः । शिथिलतां नीतं प्रापितम् । इदानीं द्वैराज्यमासीदिति भावः । हि यस्माद्राज्ञा सुरैश्च तदानीं नान्दीदानप्रभृति । 'विवाहे नान्दीमुखं कुर्यात्' इति नान्दीश्राद्धादिकम् । प्रभृतिशब्दाद्देवदुन्दुभिध्वन्यादिकं विवक्षितं कृतम् । तस्मात्सीताबन्दीत्यादिना पूर्वेण संबन्धः । सर्वः शक्तोऽशक्तोऽपि वा प्रतापे पराक्रमे भिद्यमाने सति पूर्वावस्थातो वैलक्षण्यं प्राप्नुवाने सति विकृतिं पूर्वावस्थाविपरीतावस्थां प्रायो बाहुल्येन भवति प्राप्नोति । प्राय इति संभावनायां वा । 'मन्ये शङ्के ध्रुवं प्रायः' इत्याद्युक्तेः ॥ ४ ॥ वत्सा दौहित्रीत्वात् । शूर्पवन्नखा यस्याः सा तथोक्ता । 'नखमुखात्संज्ञायाम्' इति ङीषो निषेधे टाप् । 'पूर्वपदात्संज्ञायाम्' इति णत्वम् ॥ राजसंनिधौ सीरध्वजसमीपे का वार्ता को वृत्तान्तः । 'वृत्तिमन्नीरुजोर्वार्तं त्रिषु चारोग्यफल्गुनोः । स्त्रियामुदन्तो वार्ताके कृष्यादौ वर्तनेऽपि च ॥' इति रत्नमाला ॥ निर्वृत्तानि निष्पादितानि । तत्र मैथिलनगरे । मङ्गलकाले उपहारीकृतमित्यर्थः । माहेन्द्रं महेन्द्रसंबन्धि ॥ पराध्यानि श्रेष्ठानि । 'पराध्याग्रप्रा-

अमोघमस्त्रं क्षत्रस्य ब्राह्मणानामनुग्रहः ।
दुरासदं च तत्तेजः क्षत्रं यद्ब्रह्मसंयुतम् ॥ ५ ॥

**शूर्पणखा**—माणुसमेत्तए एत्तिआ चिन्ता ।

**माल्यवान्**—वत्से, मा मैवम् ।

उत्पत्त्यैव हि राघवः किमपि तद्भूतं जगत्यद्भुतं
मर्त्यत्वेन किमस्य यस्य चरितं देवासुरैर्गीयते ।
वस्तुष्वादधते च शक्तिमृषयो देवाश्च तर्कोत्तरा
मार्त्यादेव वरप्रदानसमये ब्रह्माभयं नो जगौ ॥ ६ ॥

निसर्गेण स धर्मस्य गोप्ता धर्मद्रुहो वयम् ।
आर्यो विरोधः शक्तेन जातो नः प्रतियोगिना ॥ ७ ॥

---

१. मानुषमात्र एतावती चिन्ता ।

---

प्रहर-' इत्याद्यमरः । ब्रह्मर्षिभ्यो रामे परिणमन्ति पर्यवस्यन्ति । **अमोघमिति** । क्षत्रस्यास्त्रं क्षत्रासाधारणमस्त्रं ब्राह्मणानामनुग्रहश्चामोघः । अव्यभिचरितकार्यकर-मित्यर्थः । अमोघश्चामोघं चेति सहोक्तौ 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इत्येकवद्भावः । किंच यत्क्षत्रं ब्रह्मसंयुतं ब्राह्मणानुगृहीतं तस्य क्षत्रस्य तेजः पराभि-भवनसामर्थ्यं दुरासदं दुर्धर्षम् । मानुषमात्रे केवलमानुषे । 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः ॥ **उत्पत्त्येति** । राघवो जगति लोक उत्पत्त्यैव स्वभावत एव । 'प्रकृत्या-दिभ्य उपसंख्यानम्' इति तृतीया । अद्भुतमाश्चर्यकरं किमप्यनिर्वाच्यं तत्प्रसिद्धं भूतं निरुपाधिकसत्तायोगि परं ब्रह्म । अत्र 'महद्भूतमनन्तमपारं वा तस्य ह वा एतस्य महतो भूतस्य' इति च श्रुतिः स्फोर्यते । अस्यैवंविधस्य रामस्य मर्त्यत्वेन मनुष्यत्वेन हेतुना किम् । न किंचिदप्यवहीयत इत्यर्थः । यस्य रामस्य चरितं देवासुरैर्गीयते । किंच तर्कोत्तराः कार्याकार्यविषये तर्केणोहापोहात्मकज्ञानेनोत्तरा अधिका देवा ऋष-यश्च वस्तुषु सत्तामात्रयोगिषु पदार्थेषु शक्तिं दुष्करकार्यनिर्वाहसामर्थ्यमादधते निष्पा-दयन्ति । तथा च सहजशक्तियोगिन्याधेयशक्तियोगोऽतिशयितकार्यकर इति भावः । ब्रह्मा चतुर्मुखः । वरप्रदानसमये रावणादिभ्योऽपेक्षितार्थप्रदानकाले मर्त्यादेव त्वया मनुष्यमात्र इत्यनादृतान्मनुष्यादभयं भयाभावं नो जगौ नोक्तवान् । 'गै शब्दे' लिट् । देवादिभ्य एव रावणस्यावध्यत्वं दत्तवानित्यर्थः । यद्वा ब्रह्मा चतुर्मुखो नो-ऽस्माकं रावणादेरित्यर्थः । पक्षैक्येनास्मच्छब्दप्रयोगः । मर्त्यादेव भयं भीतिं जगौ गीतवान् । देवादिभ्य एवावध्यत्वप्रदाने पारिशेष्यान्मनुष्याद्वध्यत्वमेव दत्तवानित्य-भिप्रायः । तस्मान्मनुष्यमात्र इति मावादीरिति पूर्वेण संबन्धः ॥ ६ ॥ तर्हि प्रबलेन तेन रामेण सह सख्यमेव क्रियतामित्यत्राह—**निसर्गेणेति** निसर्गेण स्वभावेन । प्रकृत्यादित्वात्तृतीया । धर्मस्य त्रयीबोधितस्यालौकिकश्रेयःसाधनस्य गोप्ता रक्षकः ।

**शूर्पणखा**—[1]को संदेहो। जह दसमुहो वि ईसिमुउलेहिं दिट्ठिविसेसेहिं ओअरिअमाणलोअणो णमन्तवअणो वट्टेदि, तह जाणामि दारुणो से हिअअदुम्माणो एव्वं ण विरमदि त्ति।

**माल्यवान्**—अहो नु खलु भोः,

वन्द्या विश्वसृजो युगादिगुरवः स्वायंभुवाः सप्त ये
वैदेहस्य वयं च ते च किमहो संबन्धिनो न प्रियाः।
तन्नामास्तु दुरासदेन तपसा दीप्तस्य दीप्तश्रियः
पौलस्त्यस्य जगत्पतेरपि कथं जाता हृदि न्यूनता ॥ ८ ॥

---

१. कः संदेहः। यथा दशमुखोऽपीषन्मुकुलैर्दृष्टिविशेषैरपह्रियमाणलोचनो नमद्वदनो वर्तते, तथा जानामि दारुणोऽस्य हृदयदुर्मान एवं न विरमतीति।

---

भवतीति शेषः। वयं रावणादयो वयं निसर्गेण धर्मद्रुहः पूर्वोक्तधर्मद्रोहिणः। भवाम इति शेषः। अतः शक्तेन बलवता प्रतियोगिना प्रतिपक्षिणा रामेण सहार्थो वस्तुस्वभावप्रयुक्तो विरोधो नाश्यनाशकभावो नोऽस्माकं जात उत्पन्नः। अयमाशयः। 'द्रुह जिघांसायाम्' इति धातोर्द्रोहः। जिघांसा च ध्वंसेच्छा। 'गुपू रक्षणे' इत्यस्माद्धातोर्गोपनं रक्षणम्। तच्च प्रतियोग्यात्मनो ध्वंसप्रागभावस्य स्थापनम्। तथा च ध्वंसतत्प्रागभावयोर्नाश्यनाशकभावो वस्तुस्वभावप्रयुक्तः। तद्द्वारा तत्प्रयोजकयोरप्यावयोर्नाश्यनाशकभावो वस्तुस्वभावप्रयुक्तः, नत्वौपाधिकः। प्रागभावस्थापनस्य संभवतीति प्रतियोगिजनककारणध्वंसनरूपतायाः प्रसिद्धत्वात्। अतस्तेजस्तिमिरयोरिव सख्यं न। उक्तं च कामन्दकेन—'राज्यस्त्रीस्थानदेशानां ज्ञातीनां च धनस्य च अपहारो मदो मानः पीडा वैषयिकी तथा॥ ज्ञानार्थशक्तिधर्माणां विघातो दैवमेव च। मित्रार्थस्यावमानश्च तथा बन्धुविनाशनम्। भूतानुग्रहविच्छेदस्तथा मण्डलदूषणम्। ऐकार्थाभिनिवेशित्वमिति विग्रहयोनयः॥' इति। अत्र च धर्मविघातप्रयुक्तो विरोध उक्तो भवति॥ ७॥ दृष्टिविशेषैश्चक्षुर्व्यापारविशेषैरपह्रियमाणलोचनोऽन्तर्नीयमानलोचनो न विरमतीति जानामीति पूर्वेण संबन्धः। रावणो दुर्मानवशादपि विग्रहमेव कुर्यादिति भावः। अत्र मानो नाम विरोधहेतुरुक्तः॥ **वन्द्या इति**। वन्द्याः पूज्या ये विश्वसृजो जगत्स्रष्टारो युगानां कृतादीनामादौ गुरवः पितरो हितोपदेष्टारो वा। स्वयंभुवोऽपत्यानि स्वायंभुवाः। 'तस्यापत्यम्' इत्यण्। संज्ञापूर्वकविधेरनित्यत्वेन गुणाभावादुवङ्। भवन्तीति शेषः। ते च वैदेहस्य विदेहराजस्य संबन्धिनः सन्तः किं कुतो हेतोर्न प्रियाः। प्रिया न भवन्तीत्यर्थः। अहो इति विस्मये। वयं चाहं कुम्भकर्णादयश्च किं कुतः संबन्धिनो न प्रियाः कुतः संबन्धित्वेन नेष्टा भवामः। अत्र 'मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम्। वसिष्ठं च महातेजा योऽसृजत्सप्त मानसान्॥' इति वचनमनुसंधेयम्। तद्विश्वसृजामस्माकं च संबन्धिताया अनिष्टत्वमस्तु नाम कथंचिद्भवतु। दुरासदेन दुष्करेण तपसा कायशोषणात्मकनियमेन

अथवा ।

अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः प्रत्युत
द्रुह्यन्दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया ।
उत्कर्षं च परस्य मानयशसोर्विस्रंसनं चात्मनः
स्त्रीरत्नं च जगत्पतिर्दशमुखो दृप्तः कथं मृष्यते ॥ ९ ॥

(नेपथ्यार्धप्रविष्टः ।)

**प्रतीहारः**—यः परशुरामस्य युष्माभिर्वार्तोहरः प्रेषितस्तेनैतत्तमालरसविन्यस्ताक्षरं तालीपत्रमुपनीतम् । (उपक्षिप्य निष्क्रान्तः ।)

**माल्यवान्**—(गृहीत्वा वाचयति ।) 'स्वस्ति । महेन्द्रद्वीपात्परशुरामो लङ्कायाममात्यं माल्यवन्तमभ्यर्हयति–'

**शूर्पणखा**—कहं पहुवदं दुस्सिलिट्ठक्कमं लिहिदम् ।

---

१. कथं प्रभुपदं दुःश्लिष्टक्रमं लिखितम् ।

---

दीप्तस्य जाज्वल्यमानस्य दीप्तश्रियो जाज्वल्यमानलक्ष्मीकस्य जगत्पतेर्जगतामेकातपत्राधिपत्यवतः पौलस्त्यस्य रावणस्यापि न्यूनता कन्यकाप्रदानाभावहेतुभूतमभिजनतपोरूपैश्वर्यवैकल्यज्ञानं हृदि मनसि कथं जाता । कथमुत्पन्नेत्यर्थः ॥ ८ ॥ अथवेति पूर्वोक्ताक्षेपे । **अर्थित्व इति** । प्रभोः शक्तस्य स्वामिनो रावणस्यार्थित्वे कन्यकार्थित्वे प्रकटीकृतेऽपि कदाप्यप्रकटिते सर्वमायमुखादच प्रकटिते सत्यपि फलप्राप्तिर्न भवति सीतारूपफललाभो न भवति । अनेनावमानो नाम विरोधहेतुरुक्तः । प्रत्युतेति पूर्वोक्तविरुद्धे द्रुह्यन्स्वयूथ्यानां ताटकादीनां वधेनापकुर्वन्विरुद्धचरितो रावणानिष्टधर्मस्थापनरूपचरितयुक्तो दाशरथी रामस्तया रावणप्रार्थितया कन्यया सीतया युक्तः संगतः । अत्र द्रुह्यन्नित्यनेन बन्धुविनाशरूपो विरोधहेतुरुक्तः । तया कन्यया युक्त इत्यनेनैकार्थाभिनिवेशरूपविरोधहेतुरुक्तः । किंच जगत्पतिर्दृप्तो दशमुखः परस्य शत्रोर्मानस्य पूजायाश्चित्तसमुन्नतेर्वा यशसो गुणवत्ताप्रथायाश्चोत्कर्षमतिशयं चात्मनः स्वस्य मानयशसोर्विस्रंसनं च शैथिल्यं च परस्य स्त्रीरत्नं शत्रुसात्कृतं स्त्रीरत्नं च कथं मृष्यते । कथं सहत इत्यर्थः । 'मृष तितिक्षायाम्' दैवादिक उभयपदी । अत्र दृप्त इति मदरूपविरोधहेतुर्मानयशसोरिति मानरूपो विरोधहेतुश्चोक्तः ॥ ९ ॥ नेपथ्यार्धप्रविष्टः । रङ्गस्थल इति शेषः । प्रतीहारः । द्वारनियुक्तः पुरुष इत्यर्थः । 'द्वारि द्वाःस्थे प्रतीहार' इत्यमरः । वार्ताहरः प्रवृत्तिहरः । वार्तामाहरतीत्यर्थे 'आङि ताच्छील्ये' इति हरतेरच्प्रत्ययः । तेन वार्ताहरेण तमालरसेन तमालपत्रद्रवेण । 'रसो रागे द्रवे हर्षे' इति कोशः । तालीपत्रं तद्धि धवलम् । तत्र तमालरसस्य नीलस्य परभागातिशय इति भावः । उपक्षिप्य समीपे निक्षिप्य ॥ वाचयति पठति । 'वच परिभाषणे' इत्यस्माच्चुरादेः स्वार्थे णिच् । **स्वस्तीति** । **महेन्द्रद्वीपान्**महेन्द्रपर्वतोपलक्षितद्वीपेऽवस्थाय । 'ल्यब्लोपे कर्मण्यधिकरणे च' इति

**माल्यवान्**—अत्रैव परं माहेश्वरं लङ्केश्वरमभिनन्द्य ब्रवीति—'विदितमेतद्वो यदस्माभिर्दण्डकारण्यतीर्थोपासकेभ्यः प्रतिज्ञातमभयम् । तत्र विराधदनुकबन्धप्रभृतयः केऽप्यतिचरन्तीति श्रुतम् । तत्तान्प्रतिषिध्यास्माकं युष्मत्स्थितां च माहेश्वरप्रीतिमनुरुध्यन्तां भवन्तः ।

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये ।
जामदग्न्यश्च वो मित्रमन्यथा दुर्मनायते ॥ १० ॥

इति ।'

**शूर्पणखा**—'ईसिमसिणावट्ठम्भगम्भीरगुरुओ उवण्णासो ।

१. ईषन्मसृणावष्टम्भगम्भीरगुरुक उपन्यासः ।

पञ्चमी । अभ्यर्हयति संभावयति ॥ प्रभुपदं प्रभुविषयकं वाक्यम् । 'पदं व्याजाङ्कितचिह्नस्थानत्राणांशुलक्ष्मसु । व्यवसाये सुप्तिङन्ते सायके वस्तुवाक्ययोः ॥' इति रत्नमाला । दुःश्लिष्टक्रमं त्यक्तपरिपाटीकम् । 'शक्तौ चरणविक्षेपे परिपाट्यामपि क्रमः' इति रत्नमाला । महाराजविषयकं लिखित्वामात्यविषयं लेखनीयम् । अत्र रावणं विहाय माल्यवतो लेखनाल्लेख्यपरिपाटी परित्यक्तेति भावः ॥ अत्रैव मां प्रति प्रेषिते लेख्य एव । महेश्वरो भजनीयोऽस्येति माहेश्वरः । 'सोऽस्य भक्तिः' इत्यण् । लङ्केश्वरं रावणमभिनन्द्य श्लाघित्वा ब्रवीति । वाक्यं प्रयुक्तवानित्यर्थः । अमात्याभ्यर्हणे राजाभ्यर्हणं कैमुतिकम् । किंच साक्षाल्लेख्ये नामनिर्देशात्त्वयक्कारो भवेत् । अतो रावणं विहाय मामेव लिखितवानिति भावः । लेख्यार्थप्रकारमाह—**विदितमित्यादिना** । अस्माभिर्मया दण्डकारण्यतीर्थानां दण्डकारण्यस्थितानां पुण्यभूमीनां पुण्यसलिलानां वोपासकेभ्यः सेवकेभ्यः । चतुर्थ्यन्तमिदम् । 'जलावतारो गुरुयोन्युपायशास्त्राणि यज्ञो मुनिजुष्टतोयम् । मन्त्रादयोऽष्टादश पुण्यभूमिः पात्रं जलं स्त्रीकुसुमं च तीर्थम् ॥' इति रत्नमाला । अभयं भयनिवर्तनं प्रतिज्ञातम् । कर्तव्यतयाङ्गीकृतमिति यावत् । एतद्वो विदितमिति पूर्वेण संबन्धः । तत्र दण्डकारण्यतीर्थोपासकेष्वतिचरन्त्यस्मत्प्रतिज्ञातार्थविरुद्धमाचरन्ति । तान्विराधप्रभृतीन्प्रतिषिध्य निवर्त्यास्माकं युष्मासु स्थितां माहेश्वरप्रीतिमनुरुध्यन्तां कामयन्ताम् । 'अनो रुध कामे' इत्यस्माद्दैवादिकात्कर्तरि लोटि श्यन् । विराधाद्यनिवर्तने युष्मदिष्टास्मत्प्रीतिर्विहन्येतेति भावः । **ब्राह्मणेति** । ब्राह्मणेष्वतिक्रमस्यापराधस्य त्यागो निवृत्तिर्भवतामेव भूतये युष्माकमेव श्रेयसे । भवतीति शेषः । नास्माकं क्षेमायैव ब्राह्मणातिक्रमत्यागो भवद्भिः कार्यः । किंतु भवतामात्महितकामनयापि कार्य इति भावः । किंच जामदग्न्यः परशुरामो वो युष्माकमेवं सत्येव मित्रं भवेत् । चकाराद्युष्मद्भूतिरेव मुख्यफलम्, अस्मन्मैत्री त्वानुषङ्गिकीति भावः । अन्यथैवमपि ब्राह्मणातिक्रमे जामदग्न्यो दुर्मनायते दुष्टमनस्को भविष्यति । क्रुद्धो भविष्यतीत्यर्थः । दुर्मनःशब्दाद्बहुव्रीहेः 'कर्तुः क्यङ् सलोपश्च' इति क्यङ् । सकारलोपो दीर्घश्च ॥ १० ॥ ईषन्मसृणेन किंचिच्छ्लक्ष्णेनावष्टम्भेन कार्कश्येन गम्भीरो

**माल्यवान्**—अहो, किमुच्यते । जामदग्न्यः खल्वयम् ।

अभिजनतपोविद्यावीर्यक्रियातिशयैर्निजै-
रुपचितमदः सर्वत्यागान्निरीहतया स्थितः ।
व्यपदिशति नः शैवप्रीत्या कथंचिदनास्थया
प्रभुरिव पुनः कार्ये कार्ये भवत्यतिकर्कशः ॥ ११ ॥

(इति चिन्तयति ।)

**शूर्पणखा**—किं[1] दाणिं चिन्तीअदि ।

**माल्यवान्**—वत्से,

यदि प्रपद्येत धनुःप्रमाथी
शिष्यस्य शंभोर्न तितिक्षते सः ।
आयोधने चेदुभयोर्निघातः
संरम्भयोगाददति हि प्रियं नः ॥ १२ ॥

---

१. किमिदानीं चिन्त्यते ।

---

गहनो गुरुको महांश्चोपन्यासो वाक्यसंदर्भः । दौर्मनस्यप्रतियोगिनो मैत्रस्यानुषङ्गिकत्वोक्तेः भूतेर्मुख्यत्वोक्तेश्च किंचिच्छ्लक्ष्णत्वम् ॥ खल्विति प्रसिद्धम् । वक्ष्यमाणविशेषैः प्रसिद्ध इत्यर्थः । **अभिजनेति** । निजैः स्वीयैः । 'निजौ स्वीयाविनाशिनौ' इति रत्नमाला । अभिजनस्य वंशस्य तपसः कायशोषणादेर्विद्याया वेदादिकाया वीर्यस्य पराक्रमस्य क्रियाया यागयुद्धादिकाया अतिशयैरुत्कर्षैरुपचितमदः प्रवृद्धाहंगर्वः । अहंकः । 'गजदानं गर्वहर्षरेतोमृगमदा मदाः' इति रत्नमाला । तथापि सर्वेषामभिजनादीनां त्यागातपराभिभवहेतुतयानादर्तव्यत्वज्ञानान्निरीहतया परावमानविषये निश्चेष्टतया स्थितो विद्यमानोऽसौ जामदग्न्यः शैवप्रीत्या शिवभक्तताप्रयुक्तप्रीत्या कथंचित्केनापि प्रकारेण । पूर्वोक्तरीत्या मुख्यानुषङ्गिकभावविपर्ययेणेत्यर्थः । अनास्थया तत्परताविरहेण । 'आस्था प्रतिज्ञातात्पर्यगोष्ठीयत्नोपलम्भने' इति रत्नमाला । नोऽस्माकं व्यपदिशति 'ब्राह्मणातिक्रमत्यागः' इत्यादिकं वदति । कार्ये कार्ये पुनः स्वाभिमतेषु तु प्रभुरिवातिकर्कशो भवति । 'हसन्निव नृपो हन्ति' इत्युक्तरीत्या राजवदतितीक्ष्णदण्डधरो भवतीत्यर्थः । यद्वानास्थया प्रभुरिवेत्यत्र अप्रभुरिव इति छेदः । कार्ये कार्ये इत्यत्र च 'कार्ये अकार्ये' इति छेदः । तथा चायमर्थः—अनास्थया कथंचिदप्रभुरिवाशक्त इव व्यपदिशति । अकार्ये नः अकार्ये पुनर्ब्राह्मणातिक्रमादिस्वानभिमतकार्येऽस्माभिः कर्तव्ये त्वतिकर्कशो भवतीत्यर्थः ॥ ११ ॥ **यदीत्यादि** । शंभोर्धनुःप्रमाथी रुद्रधनुर्भङ्गकरो रामः शंभोः शिष्यस्य शंभुशिष्यस्य जामदग्न्यस्य प्रपद्येत यदि ज्ञायेत चेत् । शिष्यस्येति शेषे षष्ठी । शिष्यसंबन्धिज्ञानविषयो भवेच्चेदित्यर्थः । शंभुशिष्यो जामदग्न्यो न तितिक्षते न क्षमते । 'तिजेः क्षमायाम्' इति स्वार्थे सन् । गुरुपरिभवं न क्षमिष्यत इत्यर्थः । आयोधने युद्धे संरम्भस्य सक्रोधोद्यमस्य योगात्संबन्धादुभयो-

अन्यतरविजयेऽपि क्षत्रियान्तकश्चेद्राजपुत्रं विजयेत । यतः, नैनमनभिहत्यास्य मन्युर्विरमेत् । एवं च सिद्धं नः समीहितं रामनिधनम् । ऐक्ष्वाकश्चेद्विजयमानो ब्रह्मण्यो ब्रह्मर्षिं नाभिहन्यात् । निःश्रेयसापन्नोऽयमपविद्धमपि शस्त्रं न प्रणिदध्यात् । ततश्च नोऽनिष्टं स्यात् ।

**शूर्पणखा**—को[1] विसेसो ।

**माल्यवान्**—जामदग्न्यस्तावदारण्यकव्रतः । स हत्वापि रामं पुनस्तादृश एव । स श्लाघ्यस्तु राजपुत्रः पुनरुत्थातुकामस्तं चेत्प्रकृष्टतममुत्साहशक्तिसंपदा धर्मविजयिनं च विजयते सर्वे तं विजयिनं निर्जरा जानीयुः । तदैव रावणपराक्रान्तिनिभृततूर्या देवाः प्रसह्यैनमधिकुर्युः । नित्यानुषक्तो ह्यसुरविजयिनामवमानतः प्रकृतिकोपः ।

---

१. को विशेषः ।

---

जामदग्न्यदाशरथ्योर्निर्घातः सुन्दोपसुन्दवन्मिथो वधः स्याच्चेत्, तदा नोऽतिप्रियमत्यन्तमिष्टम् । स्यादिति शेषः ॥ १२ ॥ अन्यतरविजयेऽप्येकैकस्यैकैकेन विजयेऽपि क्षत्रियान्तकः परशुरामो राजपुत्रं रामं विजयेत चेदभिभूयाच्चेत्, एनं राजपुत्रमनभिहत्याहत्वा समीहितमभिलषितं सिद्धं निष्पन्नम् । ऐक्ष्वाक इति चेदिति पूर्वोक्तपक्षातिरिक्ते पक्षे । 'पक्षान्तरे चेद्यदि च' इत्यमरः । विजयमानोऽभिभवन्ब्रह्मण्यो ब्राह्मणहित ऐक्ष्वाको रामो ब्रह्मर्षिं भार्गवं नाभिहन्याद्धन्तुं नार्हः । निःश्रेयसापन्नो मुक्तप्रायोऽयं जामदग्न्योऽपविद्धमपि कुण्ठितमपि शस्त्रमायुधं न प्रणिदध्यान्न चिन्तयेत् । रामापरिभवेन शस्त्रसंन्यासात्तपोभ्युपगमाच्च निःश्रेयसापन्नत्वं मन्तव्यम् ॥ ततो भार्गवस्य रामात्पराजये सति को विशेषः । उभयोरायोधने निखातस्येष्टत्वेन शत्रुत्वाविशेषादिति भावः ॥ तावत्प्रथममारण्यकानामरण्यस्थमनुष्याणां व्रतं नियमो यस्य स तथोक्तः । 'अरण्यान्मनुष्ये' इति वुञ् । पुनस्तादृश एव पुनरप्यारण्यकव्रत एव । रामवधमात्रेण चरितार्थो नास्माकमपि चिकीर्षेदिति भावः । **स इति** । चेदिति पक्षान्तरे । श्लाघ्यो गुणादिभिः श्रेष्ठो राजपुत्रस्तु रामस्तु पुनरुत्थातुकामो भार्गववधानन्तरमप्युत्थातुकाम उत्कृष्टं प्राप्तुकामः सन् । 'संतुष्टः क्षत्रियस्तथा' इत्युक्तत्वादिति भावः । उत्साहशक्तेराफलान्तस्थिरप्रयत्नशक्तेः । 'स्थेयान्प्रयत्न उत्साहः' इति ह्युक्तम् । संपदातिशयेन प्रकृष्टतममतिशयेन प्रकृष्टम् । रावणः प्रकृष्टः, कार्तवीर्यः प्रकृष्टतरः, जामदग्न्यः प्रकृष्टतमः, इति विषयनिर्धारणे विहितस्य तमपः प्रयोगः । धर्मेण विजयिनम् । अनेन कूटयोधित्वं व्युदस्यते । तं भार्गवं विजयते चेत्सर्वे निर्जरा देवास्तं रामं विजयिनं सर्वोत्कृष्टं जानीयुरवगच्छेयुः । रावणपराक्रान्त्या रावणस्य पराक्रमेण निभृततूर्या निर्व्यापारयुद्धतूर्या निर्व्यापारयुद्धवाद्यविशेषाः । 'निभृतकुद्धाः' इति च पाठः । एनं रावणं प्रसह्य बलात्कृत्याधिकुर्युः व्याप्रियेरन् । हि यस्मादसुरविजयिनां

पौलस्त्यापजयप्रचण्डचरिते यः कार्तवीर्ये मुनिः
सर्वक्षत्रकथासमापनविधेः प्राङ्मङ्गलं प्राकरोत् ।
तस्मिन्नप्युपनीतयुक्तदमनः स्यादुज्झितासद्भयः
सामर्थ्ये सति धर्मसौम्यचरितो विश्वस्य रामः पतिः ॥ १३ ॥

**शूर्पणखा**—तदो एत्थ किं णिच्चिदम्

**माल्यवान्**—परशुरामोत्तेजनं कर्तव्यमिति ।

**शूर्पणखा**—पक्खन्तरे महादोसो ।

**माल्यवान्**—तत्रापि शक्तितः प्रतिविधास्यते । किंतु

तान्येव यदि भूतानि ता एव यदि शक्तयः ।
ततः परशुरामस्य न प्रतीमः पराभवम् ॥ १४ ॥

---

१. ततोऽत्र किं निश्चितम् ।
२. पक्षान्तरे महादोषः ।

---

देवानामवमानतस्तिरस्कारात्प्रकृतिकोपो राष्ट्रकोपः । 'अमात्यराष्ट्रदुर्गाणि कोशो दण्डश्च पञ्चमः । एताः प्रकृतयस्तज्ज्ञैर्विजिगीषोरुदाहृताः ॥' इति कामन्दकः । नित्यानुषक्तो नित्यानुवृत्तस्तस्मात्प्रसह्याधिकुर्युरिति संबन्धः । **पौलस्त्येति** । यो मुनिर्भार्गवः पौलस्त्यस्य रावणस्यापजयेन पराभवेन प्रचण्डचरिते तीक्ष्णव्यापारे कार्तवीर्ये कृतवीर्यस्यापत्येऽर्जुने विषये सर्वक्षत्रस्य क्षत्रियसामान्यस्य कथायाः शब्दस्य समापनं नाशनं तदेव कथासमापनं प्रबन्धसमाप्तिनिष्पादनं तदेव विधिर्विहितधर्मानुष्ठानं तस्य प्राङ्मङ्गलमविघ्नेन परिसमाप्त्यर्थमादौ कर्तव्यमङ्गलम् । मध्यान्तमङ्गलेऽपि हि स्तस्तद्व्यावृत्तये प्रागिति पदम् । निर्विघ्नसमाप्त्यर्थमङ्गलस्थानीयं वधं प्राकरोत्प्रस्तुतवान् । कर्मणोऽधिकरणत्वविवक्षया कार्तवीर्ये इति सप्तमी । तस्मिन्नपि तादृशे जामदग्न्येऽप्युपनीतं प्रापितं युक्तं योग्यम् । ब्राह्मणस्य वधानर्हत्वाच्छक्त्याकर्षणरूपमित्यर्थः । दमनं शिक्षणं येन स तथोक्तः । सामर्थ्ये सति शक्तौ सत्यामुज्झितासद्भयस्त्यक्तासद्धेतुकानर्थशङ्को धर्मेणानृशंस्यादिना सौम्यं रम्यं चरितं वृत्तं यस्य स तथोक्तः । सौम्यः पुमान्बुधे विप्रे त्रिषु स्यात्सोमदैवते । रम्येऽनुग्रे च' इति रत्नमाला । रामो विश्वस्य पतिः स्यादेकच्छत्राधिपतिर्भवितुमर्ह इत्यर्थः ॥ १३ ॥ अत्रास्मिन्संदेहे ॥ परशुरामस्योत्तेजनं निशातनं वैरसंधुक्षणम् ॥ पक्षान्तरे रामेण जामदग्न्यस्य जये महादोषः । पूर्वोक्तो महाननर्थ इत्यर्थः ॥ तत्रापि तस्मिन्पक्षेऽपि रामेण जामदग्न्यस्य जयेऽपि शक्तितः शक्त्यनुसारेण प्रतिविधास्यते प्रतीकारः करिष्यते । अस्माभिरिति शेषः । वञ्चनया दण्डकारण्यप्रस्थापनसीताहरणादिरूपं प्रतीकारं करिष्य इत्यर्थः । परशुरामोत्तेजनमिति द्वितीयतृतीययोरङ्कयोरर्थः प्रतिविधास्यत इति चतुर्थाङ्कस्य चार्थः सूचितः । किंत्विति द्वितीयपक्षपरित्यागेन प्रथमपक्षपरिग्रहः । **तान्येवेति** । अत्र रामस्येत्यादि । रामस्य तान्येव भूतानि यदि लोकसाधारणानि

तदुत्तिष्ठ । मिथिलाप्रस्थापनाय जामदग्न्यमुत्तेजयितुं महेन्द्रद्वीपमेव गच्छावः । द्रष्टव्यश्च तत्र भार्गवः ।

गभीरो माहात्म्यात्प्रशमशुचिरत्यन्तसुजनः
प्रसन्नः पुण्यानां प्रचय इव सर्वस्य सुखदः ।

---

देहारम्भकाणि पृथिव्यादिभूतानि यदि । 'युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु' इत्यमरः । ता एव शक्तयो यदि लोकसाधारणानि सामर्थ्यानि च यदि । ततो रामात्परशुरामस्य पराजयं न प्रतीमो न निश्चिनुमः । अयं भावः—रामस्य विग्रहारम्भकाणि वीरपुरुषान्तरसाधारणानि शक्तयश्च सर्ववीरपुरुषसाधारण्यश्चेद्रामात्परशुरामस्य पराजयो न भवेदेव । परंतु 'न भूतसंघसंस्थानो देहोऽस्य परमात्मनः । न तस्य प्राकृता मूर्तिः,' 'परास्य शक्तिर्विविधैव श्रूयते' इत्यादिशास्त्रोक्तरीत्या रामस्य लोकविलक्षणविग्रहशक्तियोगाद्रामात्परशुरामस्य पराभवः शङ्कनीय एवेति । यद्वा परशुरामस्य तान्येव भूतानि यदि पूर्वावस्थावस्थितानि यद्यनाकृष्टानि । अक्षराणीत्यर्थः । ता एव शक्तयो यदि । शक्तयोऽप्यनाकृष्टाश्चेदित्यर्थः । ततो रामादित्यादि । अयमाशयः—रामेण परशुरामस्य विग्रहसारशक्तयो नाकृष्टाश्चेद्रामात्तस्य पराजयो न भवेत् । रामेण ता यद्याकृष्टा भवेयुस्तदा रामात्तस्य पराजयो भवेदेवेति । किंच तान्येवेत्यादि । रामस्य देहारम्भकाणि भूतान्येव परशुरामस्य देहारम्भकाणि । रामनिष्ठा एव शक्तयः परशुरामनिष्ठाश्च भवन्ति खलु । उभयोरपि भगवदवतारत्वेन धर्मैक्यात् । अतः परशुरामस्य पराजयं न प्रतीमः । 'नहि स्वस्मात्स्वस्य पराजयः' इति युक्तिसंभवोऽस्तीत्यपि ध्वन्यते ॥ १४ ॥ तत्तस्मान्मिथिलाप्रस्थापनाय जामदग्न्यस्य मिथिलाप्रस्थापनं कर्तुमुत्तिष्ठेत्यन्वयः । जामदग्न्यमुत्तेजयितुमुद्भूतक्रोधं कर्तुं महेन्द्रद्वीपमेव गच्छाव इति संबन्धः । तत्र महेन्द्रद्वीपे भार्गवो भृगोरपत्यं परशुरामो द्रष्टव्यश्च प्रकृतनिमित्तेनाप्यभ्युदयार्थं द्रष्टव्य एवेत्यर्थः । **गभीर इति** । माहात्म्यान्महाप्रयत्नवत्त्वान्महाधैर्यवत्त्वान्महामनस्त्वादभिजनतपोऽतिशयप्रभृतिमहास्वभाववत्वात्परमात्मांशत्वान्महाज्ञानवत्त्वान्महाशरीरवत्त्वाच्च गभीरो दुर्ज्ञेयः ।'आत्मा यत्नधृतिस्वान्तस्वभावपरमात्मसु । जीवबुद्धिशरीरेषु' इति रत्नमाला । प्रशमेन प्रकृष्टेनान्तरिन्द्रियनिग्रहेण शुचिरनघोऽत्यन्तसुजनोऽतिशयितसौजन्यवान् । सौजन्यमानृशंस्यादिपूर्णत्वम् । सर्वस्य जनस्य पुण्यानां सुकृतानां प्रसन्नः प्रचय इव फलप्रदानोन्मुखातिशय इव सर्वस्य जनस्य सुखदः सौख्यहेतुरसौ जामदग्न्यो दृष्टः सन्प्राणिभिः साक्षात्कृतः सन्प्रभुत्वस्योत्कर्षाज्जगदेकस्वामित्वात्सर्वकार्यनिर्वहणानुगुणसामर्थ्यातिशयाद्वा । तपसां कायशोषणादीनां परिणत्या परया काष्ठया या विशुद्धिरनघत्वं ततो हेतोश्च सर्वस्य प्राणिनः सत्त्वं बलं सत्त्वगुणं साधुतां वा । 'सत्त्वं द्रव्ये पिशाचादौ व्यवसायस्वभावयोः । गुणप्राणबलस्वान्तसत्तास्वस्त्री तु जन्तुषु ॥' इति रत्नमाला । प्रबलयति वर्धयति । पापं नुदति चानिष्टहेतुदुरितं नाशयति च । अतो द्रष्टव्य इति पूर्वेण संबन्धः । अत्र प्रभुत्वस्योत्कर्षात्

प्रभुत्वस्योत्कर्षात्परिणतिविशुद्धेश्च तपसा-
मसौ दृष्टः सत्त्वं प्रबलयति पापं च नुदति ॥ १५ ॥

(उत्थाय परिक्रम्य निष्क्रान्तौ ।)

मिश्रविष्कम्भः ।

---

(नेपथ्ये ।)

भो भो विदेहनगरीनिर्गता राजकुलचारिणः, कथयन्तु भवन्तः कन्यान्तःपुरगताय रामाय—

'कैलासोद्धारसारत्रिभुवनविजयौर्जित्यनिष्णातदोष्णः
पौलस्त्यस्यापि हेलापहृतरणमदो दुर्दमः कार्तवीर्यः ।
यस्य क्रोधात्कुठारप्रविघटितमहास्कन्धबन्धस्थवीयो-
दोःशाखादण्डषण्डस्तरुरिव रहितः कुल्यकन्दैः पुराभूत् ॥ १६ ॥
सोऽयं त्रिःसप्तवारानविकलविहितक्षत्रतन्त्रप्रमारो
वीरः क्रौञ्चस्य भेदात्कृतधरणितलापूर्वहंसावतारः ।

---

'सत्त्वं प्रबलयति' इत्यनेन 'महान्प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः' इति श्रुत्यर्थोऽनुसंहितः । 'पापं च नुदति' इत्यनेन 'ते पुनन्त्युरुकालेन दर्शनादेव साधवः' इति स्मृत्यर्थोऽनुसंहितः ॥ १५ ॥ मिश्रविष्कम्भः संस्कृतप्राकृतात्मको विष्कम्भः ॥ राजकुलेषु राजगृहेषु चरन्तीति राजकुलचारिणः । **कैलासेति** । कैलासोद्धारस्य कैलासपर्वतोद्धारणस्य सारेण तद्धेतुभूतबलेन । 'सारो बले स्थिरांशेऽर्थे न्याय्ये क्लीबं वरे त्रिषु । क्लीबमम्बुनि' इति रत्नमाला । त्रयाणां भुवनानां समाहारस्त्रिभुवनम् । पात्रादित्वात्क्लीबत्वम् । तस्य विजयस्य स्ववशीकरणस्यौर्जित्येन । ऊर्जितो बलिष्ठः । 'ऊर्ज बलप्राणनयोः' इत्यस्मात् 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च' इति कर्तरि क्तः । तस्य भाव और्जित्यम् । ब्राह्मणादेराकृतिगणत्वाद्भावे ष्यञ् । तेन निष्णातः सर्वकार्यनिपुणो दोर्बाहुर्यस्य स तथोक्तस्तस्य पौलस्त्यस्यापि रावणस्यापि । इयं षष्ठी मद इत्यनेनान्वेति । हेलयानासेनापहृतो रणमदो युद्धदर्पो येन स तथोक्तः । दुर्दमो दुर्निग्राह्यः कार्तवीर्यो यस्य परशुरामस्य क्रोधात्कुठारेण परशुना प्रविघटिताश्छिन्ना महान्तः पृथुलाः स्कन्धा एव स्कन्धाः । श्लिष्टरूपकम् । तेषां बन्धा बन्धनानि यासां तथोक्ताः स्थवीयस्योऽतिस्थूला दोःशाखा एव बाहुलक्षणाः शाखा एव दण्डषण्डानि दण्डसमूहा यस्य स तथोक्तः सन्कन्दैरिव कुल्यैरस्थिभिः । 'अस्थि कुल्यं स्यात्' इति रत्नमाला । रहितः शून्यस्तरुरिव वृक्ष इव पुराभूत्पूर्वमभूत् ॥ १६ ॥ **सोऽयमिति** । सोऽयं त्रिःसप्तवारानेकविंशत्यवसरान् । 'निवहावसरौ वारौ' इत्यमरः । अत्यन्तसंयोगे द्वितीया । 'द्वित्रिचतुर्भ्यः सुच्' इति त्रिशब्दात्सुच् । अविकलं समग्रं यथा तथा विहितः कृतः क्षत्राणां क्षत्रियाणां तन्त्रमनेककर्मकारकेष्वेकक्रिया-

जेता हेरम्बभृङ्गिप्रमुखगणचमूचक्रिणस्तारकारे-
स्त्वां पृच्छञ्जामदग्न्यः स्वगुरुहरधनुर्भङ्गरोषादुपैति ॥ १७ ॥'

(ततः प्रविशति सधैर्यसंभ्रमो रामः सीता सख्यश्च ।)

**रामः**—

माहाभाग्यमहानिधिर्भगवतो देवस्य दग्धुः पुरा-
माम्नायेन विशुद्धसत्त्वचरितः शिष्यो भृगूणां पतिः ।

---

व्यक्तिरूपः प्रकृष्टो मारो मरणं येन स तथोक्तः । तन्त्रं ह्यनेकप्रधानोद्देशेन क्रियायाः सकृदनुष्ठानम् । यथा—दर्शादिक्रियोद्देशेन प्रयाजादीनां सकृदनुष्ठानम् । एतच्चाध्वरमीमांसायामेकादशाध्याये भगवता जैमिनिना निरूपितं तत्र द्रष्टव्यम् । इह त्वेकेनैवोद्यमेन बहूनां क्षत्रियाणां वधमिति तन्त्रशब्दप्रयोगः । 'तन्त्रं स्वराष्ट्रचिन्तायां तन्तुवाये परिच्छदे । यागप्रयोगे सिद्धान्ते शास्त्रमन्त्रौषधेषु च ॥ एकस्यैवोभयार्थत्वे कुटुम्बव्यापृतावपि ॥' इति रत्नमाला । 'मारो ना मरणे कामे मारी चण्ड्यां जनक्षये' इति च रत्नमाला । वीरः शूरः । क्रौञ्चस्य क्रौञ्चपर्वतस्य भेदाद्दारणात्कृतो धरणितलेऽपूर्वो नूतनो हंसानामवतारोऽवरोहणं येन स तथोक्तः । पूर्वं हि हंसा मानससरस्येव स्थिता भूमौ नावरोहन्ति स्म । तदनन्तरं भगवता परशुरामेण क्रौञ्चपर्वते सरन्ध्रीकृते सति तेभ्यो रन्ध्रेभ्यो हंसा मानससरसो भूतलमवतरन्तीति पौराणिकी प्रसिद्धिरत्र द्रष्टव्या । हेरम्बो विनायकः, भृङ्गी भृङ्गीनामको रुद्रपरिवारविशेषः, तौ प्रमुखौ प्रधानौ येषां ते तथोक्तास्तेषां गणानां प्रमथानाम् । 'संघाते प्रमथे गणः' इत्यमरः । चमूनां सेनानां चक्राणि समूहाः सन्त्यस्येत्यस्मिन्नर्थे चक्रशब्दात् 'अत इनिठनौ' इति मत्वर्थीय इनिप्रत्ययः । 'चक्रं चये जलावर्ते रथाङ्गे राष्ट्रसैन्ययोः । घटसाधनभेदे च क्लीबे कोके तु पुंस्ययम् ॥' इति रत्नमाला । तारकारेः स्कन्दस्य जेताभिभविता । पुरा खलु शस्त्रकलहे स्कन्दं परशुरामो जितवानिति पौराणिकी प्रसिद्धिः । जामदग्न्यः परशुरामः स्वगुरोर्हरस्य रुद्रस्य धनुषो भङ्गेन रोषात्त्वां पृच्छन्सन्नुपैति प्राप्नोति ॥ ॥ १७ ॥ **सीतेति** । प्रविशतीत्यनुषङ्गः । सख्यश्च प्रविशन्तीति विपरिणामश्च ॥ **माहाभाग्येति** । माहाभाग्यस्य महाभागताया महानिधिर्निधयो नव प्रसिद्धास्तेभ्योऽप्यतिशयितो निधिर्भगवतो देवस्य पुरां दग्धुः शिवस्य शिष्य आम्नायेन वेदाभ्यासेन विशुद्धान्यनघानि सत्त्वं व्यवसायश्चरितानि वृत्तानि यस्य स तथोक्तः । भृगूणां भृगुवंशप्रभवाणां पतिः श्रेष्ठः परशुरामो द्रष्टव्यः । मयेति शेषः । स च मां दिदृक्षुः सोऽपि मां द्रष्टुमिच्छुः । भवतीति शेषः । तथा तद्दर्शनं ममाभ्युदयहेतुस्तद्वत्तद्दृष्टिविषयत्वमपि ममाभ्युदयहेतुरिति भावः । यथोक्तम्—'यस्यानुभावपर्यन्ता दृष्टिस्तस्वे प्रतिष्ठिता । तद्दृष्टिगोचराः सर्वे मुच्यन्ते सर्वकिल्बिषैः ॥' इति । अपिचेत्यादिपूर्वोक्तार्थविरोधद्योतकोऽपिचेत्यव्ययसंघातः । मुग्धया । 'उदयद्यौवना मुग्धा

द्रष्टव्यः स च मां दिदृक्षुरपि च त्यक्त्वा ह्रियं मुग्धया
संत्रासादयमाभिजात्यनिभृतस्नेहो मयि द्योत्यते ॥ १८ ॥

**सीता**—सहिओ, कहं एदम्।

**सख्यः**—कुमार, अलं दाव तवराए।

**रामः**—नोत्सवाः परावधीरणावैरस्यमर्हन्ति।

**सख्यः**—वारंवारं णिक्खत्तीकिदसमत्तजीअलोओ णिवट्टिअविस-अव्ववसाओ परसुरामो सुणीअदि।

**रामः**—किमेकदेशेन महाज्ञाननिधेर्माहात्म्यमपह्नियते। य एषः
उत्खातक्षितिपालवंशगहनास्त्रिःसप्तकृत्वो दिशः
कृत्वा विश्रुतकार्तिकेयविजयश्लाघ्यश्च बाह्वोर्बलात्।

---

१. सख्यः, कथमेतत्।

२. कुमार, अलं तावत्त्वरया।

३. वारंवारं निःक्षत्रीकृतसमस्तजीवलोको निवर्तितविषयव्यवसायः परशुरामः श्रूयते।

---

लज्जाविजितमन्मथा' इत्युक्तमुग्धालक्षणलक्षितया सीतया संत्रासाद्भयातिशयाद्ध्रियं लज्जां त्यक्त्वाभिजात्येन परमप्रकृष्टजनकवंशप्रसूतत्वेन हेतुना निभृतः स्थिरमतोऽयं स्नेहोऽस्थानातिशङ्काहेतुः प्रीतिविशेषो मयि परशुरामं दिदृक्षौ तेन च दिदृक्षिते मयि द्योत्यते मुखभङ्गीविशेषेण सूच्यते। मम तद्दर्शनेच्छाविरुद्धो मयि स्नेहस्थितया सूच्यत इत्यर्थः ॥ १८ ॥ एतत्परशुरामदर्शनम् ॥ परशुरामदर्शनत्वरयालम्। साध्यं नास्तीत्यर्थः। 'गम्यमानापि क्रिया कारकविभक्तौ प्रयोजिका' इति तृतीया ॥ उत्सवा विवाहादयः। परैरवधीरणया परप्रयुक्तपरिभवेन वैरस्यं स्वादुताविरहं नार्हन्ति। किंतु परावधीरणापरिहारेणैवोत्सवानां रस्यत्वमित्यर्थः ॥ वारंवारमवसरेऽवसरे। 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया। निवर्तितो निष्पादितो विषयव्यवसायः क्षत्रियरुधिरेण पितृतर्पणसंकल्पो येन स तथोक्तः। ब्राह्मणस्य क्षत्रियवधो ह्यकृत्यकरणमिति भावः ॥ एकदेशेन महति गुणसमुदायेऽन्तर्गतेनैकेन दोषेण महाज्ञाननिधेः सर्वदोषानभिष्वङ्गहेतुभूततत्त्वज्ञानपूर्णस्य माहात्म्यं सर्वाभ्यर्हणत्वमपह्नियते नाश्यते। 'तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा' इति ह्युक्तम्। 'एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः' इति न्यायः शास्त्रे द्रष्टव्यः। य एषः यः परशुरामः। **उत्खातेति**। दिशः कर्म। त्रिःसप्तकृत्व एकविंशतिवारान्। 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्', 'द्वित्रिचतुर्भ्यः सुच्' इति सूत्राभ्यां सप्तन्शब्दात्कृत्वसुच्प्रत्ययस्त्रिशब्दात्सुच्प्रत्ययश्च। उत्खातान्युन्मूलितानि क्षितिपालानां राज्ञां

सद्वीपामथ काश्यपाय मुनये दत्त्वाश्वमेधे महीं
शस्त्रव्यस्तसमुद्रदत्तविषयं लब्ध्वा तपस्तप्यते ॥ १९ ॥

(नेपथ्ये ।)

सत्त्वभ्रंशविषादिभिः कथमपि त्रस्तैः क्षणं वेत्रिभि-
र्दृष्टो दृष्टिविघातजिह्मितमुखैरव्याहतप्रक्रमः ।
रामान्वेषणतत्परः पुरजनैरुन्मुक्तहाहारवः
कन्यान्तःपुरमेव हा प्रविशति क्रुद्धो मुनिर्भार्गवः ॥ २० ॥

**रामः**—नन्वेत एव शिष्टाचारपद्धतेः प्रणेतारः । तत्कथमयं विद्वान्प्रमाद्यति । भवतु । उपसर्पामि । (सधैर्यविकटं परिक्रामति ।)

**सख्यः**—अह्मो, समन्तदो एव्व 'हा देव चन्दमुह रामचन्द, हा

---

१. अहो, समन्तत एव 'हा देव चन्द्रमुख रामचन्द्र, हा जामातृक' इति

---

वंशा एवान्वया एव वंशा वेणवः । श्लिष्टरूपकम् । तेषां गहनानि वनानि यासां तास्तथोक्ताः । वंशगहनपदेन 'न स्वान्येव कुलानि केवलमिदं सर्वं दहेयुर्वनम्' इति न्यायेन राज्ञां दुष्टत्वं सूचितम् । विधेयविशेषणम् । कृला विद्यमान इति शेषः । विश्रुतः प्रसिद्धः कार्तिकेयस्य कृत्तिकानामपत्यस्य स्कन्दस्य । 'स्त्रीभ्यो ढक्' । विजयो यस्य स तथोक्तः । किंच बाह्वोर्बलाच्छ्लाघ्यो य एष परशुरामः । अश्वमेधे काश्यपाय मुनये सद्वीपां महीमष्टादशद्वीपयुक्तां भूमिमथ दत्त्वा कात्स्न्र्येन दत्त्वा । 'मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथ' इत्यमरः । शस्त्रेण परशुना व्यस्तेनोत्सारितेन समुद्रेण दत्तमनुमतं विषयं निवासदेशं लब्ध्वा प्राप्य तपस्तप्यते तपश्चरति । पाकं पचतीतिवत् । 'तप ऐश्वर्ये वा' इति श्यन्तङौ । अस्य महाज्ञाननिधेरित्यादिपूर्वेण संबन्धः ॥ १९ ॥ **सत्त्वेति** । सत्त्वभ्रंशेन दर्शनमात्रेण बलहान्या विषादिभिर्दुःखितैस्त्रस्तैरुद्विग्नैर्दृष्टिविघातेन तेजोतिशयप्रयुक्तचक्षुःप्रसरप्रतिघातेन जिह्मितानि कुटिलितानि मुखानि येषां ते तथोक्तैर्वेत्रिभिः कन्यान्तःपुराधिकृतैर्वेत्रधारिभिः पुरुषैः कथमप्यतिप्रयासेन क्षणं दृष्टोऽव्याहतोऽकुण्ठितः प्रक्रमः प्रारम्भो यस्य स तथोक्तः । तदेव परमुत्कृष्टमिष्टं यस्य तत्परः । रामान्वेषणे तत्परो रामान्वेषणतत्परः । 'सप्तमी' इति योगविभागात्समासः । अतएव पुरजनैर्मिथिलानगरस्थितजनैरुन्मुक्त उच्चैर्मुक्तो हाहारवो यस्मिन्स तथोक्तः । क्रुद्धो भार्गवमुनिः कन्यान्तःपुरमेव प्रविशति रामाध्युषितं कन्यान्तःपुरमेव प्रविशति । हाशब्दो विषादे । 'हा विषादशुगर्तिषु' इत्यमरः । अत्र बिन्दुर्नामार्थप्रकृतिरुक्तः । यथोक्तम्—'अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम्' इति ॥ २० ॥ नन्वित्यवधारणे । एत एव एतादृशा एव शिष्टाचारपद्धतेः शिष्टाचारपरिपाट्याः प्रणेतारः कल्पसूत्रकाराः । भवन्तीति शेषः । तत्तस्मादयं परशुरामो विद्वान्धर्माधर्मविशेषज्ञः सन्प्रमाद्यत्यनवधानं प्राप्नोति । धर्मविस्मरणेन मह्यं नापकुर्यादित्यर्थः । उपसर्पामि समीपं

जामादुए'त्ति परिदेवणमुहरकाअरुव्विग्गसमत्तपरिअणं पलाइदं अम्हरा-अउलम् । भट्टदारिए, सअं एव्व विण्णवेहि भट्टारम् ।

**सीता**—तेण हिं तुवरन्तिओ संभावेह्म वेअपत्थिअं अज्जउत्तम् ।

(इति परिक्रामति ।)

**सख्यः**—कुमार, कुमार, पेक्ख दाव तुवराविसिङ्खलमरालवहुब्भ-न्तगमणं भट्टिदारिअम् ।

**रामः**—(सप्रेमानुकम्पं परिवृत्य) कातरेयमत्रभवद्भिरेव पर्यवस्थापयि-तव्या ।

**सख्यः**—सहि, ससुरासुरसमत्ततेल्लोक्कमङ्गलं तुङ्गजयलच्छीलञ्छिअं ईसिविब्भमविसट्टणेत्तकन्दोट्टसोहाविहरन्तमुहपुण्डरीअवित्थारिदसिणेह-

---

परिदेवनमुखरकातरोद्विग्नसमस्तपरिजनं पलायितमस्मद्राजकुलम् । भर्तृदारिके, स्वयमेव विज्ञापय भर्तारम् ।

१. तेन हि त्वरमाणाः संभावयेम वेगप्रस्थितमार्यपुत्रम् ।

२. कुमार कुमार, प्रेक्षस्व तावत्त्वराविशृङ्खलमरालवधूद्भ्रान्तगमनां भर्तृदा-रिकाम् ।

३. सखि, ससुरासुरसमस्तत्रैलोक्यमङ्गलं तुङ्गजयलक्ष्मीलाञ्छितमीषद्विभ्रम-

---

गच्छामि । विषयं यथा तथा ॥ **जामातृकेति** । अनुकम्पनीयो जामाता जामातृक-स्तस्य संबुद्धिः । 'अनुकम्पायाम्' इति कन् । परिदेवनेन रोदनशब्देन मुखराः शब्दाय-मानाः, कातरा भीताः, उद्विग्ना अतिशयेन कम्पिताः । 'ओविजी भयचलनयोः' इत्यस्मात् 'गत्यर्थाकर्मक–' इत्यादिना कर्तरि क्तः । 'ओदितश्च' इति निष्ठातकारस्य नकारः । समस्ताः परिजना यस्य स तथोक्तं राजकुलं राजवृन्दं पलायितमपसर्पि-तम् । 'अय पय गतौ' इत्यस्मात्कर्तरि क्तः । 'उपसर्गस्यायतौ' इति पराशब्दरेफस्य लकारः । भर्तृदारिके राजपुत्रि । 'राजा भट्टारको देवस्तत्सुता भर्तृदारिका' इत्य-मरः ॥ तेन राजकुलस्यापि पलायनेन । प्राकृत आत्मनेपदाभावात् 'तुवरन्तिओ' इति परस्मैपदम् । संभावयेम । परशुरामसमीपगमनप्रतिषेधेन वर्धयाम इत्यर्थः । विधिलिङ्गयुत्तमपुरुषबहुवचनम् । त्वरया वेगेन विशृङ्खलां धावन्तीं मरालवधूमिव हंसी-मिवोद्भ्रान्तगमनामनवस्थितगमनाम् । 'भ्रमु अनवस्थाने' ॥ प्रेम स्नेहः । अनुकम्पा दया । कातरा भीरुः । पर्यवस्थापयितव्या निर्भया कर्तव्या ॥ त्रैलोक्यमङ्गलं त्रैलोक्य-मङ्गलकरम् । ईषद्विभ्रमेण मुग्धस्वभावात्स्वल्पेन विलासेनोपलक्षितम् । विस्रस्तस्य नेत्र-कुवलयस्य । प्राकृते कुवलयशब्दस्य कन्दोट्टादेशः । शोभया विहरता विलसता मुखपुण्ड-रीकेण विस्तारितौ प्रकाशितौ स्नेहसंभ्रमौ यया सा तथोक्ता ॥ स्वस्था सती स्वे स्वभावे

संभमा सव्वदा अह्मपुरदो वण्णेसि । ता किंति विअआहिमुहे कुमारे उक्कम्पितासि ।

**सीता**—सव्वक्खत्तिअसंदावआरी परसुरामो त्ति ।

**रामः**—प्रिये, स्वस्था सती निवर्तस्व ।

आतङ्कश्रमसाध्वसव्यतिकरोत्कम्पः कथं सह्यता-
मङ्गैर्मुग्धमधूकपुष्परुचिभिर्लावण्यसारैरयम् ।
उन्नद्धस्तनयुग्मकुड्मलगुरुश्वासावभुग्नस्य ते
मध्यस्य त्रिवलीतरङ्गकजुषो भङ्गः प्रिये मा च भूत् ॥ २१ ॥

(नेपथ्ये ।)

भो भोः परिष्कन्दाः, क्व रामो दाशरथिः ।

**सीता**— सो एव्व वाहरइ ।

**रामः**—तस्यानरालसाहसप्रचण्डकर्मणः पुष्कलावर्तकस्तनितमांसलो

---

विस्रस्तनेत्रकुवलयशोभाविहरन्मुखपुण्डरीकविस्तारितस्नेहसंभ्रमा सर्वदास्मत्पुरतो वर्णयसि । तत्किमिति विजयाभिमुखे कुमार उत्कम्पितासि ।

१. सर्वक्षत्रियसंतापकारी परशुराम इति ।

२. स एव व्याहरति ।

---

स्थिता सती । यथा पुनर्निर्भया सतीत्यर्थः । **आतङ्केति** । मधूकस्य गुडपुष्पवृक्षस्य । 'मधूके तु गुडपुष्पमधुद्रुमौ' इत्यमरः । पुष्पाणां रुचिरिव कान्तिरिव रुचिः कान्तिर्येषां तानि तथोक्तानि तैः । लावण्येन कान्तिविशेषेण सारैर्वरैः । 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इत्यमरः । लावण्यस्वरूपं तु—'भूयिष्ठं तेज एवाद्भिर्बहुलाभिर्मृदूकृतम् । चक्षुरानन्दजननं लावण्यमिति कथ्यते ॥' इत्यनुसंधेयम् । अङ्गैः कर्तृभिः । अयमीदृशो वाचामगोचर आतङ्कः संज्वरः । 'आतङ्कः संज्वरे रोगे साध्वसे मुरजध्वनौ' इति रत्नमाला । श्रम आयासः साध्वसं भयमेतेषां व्यतिकरेण मेलनेनोत्कम्पो वेपथुः कथं सह्यताम् । एभिरङ्गैरयमुत्कम्पो दुःसह इत्यर्थः । किंच हे प्रिये, उन्नद्धाभ्यामुद्बुद्धाभ्यां कुड्मलाविव स्तनयुग्मं स्तनयुग्मकुड्मलौ ताभ्यां गुरुभिर्दीर्घैः श्वासैश्चावभुग्नस्य कुटिलितस्य । त्रिधा वल्यस्त्रिवल्यः । शाकपार्थिवादिवदुत्तरपदलोपः । 'वलिर्वली चाप्युदररेखाचामरदण्डयोः' इति रत्नमाला । अल्पास्तरङ्गास्तरङ्गकाः । त्रिवल्य एव तरङ्गकास्त्रिवलीतरङ्गकास्ताञ्जुषते भजतीति त्रिवलीतरङ्गजुट् तस्य ते मध्यस्य भङ्गो मा भून्न भवेत् । अतो निवर्तस्वेति पूर्वेण संबन्धः ॥ २१ ॥ परिष्कन्दाः परिचारकाः । 'नियोज्यकिंकरप्रैष्यभुजिष्यपरिचारकाः । पराचितपरिष्कन्दपरजातपरैधिताः' इत्यमरः । 'परेश्च' इति वैकल्पिकं षत्वम् ॥ स एव व्याहरति परशुराम एव वदतीत्यर्थः ॥ तस्य परशुरामस्यानरालेनाकुटिलेन साहसेन शीघ्रप्रयत्नेन

वाङ्निर्घोषः कर्णविवरमाप्याययति । (इति परिक्रामति ।)

**सीता**—[1]का गई । (धनुषि धारयन्ती ।) अज्जउत्त, ण दाव तुम्हेहिं गन्तव्वं जाव तादो णाअच्छइ ।

**सख्यः**—[2]उव्वत्तिअं दाणिं पिअसहीए रसन्तरेण लज्जालुत्तणम् ।

**रामः**—जितं स्नेहेन । तर्हि मुक्त्वा धनुर्गच्छामि ।

(नेपथ्ये 'भो भोः परिष्कन्दाः' इत्यादि पठति ।)

**सीता**—[3]तदो बलादो एव्व धारइस्सम् ।

**रामः**—हन्त हन्त ।

उत्सिक्तस्य तपःपराक्रमनिधेरस्यागमादेकतः
सत्सङ्गप्रियता च वीररभसोन्मादश्च मां कर्षतः ।
वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलय-
न्नानन्दी हरिचन्दनेन्दुशिशिरस्निग्धो रुणद्ध्यन्यतः ॥ २२ ॥

---

१. का गतिः । आर्यपुत्र, न तावद्युष्माभिर्गन्तव्यं यावत्तातो नागच्छति ।
२. उद्वर्तितमिदानीं प्रियसख्या रसान्तरेण लज्जालुत्वम् ।
३. ततो बलादेव धारयिष्यामि ।

---

प्रचण्डकर्मणः क्रूरक्रियस्य पुष्कलावर्तकस्य महामेघविशेषस्य स्तनितवदूर्जितवन्मांसलः स्फीतो वाङ्निर्घोषो वर्णाभिव्यञ्जकध्वनिः कर्णविवरं कर्णरन्ध्रमाप्याययति तर्पयति । 'प्यायी वृद्धौ' इत्यस्मात् 'हेतुमति च' इति णिच् ॥ धनुषि धारयन्ती । चापे राममवलम्बमाना सतीत्यर्थः ॥ रसान्तरेण स्नेहातिशयेन । बाहुलकाल्लज्जधातोरालुच् ॥ जितं स्नेहेन । लज्जापेक्षया स्नेहो बलवानित्यर्थः । तर्हि त्वया धनुषो दृढधारणे सति धनुर्मुक्त्वा गच्छामीत्यन्वयः ॥ भो भो इत्यादि व्याख्यातम् ॥ हन्तेति हर्षेऽनुकम्पायां च । 'हन्त हर्षेऽनुकम्पायाम्' इत्यमरः । **उत्सिक्तस्येति** । उत्सिक्तस्य वीर्येण गर्वोत्तरस्य तपसः कायशोषणादेः पराक्रमस्य बलस्य च निधेरस्य परशुरामस्यागमादागमनाद्धेतोः सत्सङ्गप्रियता च परशुरामरूपसत्पुरुषसंसर्गेण प्रियता च वीररसे यो रभसो हर्षः । 'रभसो वेगहर्षयोः' इति कोशः । तेन य उन्मादश्चित्तविभ्रमप्रायो दशाविशेषः स च मामेकत एकस्मिन्पार्श्वे कर्षत आकर्षतः । द्विवचनान्तमिदम् । आनन्द्यानन्दहेतुः । आनन्दयतेर्णिजन्ताण्णिनिः । हरिचन्दनवदिन्दुवच्च शिशिरः शीतलः स्निग्धो मसृण एष वैदेहीपरिरम्भश्चैतत्सीतालिङ्गनं च मुहुश्चैतन्यं ज्ञानमामीलयन्संमोहयन्सन् । अन्यतोऽन्यस्मिन्पार्श्वे रुणद्धि । निवृत्तगमनं करोतीत्यर्थः । 'रुधिरावरणे' इत्यस्मात् 'रुधादिभ्यः श्नम्' ॥ २२ ॥ हा इति दुःखे । एषः ।

**सख्यः**—हा, एसो दिप्पन्तदिणअरालोअदुप्पेक्खजठरदेहप्पहापरिक्खेवभासुरो ज्जलन्तं सुणिसिदं परसुं धारअन्तो विसङ्खलुव्वेलहुअवहसिहासहस्ससंदेहिदजडाप्पहाडामरो सुदूरविक्खेवाविद्धविअटोरुदण्डणिब्भराभिघादविहुलिअवसुन्धरो परागदो एव्व सअलक्खत्तिअमहारक्खसो ।

**रामः**—

अयं स भृगुनन्दनस्त्रिभुवनैकवीरो मुनि-
र्य एष निवहो महानिव दुरासदस्तेजसाम् ।
प्रतापतपसोरिव व्यतिकरस्फुरन्मूर्तिमा-
न्प्रचण्ड इव पिण्डतामुपगतश्च वीरो रसः ॥ २३ ॥

---

१. हा एष दीप्यमानदिनकरालोकदुष्प्रेक्ष्यजठरदेहप्रभापरिक्षेपभासुरो ज्वलन्तं सुनिशितं परशुं धारयन्विशृङ्खलोद्वेलहुतवहशिखासहस्रसंदिग्धजटाप्रभाडामरः सुदूरविक्षेपाविद्धविकटोरुदण्डनिर्भराभिघातविह्वलितवसुंधरः परागत एव सकलक्षत्रियमहाराक्षसः ।

---

भार्गव इत्यर्थः । दिनकरालोकः सूर्यतेजः । प्रभापरिक्षेपः प्रभापरिवेषः । 'द्वयोः कुठारः परशुः' इत्यमरोक्त्या परश्विति न नपुंसकलिङ्गम् । जटाप्रभाभिर्हेतुभिर्डामरः।डामरे विप्लवे कुशलः 'कृतलब्धक्रीतकुशलाः'इति कुशलेऽण्प्रत्ययः। भयंकर इत्यर्थः। सुदूरविक्षेपार्थमाविद्धयोर्दीर्घप्रसारितयोर्विकटोरुदण्डयोर्विषमोरुकाण्डयोर्निर्भराभिघातेन दृढाभिघातेन विह्वलितवसुंधरः प्रकम्पितभूमिः परागत एव प्राप्त एव सकलक्षत्रियाणां महाराक्षसो महाहिंसकः ॥ **अयमिति** । अयं पुरोवर्ती व्यक्तिविशेषः । त्रिभुवने लोकत्रय एकेषु मुख्येषु वीरयते विक्रमं करोतीति त्रिभुवनैकवीरः । 'वीर विक्रान्तौ' इति पठितादागर्वीयाद्वीरयतेः कर्तरि पचाद्यच्प्रत्ययः । एको वीर इति विग्रहे तु वीरैक इति स्यात् । स भृगुनन्दनो मुनिः । प्रसिद्धो भृगुपुत्रो मुनिरित्यर्थः । य एष योऽयं भार्गवो मुनिर्महानपरिच्छिन्नो दुरासदः समीपगमनानर्हः । तेजसां निवह इव समूह इव । भवतीति शेषः । किंच मूर्तिमान्वपुष्मान्स्फुरन्प्रकाशमानः प्रतापस्य शत्रुतापनशक्तेस्तपसः कायशोषणादिनियमस्य च व्यतिकर इव मिलितावस्थानमिव भवति । किंच पिण्डतां संघातभावमुपगतः प्राप्तः प्रचण्डोऽत्यन्तं तीक्ष्णो रसः । सामाजिकैश्चर्व्यमाणतया सूत्रशाकटन्यायेन भाविनीं वृत्तिमाश्रित्य रसशब्दवाच्यः वीर इव शत्रुकृतापराधादिना मनःप्रज्वलनात्मकक्रोध इव । भवतीति शेषः । संनिधिमात्रेण विरोधिनिरसने प्रथमोपमा । संबन्धविशेषेण विरोधिनिरसने द्वितीया । कायिकव्यापारेण विरोधिनि-

पुण्योऽपि भीमकर्मा निधिर्व्रतानां चकास्त्यमितशक्तिः ।
मूर्तिमभिरामघोरां बिभ्रदिवाथर्वणो निगमः ॥ २४ ॥

अयं हि ।

कल्पापायप्रणयि विदधत्कालरुद्रानलत्वं
संरब्धस्य त्रिपुरजयिनो देवदेवस्य तिग्मः ।
ब्रह्मच्छद्मा निखिलभुवनस्तोमनिर्माथयोग्यो
राशीभूतः पुनरिव समुत्थाय सामर्थ्यसारः ॥ २५ ॥

(विहस्य ।) अहो स्वाच्छन्द्यवैचित्र्यमत्रभवतः ।

---

रसने तृतीयेति विवेकः ॥ २३ ॥ **पुण्य इति** । य एष इति पूर्वस्मादनुषङ्गः । व्रतानां तपसां निधी रक्षणस्थानविशेषः । अमितेष्वनन्तेषु कार्येषु शक्तिः सामर्थ्यं यस्य स तथोक्तः । यद्वा अमिताः शक्तयो यस्य स तथोक्तः । पुण्योऽपि धर्मिष्ठोऽपि । 'धर्माम्बुपुष्पस्वर्णेषु पुण्यं धर्मवति त्रिषु' इति रत्नमाला । भीमकर्मा भयंकरव्यापारो य एष भृगुनन्दनोऽभिरामघोरां प्रियंकरां भयंकरां च । खञ्जकुब्जादिवद्विशेषणसमासः । मूर्तिं शरीरम् । आनुपूर्वीमिति यावत् । बिभ्रद्धारयन् । अथर्वणा प्रोक्तो वेदोऽथर्वा तमधीत आथर्वणिकः । वसन्तादित्वाट्ठक् । दाण्डिनायनादिसूत्रे निपातनाट्टिलोपाभावः । आथर्वणिकस्याम्नाय आथर्वणः । 'चरणाद्धर्माम्नाययोः' इति प्रकरणे 'आथर्वणिकस्येकलोपश्च' इत्यनेनाण्प्रत्ययः इकलोपश्च । आम्नायस्तु प्रत्ययस्य वाच्यकोटौ न निविशत अतो नाथर्वणो वेद इत्यादौ पौनरुक्त्यम् । निगम इवाम्नाय इव चकास्ति प्रकाशते । 'चकासृ दीप्तौ' इत्यस्माल्लट् । उपमेये प्रणतानुग्रहात्पुण्यत्वं प्रत्यर्थिनिग्रहाद्भीमकर्मत्वम् । उपमाने स्वरतो वर्णतश्चाभिरामत्वं वाच्येनाभिचारविधिना घोरत्वमिति विभागः ॥ २४ ॥ **अयं हीति** । अयं भार्गवः । अस्य चोत्तरत्रान्वयः । **कल्पेति** । कल्पस्य ब्रह्मदिनोपहितस्य प्रपञ्चस्य । 'कल्पस्तु प्रलये न्याये शास्त्रे ब्रह्मदिने विधौ' इति रत्नमाला । अपाये नाशने प्रणयि प्रीतिमत्कालरुद्रानलत्वं सर्वमृत्युभूतरुद्रात्मकत्वाग्निभावं विदधत्कुर्वाणः । 'नाभ्यस्ताच्छतुः' इति नुम्निषेधः । तिग्मस्तीक्ष्णः । निखिलभुवनस्तोमस्य सकलजगत्समूहस्य निर्माथे ध्वंसने योग्योऽनुकूलः कृतसमुत्थानः सन् । 'परमात्मतपो वेदे ब्रह्म ब्रह्माब्जजे द्विजे' इति रत्नमाला । राशीभूतः संघातीभूतः । शक्तेरमूर्तत्वेन राशित्वायोगादभूततद्भावे च्विप्रत्ययः । देवदेवस्य त्रिपुरपीडितैरिन्द्रादिभिः स्तुतस्य । अतएव संरब्धस्य सक्रोधोद्यमवतः । त्रयाणां पुराणां समाहारस्त्रिपुरम् । पात्रादित्वात्स्त्रीत्वाभावः । तस्य जयिनो जेतू रुद्रस्य । 'जि अभिभवे' इति पाठिताज्जयतेः 'जिदृक्षिविश्रयीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च' इति कर्तरीनिप्रत्ययः । सामर्थ्यानां संहारशक्तीनां सार इवोत्कर्ष इव । भवतीति शेषः । उत्प्रेक्षालंकारः । ब्रह्मच्छद्मेत्यत्र त्वपह्नवविशेषोऽलंकारः ॥ २५ ॥ स्वाच्छन्द्यस्य स्वाभिप्रायेण वर्तमानस्य । 'अभिप्रायश्छन्द आशयः' इत्यमरः । स्व आ-

ज्योतिर्ज्वालप्रचयजटिलो भाति कण्ठे कुठार-
स्तूणीरोंऽसे वपुषि च जटाचापचीराजिनानि ।
पाणौ बाणः स्फुरति वलयीभूतलोलाक्षसूत्रं
वेषः शोभां व्यतिकरवतीमुग्रशान्तस्तनोति ॥ २६ ॥

प्रिये, एते गुरवः । तदपसृत्य कृतावगुण्ठना भव ।

**सीता**—हद्धि हद्धि । परागदो एव्व । (अञ्जलिं बद्ध्वा ।) अज्जउत्त, परित्ताअहि साहसिअ ।

**रामः**—अयि प्रिये,

मुनिरयमथ वीरस्तादृशस्तत्प्रियं मे
विरमतु परिकम्पः कातरे क्षत्रियासि ।

---

१. हा धिक् हा धिक् । परागत एव । आर्यपुत्र, परित्रायस्व साहसिक ।

---

त्मीयश्छन्दोऽभिप्रायो न तु लोकशास्त्रव्यपेक्षा यस्य स स्वच्छन्दस्तस्य कर्मेत्यर्थे ब्राह्मणादेराकृतिगणत्वात्स्वच्छन्दशब्दाद्भावे ष्यञ् । तस्य वैचित्र्यं वैविध्यं विस्मयनीयमित्यर्थः । **ज्योतिरिति** । अत्रभवत इत्यनुषज्यते । अत्रभवतः परशुरामस्य कण्ठे ज्योतिषां तेजसां ज्वालानां निर्गतांशानां प्रचयेन समूहेन जटिलो जटावानिति । पिच्छादेराकृतिगणत्वाज्जटाशब्दान्मत्वर्थीय इलच् । कुठारः परशुर्भाति । किंच अंसे भुजशिखरे तूणीर इषुधिः । भातीत्यनुषङ्गः । किंच वपुषि शरीरे जटाचापचीराजिनानि भातीत्यस्यानुषङ्गो बहुवचनान्ततया विपरिणामश्च । तेन भान्तीति लब्धम् । वपुषीति सामान्योक्तावपि सामर्थ्याज्जटायाः शिरसि चापस्य वामपाणौ चीरस्य कट्यामजिनस्योरसि च भानमनुसंधेयम् । किंच वलयीभूतं लोलमक्षसूत्रं रुद्राक्षप्रोतसूत्रं यस्मिन्स तथोक्तस्तस्मिन् । पाणौ दक्षिणकरे बाणः स्फुरति प्रकाशते । यत एवं तत उग्रशान्तो भयंकरः प्रियकरश्च । खञ्जकुब्जादिवद्विशेषणसमासः । पूर्वोक्तकुठारादिभिर्निष्पादितः कृत्रिम आकारो व्यतिकरवतीं वीररसशान्तिरसयोर्मेलनवतीं शोभां चारुतां तनोति । विस्तारयतीत्यर्थः । अत्र कुठारतूणीरचापबाणैरुग्रत्वं जटाचीराजिनाक्षसूत्रैः शान्तत्वमिति विवेकः ॥ २६ ॥ एत इति पूजायां बहुवचनम् । गुरवः । वसिष्ठसनाभित्वाच्छ्वशुरकुलसमाधिना गुरुत्वोक्तिः । अवगुण्ठनमाच्छादनम् ॥ परागत एव । भार्गवः समीपं गत एवेत्यर्थः । आर्यः श्वशुरस्तस्य पुत्रो भर्तेति भर्तुर्व्यपदेशोऽयमार्यपुत्र इति । परित्राणमिह परशुरामसमीपगमनाभावरूपं विवक्षितम् ॥ **मुनिरिति** । अयं परशुरामो मुनिः परमात्ममननशीलो भवति । अथेति गुणान्तरप्रस्तावे । अयं परशुरामस्तादृशो वीरो लोकोत्तरो वीरो भवति । इति यत्तन्मुनित्वमहावीरत्वमेलनं मे प्रियम् । यत एवं ततो हे कातरेऽधीरे परिकम्पो वेपथुर्विरमतु नश्यतु । 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् । किंच कातरे, त्वं क्षत्रियासि । क्षत्रियजातीयासी-

तपसि विततकीर्तेर्दर्पकण्डूलदोष्णः
परिचरणसमर्थो राघवक्षत्रियोऽहम् ॥ २७ ॥

(ततः प्रविशति क्रुद्धः परशुरामः।)

**परशुरामः**—हुम्। अहो, दुरात्मनः क्षत्रियबटोरनात्मज्ञता।

न त्रस्तं यदि नाम दूतकरुणासंतानशान्तात्मन-
स्तेन व्यारुजता धनुर्भगवतो देवाद्भवानीपतेः।

---

त्यर्थः। अतोऽपि परिकम्पो न युक्त इति भावः। 'अर्यक्षत्रियाभ्यां वा स्वार्थे' इति वैकल्पिकङीषानुगागमयोरभावे क्षत्रियशब्दाद्योपधाट्टाप्। तत्प्रियं मे इत्युक्तं विवृणोति—**तपसीत्यादिना**। राघवक्षत्रियोऽहं रघुवंशजः क्षत्रियोऽहम्। तपसि कायशोषणादितपोविषये विततकीर्तेर्विस्तृतयशसो दर्पेण शौर्यगर्वेण कण्डूलौ निर्घर्षणसापेक्षत्वरूपकण्डूलप्रचुरौ। सिध्मादौ 'क्षुद्रजन्तूपतापाच्च' इति कण्डूशब्दाल्लच्। दोषौ भुजौ यस्य स तथोक्तस्यात्रभवतः परशुरामस्य परिचरणे शुश्रूषणे समर्थः। शक्तो भवामीत्यर्थः। अत्र तपसीत्यादिविशेषणद्वयं परिचरणकर्मकारके परशुरामे प्रयुक्तम्। राघवक्षत्रिय इति परिचरणकर्तृकारके स्वस्मिन्विशेषणद्वयं प्रयुक्तम्। अस्यायमाशयः। लङ्घतेर्नलोपश्च 'वालमूललघ्वङ्गुलीनां वा लो रत्वमापद्यते' इति सूत्रवार्तिकाभ्यां 'लघि गतौ' इत्यस्माद्रघुशब्दो निपातितः। 'गत्यर्था बुद्ध्यर्थाः' इति गत्यर्थानां बुद्ध्यर्थत्वाल्लङ्घते जानाति सर्वमिति रघुरिति ज्ञानाधिकत्वं रघुपदप्रवृत्तिनिमित्तं भवति। उक्तं च कालिदासेन—'श्रुतस्य यायादयमन्तमर्भकः' इति। तथा च मम ज्ञानाधिकरघुवंशजन्मानुगुणं तपोनिष्ठमहनीयविषये परिचरणसामर्थ्यम्। क्षत्रियत्वानुगुणं तु दर्पकण्डूलदोष्कतादृशविषये परिचरणसामर्थ्यम्। परिचरणं हि नाम महनीयविषये तदभिप्रायानुसारेण संप्रीणनव्यापारम्। तच्च पादसंवाहनादिरूपं युद्धरूपं वा भवतीत्युभयविधपरिचरणविषयत्वयोग्ये परशुरामे तादृश उभयविधपरिचरणकर्तृत्वयोग्यो भवामीति मम तत्समागमः प्रिय इति। यद्वा उक्तरीत्या ज्ञानाधिकरघुवंशजत्वाज्ज्ञानप्रधानतपोनिष्ठपरशुरामविषये परिचरणसमर्थः शुश्रूषायोग्योऽहम्। क्षत्रियत्वाद्दर्पकण्डूलदोष्कतद्विषयपरितोषणसमर्थश्च भवामीत्यर्थः। 'कुगतिप्रादयः' इत्यत्र प्रादिग्रहणेनैव सिद्धे कुग्रहणं प्रादिसमासस्य क्वाचित्कतां ज्ञापयतीति वैयाकरणोक्त्या परीत्यस्य न समासः। 'पर्यभिभ्यां च' इत्यत्र वाग्रहणानुवृत्तेस्तसिलभावश्च। परिचरणसमर्थ इति पदत्रयं बोध्यम्। श्लेषोऽलंकारः॥ २७ ॥ दुरात्मनो दुर्बुद्धेः क्षत्रियबटोः क्षत्रियबालकस्यानात्मज्ञता स्वस्वभावज्ञानशून्यता। विस्मयनीयेत्यर्थः। **न त्रस्तमिति**। धनुश्चापं व्यारुजता भग्नं कुर्वता। 'रुजो भङ्गे' इति तौदादिकादारुजतेर्लटः शतरि तुदादिभ्यः शस्य ङित्वाद्गुणाभावः। तेन क्षत्रियबटुना रामेण कर्त्रा भगवतः षाड्गुण्यपूर्णाद्देवात्सर्वाराध्याद्भूतेषु करुणायाः कृपायाः संतानेनाविच्छिन्नप्रवाहेन। 'संतानाः स्युरवच्छिन्तिवंशापत्यसुरद्रुमाः' इति रत्नमाला। शान्तः

तत्पुत्रस्तु मदान्धतारकवधाद्विश्वस्य दत्तोत्सवः

स्कन्दः स्कन्द इव प्रियोऽहमथवा शिष्यः कथं न श्रुतः ॥२८॥

एष एव मे प्रशमस्य कर्कशः परिणामः ।

यत्क्षत्रियेष्वपि पुनः स्थितमाधिपत्यं
तैरेव संप्रति धृतानि पुनर्धनूंषि ।
उन्माद्यतां भुजमदेन मयापि तेषा-
मुच्छृङ्खलानि चरितानि पुनः श्रुतानि ॥ २९ ॥

रामः—

अकलिलतपस्तेजोवीर्यप्रथिम्नि यशोनिधा-
ववितथमदध्माते रोषान्मुनावभिधावति ।

---

क्रोधादिरहित आत्मा हृदयं यस्य स तथोक्तस्तस्माद्भवानीपतेः पार्वतीपतेः । भवस्य पत्नी भवानी । 'इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्' इति ङीषानुगागमश्च । तस्याः पतिः शिवस्तस्मात् । 'भीत्रार्थानां भयहेतुः' इति पञ्चमी । न त्रस्तं नाम यदि त्रासाभावः संभाव्यते यदि । 'गत्यर्थाकर्मक–'इत्यादिना त्रस्यतेर्भावे क्तः । 'नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने' इत्यमरः । परदुःखदुःखित्वरूपदयावता परदुःखानुत्पादात्तदधीनानर्थशङ्काविरहः संभावितोऽपि यदीत्यर्थः । तेनेत्यनुषज्यते । तेन रामेण तत्पुत्रस्तस्य भवानीपतेः पुत्रो मदेन गर्वेणान्धस्य कृत्याकृत्यविवेकविरहितस्य तारकस्य तारकासुरस्य वधाद्धेतोर्विश्वस्य समस्तस्य प्राणिनो दत्तोत्सवः कृतानन्दजनकव्यापारः । ददातीत्यत्र करोतीत्यर्थो लाक्षणिक इति विश्वशब्दात्न चतुर्थी । स्कन्दस्तु पूर्वोक्तकारुणिकभवानीपत्यपेक्षया सेनापतित्ववृत्तिप्रयुक्ततीक्ष्णत्वातिशययुक्तः स्कन्दः । 'तु स्याद्भेदेऽवधारणे' इत्यमरः । कथं न श्रुतः । एतादृशं स्कन्दं श्रुत्वा रौद्रचापभङ्गाद्रामः कथं न निवृत्त इति भावः । अथवा स्कन्दाद्भयाभावे स्कन्द इव भवानीपतेः प्रिय इष्टस्ततोऽपि बलाधिक्यादिति भावः । शिष्यो भवानीपतेरधीतविद्योऽहं स्कन्दादपि बलिष्ठः कथं न श्रुतः । स्कन्दाधिकबलत्वादहं नाशकः । किंच 'यथाशक्ति निगृह्णीत देवतागुरुनिन्दकान्' इति न्यायेन गुरुतिरस्कारो ममावश्यं परिहार्यः । अतः कथं मामनाकलयन्नस्मद्गुरोश्चापमर्दितवानिति भावः ॥ २८ ॥ प्रशमस्य क्रोधविरतेः कर्कशोऽनर्थरूपः परिणामः फलपर्यवसायिता । **यदिति** । क्षत्रियेष्वप्यतदर्हेषु क्षत्रियेष्वाधिपत्यं प्रभुत्वं पुनर्मया सर्वक्षत्रियविध्वंसनानन्तरमपि स्थितं तिष्ठति । किंच तैरेवातदर्हैः क्षत्रियैरेव संप्रति मज्जीवनकाले धनूंषि पुनर्धृतानि । किंच भुजमदेन भुजगर्वेणोन्माद्यतां विभ्रान्तचित्तानां तेषां क्षत्रियाणामुच्छृङ्खलान्युन्मर्यादानि चरितानि वृत्तानि मया पुनः श्रुतानीति यदेष एव मे प्रशमस्य परिणाम इति पूर्वेण संबन्धः ॥ २९ ॥ **अकलिलेति** । कलिलो दोषमिश्रो न भवतीत्यकलिलः । 'सलिकल्यनिमहिभडिभण्डिश-

अभिनवधनुर्विद्यादर्पक्षमाय च कर्मणे
स्फुरति रभसात्पाणिः पादोपसंग्रहणाय च ॥ ३० ॥

किंत्वविषयस्तावदाचारस्य ।

जामदग्न्यः—भो भोः परिष्कन्दाः, क रामो दाशरथिः ।

रामः—अयमहं भोः । इत इतो भवान् ।

जामदग्न्यः—साधु राजपुत्र, साधु । सत्यमैक्ष्वाकः खल्वसि ।

अन्विष्यतः प्रमथनाय ममापि दर्पा-
दात्मानमर्पयसि जातिविशुद्धसत्त्वः ।
गन्धद्विपेन्द्रकलभः करिकुम्भकूट-
कुट्टाकपाणिकुलिशस्य यथा मृगारेः ॥ ३१ ॥

---

ण्डिपिण्डितण्डिकुकीभूभ्य इलच्' इति कलतेरिलचप्रत्यये सति कलिलशब्दो निष्पन्नः। कलिल इति मिश्रो गहनश्चेति वैयाकरणाः। तपसः कायशोषणादेस्तेजसो माहात्म्यस्य वीर्यस्य बलस्य च प्रथिमा प्रभुत्वं यस्य स तथोक्तस्तस्मिन्। 'पृथ्वादिभ्य इमनिज्वा' इति भाव इमनिच्। 'रऋतो हलादेर्लघोः' इति ऋकारस्य रेफश्च। यशसः पूर्वोक्तगुणवत्ताप्रथाया निधावक्षयस्थानेऽवितथेन पूर्वोक्तानां तपःप्रभृतीनां हेतूनां सद्भावाद्रुद्भूतेन मदेन गर्वेण ध्माते परिपूरिते मुनौ परशुरामे रोषादभिधावति सति शीघ्रमागच्छति सति पाणिर्मम हस्तोऽभिनवयाधैव गृहीतया। प्रमोषरहितयेत्यर्थः। धनुर्विद्यया धनुर्विषयकज्ञानातिशयेन यो दर्पो गर्वस्तस्य क्षमायानुगुणाय कर्मणे च युद्धाय च पादयोरुपसंग्रहणायाभिवादनेन स्पर्शनाय च रभसाद्धर्षाद्वेगाद्वा स्फुरति प्रवर्तते। अत्र तपस्तेजोभ्यां परशुरामस्य पादोपसंग्रहणं वीर्यमदाभ्यां युद्धं च योग्यमिति भावः। पाणिरिति जातावेकवचनम् ॥ ३० ॥ **किंत्विति**। आचारस्य चिकीर्षितस्य युद्धपादोपसंग्रहणयोरन्यतरानुष्ठानस्याविषयोऽनवसरः। अयुध्यमाने युद्धे दोषः स्यात्। युयुत्सोः पादग्रहणेऽपि शालीनत्वरूपो दोषः स्यात्। अतो यथाभिलषितमनुष्ठानमद्य न युज्यत इत्यर्थः॥ भो भो इत्यादि व्याख्यातम् ॥ अयमहं भो इत्यादि स्पष्टोऽर्थः॥ **अन्विष्यत इति**। जात्योत्पत्त्या विशुद्धसत्त्वः परिशुद्धहृदयस्त्वं प्रमथनाय विशसनायान्विष्यतोऽपि मृगयमाणस्यापि मम मह्यं दर्पाद्वीर्यगर्वादात्मानं स्वं गन्धद्विपेन्द्रस्य मदगन्धयुक्तगजजातिविशेषश्रेष्ठस्य कलभः पोतकः। 'कलभः करिशावकः' इत्यमरः। करिणां गजानां कूटानीव गिरिशृङ्गाणीव। 'कूटोऽस्त्री गिरिशृङ्गे यन्त्रे राशावयोधने व्याजे। अनृते मायायामपि सीराङ्गे निश्चले च पापे च॥' इति रत्नमाला। कुम्भाः शिरःपिण्डाः। 'कुम्भौ तु पिण्डौ शिरसः' इत्यमरः। तेषां कुट्टाकं छेदनकरम्। 'कुट्ट च्छेदने' इत्यस्मात् 'जल्पभिक्षकुट्टलुण्टवृन्दः षाकन्' इति षाकन्प्रत्ययः। पाणिरेव कुलिशं यस्य स तथोक्तस्य मृगारेः सिंहस्यात्मानं यथा स्वात्मानमिवार्पयसि। प्रापयसीत्यर्थः। 'ऋ गतौ' इत्यस्माण्णिच्। 'अर्तिह्रीब्लीरी-

**स्त्रियः**—सन्तं पावं सन्तं पावम् । पडिहदं अमङ्गलम् ।

**जामदग्न्यः**—(निर्वर्ण्य । स्वगतम् ।) रमणीयक्षत्रियकुमार आसीत् ।

चञ्चत्पञ्चशिखण्डमण्डनमसौ मुग्धप्रगल्भं शिशु-
गम्भीरं च मनोहरं च सहजश्रीलक्ष्म रूपं दधत् ।
द्राग्दृष्टोऽपि हरत्ययं मम मनः सौन्दर्यसारश्रिया
हन्तव्यस्तु तथापि नाम धिगहो वीरव्रतक्रूरताम् ॥ ३२ ॥

(प्रकाशम् ।)

प्रागप्राप्तनिसुम्भशांभवधनुर्द्वेधाक्रियाविर्भव-
त्क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणम् ।

---

१. शान्तं पापं शान्तं पापम् । प्रतिहतममङ्गलम् ।

---

क्नूयीक्ष्माय्यातां पुङ् णौ' इति पुक् । 'पुगन्तलघूपधस्य च' इति गुणः । अतः सत्यमैक्ष्वाकोऽसीति पूर्वेण संबन्धः ॥ ३१ ॥ **शान्तं पापमिति** । परशुरामप्रयुक्तेनानिष्टवचनेन रामस्य दुरितं शाम्यतामित्यर्थः । 'आशंसायां भूतवच्च' इति निष्ठा । प्रतिहतममङ्गलम् । पूर्वोक्तपापहेतुकं मङ्गलविपरीतं प्रतिहन्यतामित्यर्थः । अत्रापि पूर्ववन्निष्ठा ॥ **स्वगतमिति** । रहस्यार्थस्य स्वयमनुसंधाने स्वगतशब्दः । तदुक्तम्—'सर्वश्राव्यं प्रकाशं स्यादश्राव्यं स्वगतं मतम्' इति । **चञ्चदिति** । 'वञ्चुचञ्चुतञ्चुत्वञ्चुम्रुञ्चुम्लुञ्चुम्रचुम्लुचु गत्यर्थाः' इति चञ्चतिर्गत्यर्थः पठितः । पञ्चशिखण्डाः शिखामण्डनं भूषणं यस्य तत्तथोक्तम् । 'शिखण्डः पिच्छचूडयोः' इति रत्नमाला । मुग्धं नवम् । बाल्ययुक्तमित्यर्थः । प्रगल्भं प्रभावतः प्रौढम् । 'मुग्धः सौम्ये नवे मूढे' इति रत्नमाला । विशेषणसमासः । गम्भीरं च निपुणैरप्यपरिच्छेद्यस्वभावं च मनोहरं च रमणीयं च । सहजानि स्वाभाविकानि श्रीलावण्यलक्ष्माणि सामुद्रिकशास्त्रप्रसिद्धानि महापुरुषलक्षणानि यस्मिंस्तत्तथोक्तं रूपमाकारम् । 'रूपं स्वभावे शुक्लादौ सौन्दर्ये नाटकेऽपि च । ग्रन्थावृत्त्योः' इति रत्नमाला । दधद्वहन्नसौ शिशुरारब्धयौवनो रामो द्राग्दृष्टोऽप्यद्यैव मयावलोकितः सन्नपि सौन्दर्यसारस्य सौन्दर्यश्रेष्ठस्य श्रिया समृद्ध्या मम मन आततायिनोऽपि मे हृदयं हरति स्ववशं नयति । प्रीतिकरो भवतीत्यर्थः । तथाप्येवं प्रीतिकरत्वेऽप्यसौ हन्तव्यस्तु नाम मया हन्तव्य एवेत्यभ्युपगम्यते । 'तु स्याद्भेदेऽवधारणे' इति, 'नामप्राकाश्यसंभाव्यक्रोधोपगमकुत्सने' इति चामरः । वीराणां व्रतस्य युद्धकर्तव्यतानियमस्य क्रूरतां धिक् । क्रूरता निन्द्येत्यर्थः । 'धिगुपर्यादिषु त्रिषु' इति द्वितीया । 'धिङ् निर्भर्त्सननिन्दयोः' इत्यमरः ॥ ३२ ॥ **प्रागिति** । प्राक्पूर्वम् । प्राप्तमनुभूतं निसुम्भं प्रहारो येन तत्तथोक्तम् । निसुम्भशब्दस्ताडने रूढः । तथाविधस्य शांभवधनुषो रौद्रचापस्य । शंभुशब्दात् 'तस्येदम्' इत्यण् । द्वेधाक्रियया द्विधाकरणेन । खण्डद्वयकरणेनेति यावत् । 'एधाच्च' इति द्विश-

सज्वालः परशुर्भवत्वशिथिलस्त्वत्कण्ठपीठातिथि-
र्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते ॥ ३३ ॥

**स्त्रियः**—हद्धी हद्धी। पज्जलिदो क्खु एसो।

**रामः**—(सधैर्यबहुमानं निर्वर्ण्य।) अयं स किल यः सपरिवारकार्तिकेयविजयावर्जितेन भगवता नीललोहितेन सहस्रपरिवत्सरान्तेवासिने तुभ्यं प्रसादीकृतः परशुः।

---

१. हा धिक् हा धिक्। प्रज्वलितः खल्वेषः।

---

ब्दादेधाच्प्रत्ययः। आविर्भवताधिकमुत्पद्यमानेन क्रोधेन कोपेन प्रेरितस्य भीमस्य भयंकरस्य भार्गवस्य परशुरामस्य भुजस्तम्भेन स्तम्भसदृशभुजेनापविद्धः क्षिप्तः सज्वालो ज्वालासहितोऽशिथिलो दृढः परशुः कुठारस्त्वत्कण्ठ एव पीठमासनम्। 'कण्ठो वाचकशब्दे स्यात्संनिधाने गले ध्वनौ' इति रत्नमाला। अतिथिः क्षणं भवतु। अतिथिर्ह्यासन उपविष्टो भवति तद्वदयं परशुस्त्वत्कण्ठे क्षणं तिष्ठत्वित्यर्थः। येन पूर्वोक्तेनानेन पुरोवर्तिना परशुना देवोऽपि जिगीषुर्हरो रुद्रो जगत्सु लोकेषु खण्डपरशुः ख्याप्यते खण्डपरशुनाम्ना प्रसिद्धः क्रियते। 'ख्याप्रकथने' इत्यस्माण्णिचि पुगागमे कर्मणि लटि यक्। खण्डयत्यहितानिति खण्डः। खण्डः परशुर्यस्येति विग्रहः। 'भूतेशः खण्डपरशुः' इत्यमरः। उत्तरयच्छब्दस्य तच्छब्दनिरपेक्षत्वात्तच्छब्दो न प्रयुक्तः। यद्वा सज्वाल इत्यत्र 'सः ज्वालः' इति पदद्वयम्। ज्वलतीति ज्वालः। 'ज्वलितिकसन्तेभ्यो णः' इति कर्तरि णप्रत्ययः। येन ख्याप्यते स परशुरित्यादि योजयितव्यम्। अत्र 'जृम्भितं तद्धनुर्दृष्ट्वा शैवं विष्णुपराक्रमैः' इति श्रीमति रामायणे स्थितम्। कालिदासेनापि 'विद्धि चात्तबलमोजसा हरेरैश्वरं धनुरभञ्जि यत्त्वया। खातमूलमनिलो नदीरयैः पातयत्यपि मृदुस्तटद्रुमम्' इत्युक्तम्। भोजराजेनापि 'जीर्णचापात्तकीर्तेः' इत्युक्तम्। प्रकृते तु 'प्रागप्राप्तनिसुम्भशांभवधनुः' इत्युक्तम्। अनयोर्विरोधस्त्वित्थं शमयितव्यः। विष्णोरन्येन केनाप्यभग्नपूर्वमिदं धनुर्भञ्जितवतस्तव कण्ठे कुठारोऽयं पतत्विति। अथवा प्रागप्राप्तनिसुम्भेति संबुद्ध्यन्तं रामविशेषणम्। पूर्वमननुभूतप्रहार हे राम, शांभवं धनुरित्यादि योजयितव्यम् ॥ ३३ ॥ एष परशुरामः। क्रोधेनेति शेषः॥ **अयमिति**। यः सपरिवारस्य ससैन्यस्य कार्तिकेयस्य स्कन्दस्य विजयेनाभिभवेन हेतुनावर्जितेन वशीकृतहृदयेन नीललोहितेनार्धनारीश्वरेण। नीलत्वं नार्यंशे, लोहितत्वं स्वांशे। सहस्रस्य परिवत्सराणां समाहारः सहस्रपरिवत्सरम्। पात्रादित्वात्क्लीबत्वम्। सहस्रपरिवत्सरमन्तेवासीति विग्रहः। अत्यन्तसंयोगे द्वितीया। सुप्सुपेति समासः। अन्ते वसतीत्यन्तेवासी। 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः। 'शयवासवासिष्वकालात्' इति सप्तम्या अलुक्। 'छात्रान्तेवासिनौ शिष्ये' इत्यमरः। प्रसादीकृतः। प्रसादशब्दोऽनुग्रहवाचको लक्षणया तत्पूर्वके देये वर्तते। तस्मादभूततद्भावे च्विः, कृञोऽनुप्रयोगः। अयं किलायं

**सख्यः**—भट्टिदारिए, पेक्ख पेक्ख। हिअअणिव्वत्तिदबहुमाणो णिक्कम्पधीरगुरुअत्तणेण ओअहसदि विअ भअवदो भग्गवस्स आउहं भट्टिदारओ।

(सीता सविस्मयास्रं पश्यति।)

**जामदग्न्यः**—(स्वगतम्।) आश्चर्यम्। अन्य एवायं प्रकारः। किमपि चैतदसंविज्ञातनिबन्धनं माहात्म्यं सौजन्यं चोत्साहसंरम्भगम्भीरश्च पौरुषावष्टम्भः। (प्रकाशम्।) आं दाशरथे, स एवायमाचार्यपादानां प्रियः परशुः।

**सख्यः**—क्खणं तु पसण्णरोसस्स विअ आलावो।

**जामदग्न्यः**—

अस्त्रप्रयोगखुरलीकलहे गणानां
सैन्यैर्वृतोऽपि जित एव मया कुमारः।

---

१. भर्तृदारके, प्रेक्षस्व प्रेक्षस्व। हृदयनिर्वर्तितबहुमानो निष्कम्पधीरगुरुकत्वेनापहसतीव भगवतो भार्गवस्यायुधं भर्तृदारकः।

२. क्षणं तु प्रशान्तरोषस्येवालापः।

---

स इति संभाव्यते। 'वार्तासंभाव्ययोः किल' इत्यमरः॥ हृदयनिर्वर्तितबहुमानो मनसा बहु मानयन्। निष्कम्पश्चासौ धीरश्चासौ गुरुकश्चेति विग्रहे खञ्जकुब्जादिवत्समासः। तस्य भावस्तत्त्वं तेनापहसति। प्रयासानुरूपफलाभावादपहासः। भर्तृदारको राजपुत्रः॥ विस्मयो रामधैर्यादिना। अस्रमेवमपहासे किं भविष्यतीति दुःखेन। अन्य एवायं प्रकारः। कार्तवीर्यस्कन्दहेरम्बादिषु दृष्टाद्विलक्षण इत्यर्थः। **किमपीत्यादि**। असंविज्ञातनिबन्धनं दुर्निरूपाकारकमेतन्माहात्म्यं महापुरुषत्वं च सौजन्यं च गुणग्राहित्वादिसुजनधर्मश्च किमपि। अनिर्वाच्यमित्यर्थः। किंचोत्साहेन स्थेयसा प्रयत्नेन संरम्भेण क्रोधेन च गम्भीरो दुर्ज्ञेयः पौरुषस्य पुंस्त्वस्यावष्टम्भः स्थैर्यम्। 'अवाच्चालम्बनाविदूर्ययोः' इति स्तम्भेः षत्वम्। आं दाशरथे। आमेवमित्यर्थः। 'आमेवम्' इत्यमरः। आचार्यपादानाम्। 'उत्तमानां स्वरूपं तु पादशब्देन पठ्यते'। अस्मद्गुरोः। शिवस्येत्यर्थः॥ प्रसन्नरोषस्य प्रशान्तकोपस्य॥ **अस्त्रेति**। अस्त्रप्रयोगस्य खुरल्या लक्ष्यप्रबन्धनस्य। 'खुरली लक्ष्यबन्धनम्' इति केशवः। कलहेऽन्योन्यसंघर्षे। गणानां प्रमथानाम्। 'सैन्यभेदे समूहे च संख्यायां प्रमथे गणः' इति रत्नमाला। सैन्यैः सेनासमवेतैर्वृतोऽपि कुमार एव स्कन्द एव। 'कुमारो ना सुते स्कन्दे युवराजे श्वपाचके' इति रत्नमाला। मया जितः कुमार एवेत्यनेन न त्वन्यः प्रबल

एतावतापि परिरभ्य कृतप्रसादः
प्रादादिमं प्रियगुणो भगवान्गुरुर्मे ॥ ३४ ॥

**रामः**—(स्वगतम् ।) कथमेतावतापीत्याह । अहो गर्वगौरवस्याभोगः । (प्रकाशम् ।) अतश्च भगवन्, द्यावापृथिव्योर्विततस्ते वीरवादः ।

येनैव खण्डपरशुर्भगवान्प्रचण्ड-
श्चण्डीपतिस्त्रिभुवनेषु गुरुः प्ररूढः ।
तेनैव तारकरिपोर्विजयार्जितेन
दीप्तिं गता परशुराम इति श्रुतिस्ते ॥ ३५ ॥

किंच ।

उत्पत्तिर्जमदग्नितः स भगवान्देवः पिनाकी गुरुः
शौर्यं यत्तु न तद्गिरां पथि ननु व्यक्तं हि तत्कर्मभिः ।
त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः
क्षत्रब्रह्मतपोनिधेर्भगवतः किं वा न लोकोत्तरम् ॥ ३६ ॥

---

इत्यपरितोषो व्यज्यते । प्रियगुणो गुणपक्षपाती भगवान्षाड्गुण्यपूर्णो मे गुरुः शिव एतावताप्यत्यल्पेनाप्यनेन स्कन्दविजयरूपेण निमित्तेन कृतप्रसादः कृतानुग्रहः सन्परिरभ्याश्लिष्येमं परशुं प्रादाद्दत्तवान् । ददातेर्लुङ् । 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' इति सिचो लुक् ॥ ३४ ॥ **कथमित्यादि** । स्कन्दविजयस्य कथमत्यल्पतामाहेत्यर्थः । गर्वगौरवस्य गर्वाधिक्यस्याभोगो वैपुल्यं संनिवेशो वा । अत एतस्माद्रुद्रेण परशोः प्रदानाद्वीरवादो वीर इति वादः शब्दो द्यावापृथिव्योर्दिवि भुवि च । द्यौश्च पृथिवी चेति विग्रहे द्वन्द्वे 'दिवसश्च पृथिव्याम्' इति चकाराद्दिवो द्यावादेशः । विततः । विस्तृत इत्यर्थः । **येनेत्यादि** । येन परशुना भगवान्गुरुः प्रचण्डस्तीक्ष्णश्चण्ड्याः पार्वत्याः पतिस्त्रिभुवनेषु त्र्यवयवकेषु भुवनेषु । शाकपार्थिवादेराकृतिगणत्वादुत्तरपदलोपः । यद्वा समाहारबहुत्वाद्बहुवचनम् । खण्डपरशुः प्ररूढः खण्डपरशुरिति प्रसिद्धस्तारकरिपोः स्कन्दस्य विजयार्जितेन विजयसंपादितेन तेनैव परशुनैव ते परशुराम इति श्रुतिः परशुराम इत्याख्यां दीप्तिं गता । प्रसिद्धिं गतेत्यर्थः ॥ ३५ ॥ **उत्पत्तिरिति** । भगवतः पूज्यस्य तव जमदग्नितो जमदग्नेः सकाशादुत्पत्तिर्जन्म । किंच क्षत्रब्रह्मणः क्षत्रियवेदस्य । धनुर्वेदस्येति यावत् । तपसश्च निधेराधारभूतस्य भगवतः पूज्यस्य तव स प्रसिद्धो भगवान्षाड्गुण्यपूर्णो देवो दीप्तिशीलः पिनाकी शिवो गुरुर्धनुर्विद्योपदेष्टा । किंच यत्तव शौर्यं तद्गिरां पथि न भवति । वाचामगोचरं भवतीत्यर्थः । तच्छौर्यस्य वाचामगोचरत्वं कर्मभिः स्कन्दविजयादिव्यापारैर्व्यक्तं हि प्रसिद्धं हि । नन्वित्यवधारणे । किंच भगवतस्त्यागः स्वद्रव्याणां वीरेभ्यः प्रतिपादनम् । सप्तानां समुद्राणां समाहारः सप्तसमुद्रम् । पात्रादित्वात्क्लीबत्वम् । तेन मुद्रिताया

सख्यः—जाणादि महाभाओ गुरुसु रमणिज्जं मन्तिदुम्[1]।

जामदग्न्यः—

राम राम नयनाभिरामता-
माशयस्य सदृशीं समुद्वहन्।
अप्रतर्क्यगुणरामणीयकः
सर्वथैव हृदयंगमोऽसि मे॥ ३७॥

हेरम्बदन्तमुसलोल्लिखितैकभित्ति
वक्षो विशाखविशिखव्रणलाञ्छितं मे।
रोमाञ्चकञ्चुकितमद्भुतवीरलाभा-
त्सत्यं ब्रवीमि परिरब्धुमिवेच्छति त्वाम्॥ ३८॥

---

१. जानाति महाभागो गुरुषु रमणीयं मन्त्रयितुम्।

---

आवृताया मह्या भूमेर्निर्व्याजं ख्यात्यादिनिरपेक्षं दानं काश्यपाय प्रतिपादनमवधिः सीमा यस्य स तथोक्तः। भवतीति शेषः। 'अवधाने परिच्छेदे सीम्नि काले बलेऽवधिः' इति रत्नमाला। यत एवं क्षत्रब्रह्मतपोनिधेर्भगवतस्तव किं वा पूर्वोक्तेष्वभिजनविद्यावृत्तेषु किं वा लोकोत्तरं न भवति। सर्वमेव लोकश्रेष्ठं भवतीत्यर्थः। किमिति सामान्ये नपुंसकम्। उत्पत्तिरित्यभिजन उक्तः। भगवानिति विद्योक्ता। शौर्यमिति त्याग इति चाभिजनविद्यानुगुणमुभयविधं वृत्तमुक्तमिति द्रष्टव्यम्॥ ३६॥ रमणीयं हृद्यं यथा तथा मन्त्रयितुम्। 'मन्त्रि गुप्तपरिभाषणे' इति धातुपाठः। **रामा रामेति।** राम राम। संबुद्धौ द्विरुक्तिः। आशयस्य गुरुद्विजभक्त्यादिरूपस्य मनोव्यापारस्य सदृशीमनुरूपां नयनाभिरामतां चक्षुःप्रियतां समुद्वहन्बिभ्राणोऽप्रतर्क्यमचिन्त्यं गुणान्तरं रूपादिविग्रहगुणानां ज्ञानशक्त्याद्यात्मगुणानां च रामणीयकं रमणीयत्वं यस्य स तथोक्तः। रमणीयशब्दात् 'योपधाद्गुरूपोत्तमाद्वुञ्' इति भावे वुञ्प्रत्ययः। सर्वथा रूपगुणादिभिः सर्वैः प्रकारैर्मे हृदयंगमोऽसि। शत्रोरपि मम हृद्योऽसीत्यर्थः। खच्प्रकरणे 'गमेः सुपि वाच्यः' इति वार्तिकेन हृदयशब्दोपपदे गमेः खच्प्रत्यये हृदयशब्दस्य मुमागमे च सति हृदयंगमशब्दो निष्पन्नः॥ ३७॥ **हेरम्बेति।** राम रामेति पूर्वस्मादनुषज्यते। हेरम्बस्य विघ्नेश्वरस्य दन्तमुसलेन मुसलसदृशदन्तेनोल्लिखितैकभित्तिरेकपार्श्वो यस्य तत्तथोक्तम्। भित्तिशब्दोऽत्र भित्तिसदृशपार्श्ववाची। 'एकभक्ति' इति पाठ उल्लिखितैकभागमित्यर्थः। 'भक्तिः स्याद्भागसेवयोः' इति रत्नमाला। हेरम्बस्यैकदन्तत्वादेकभागस्योल्लिखितत्वम्। विशाखस्य स्कन्दस्य। 'विशाखः शिखिवाहनः' इत्यमरः। विशिखानां बाणानां व्रणैर्लाञ्छितं चिह्नितं मे वक्षः कर्तृ। अद्भुतस्याश्चर्यकरस्य वीरस्य लाभात्प्राप्त्या रोमाञ्चैः पुलकैः कञ्चुकितं संजातकञ्चुकं स त्वां परिरब्धुमिच्छत्यालिङ्गितुमिच्छति। सत्यं ब्रवीमि यथार्थं वदामि। इवशब्दो

**सख्यः**—भट्टिदारिए, पेक्ख पेक्ख भत्तुणो सोहग्गम्। तुमं क्खु णिच्चं परिमुही अत्ताणं वञ्चेसि।

(सीता सास्रं निःश्वसिति।)

**रामः**—भगवन्, परिरम्भणं प्रस्तुतप्रतीपमेतत्।

**सीता**—धीरमसिणो माहप्पसोहिदो से विणओ।

**जामदग्न्यः**—(स्वगतम्।) अहो, परगुणोत्कर्षतत्त्वेऽपि परिमाणग्राहि सौजन्यपूतमन्तःकरणमस्य राजन्यपोतस्य। पारमार्थिकविनयदुर्विभाव्यो निपुणबुद्धिग्राह्यो महानहंकारग्रन्थिः।

---

१. भर्तृदारिके, प्रेक्षस्व प्रेक्षस्व भर्तुः सौभाग्यम्। त्वं खलु नित्यं परिमुख्यात्मानं वञ्चयसि।

२. धीरमसृणो माहात्म्यशोभितोऽस्य विनयः।

---

वाक्यालंकारे॥ ३८॥ सुभगस्य भावः सौभाग्यम्। सुभगशब्दाद्भावे ष्यञ्। 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इति पूर्वोत्तरपदवृद्धिः। शत्रुणापि हि श्लाघ्यत इति भावः। मुग्धात्वेन लज्जातिशयात्पराङ्मुखी सत्यात्मानं स्वमीदृशसौभाग्यानुभवविमुखं करोषीत्यर्थः। परिशब्दो वर्जनार्थकः। कर्मप्रवचनीयानां समासनिषेधस्त्वनित्यः। यद्वा सर्वतोभावे परिशब्दः। यतो यतो भर्तुर्मुखं ततस्ततोऽभिमुखमुखी सत्यपीत्यर्थः॥ **सास्रमिति**। एतावन्तं कालं मौग्ध्येन हतास्मि। इतः परं परशुरामेणेति दुःखाद्बाष्पोदयः। प्रस्तुतस्य प्रकृतस्य प्रमथनस्य प्रतीपं प्रतिकूलम्॥ परशुरामोक्तपरिरम्भस्यात्यन्ताप्रतिषेधाद्विनयः। प्रस्तुतप्रतीपत्वोक्त्यात्यन्तानभ्युपगमात्तस्य धीरत्वं मसृणत्वं किंचिदस्फुटत्वं च। अशक्तस्य च विनयोऽननुगुण इति तस्य माहात्म्याच्छोभितोक्तिरिति द्रष्टव्यम्। अस्य राजन्यपोतस्य राजन्यबालकस्य रामस्य। 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः। अन्तःकरणं मनः परस्य गुणानां शौर्यादीनामुत्कर्षातिशयस्य तत्त्वेऽपि याथार्थ्यविषयेऽपि परिमाणं पराकाष्ठां ग्राहयतीति परिमाणग्राहि। णिजन्ताद्ग्रहातेः 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः। तेन सौजन्येन सुजनभावेन पूतं निर्दोषम्। भवतीति शेषः। यद्वा परेषां सर्वातिशायिनां गुणानामुत्कर्षस्यातिशयस्य तत्त्वेऽपि वस्तुभूतत्वेऽपि परिमाणग्राहिणा काष्ठां प्राप्तेन। तत्र केवलाद्ग्रहातेर्णिनिः। सौजन्येत्यादेः पूर्ववदर्थः। ईदृशशौर्यादिगुणातिशयवता सौजन्यं दुर्लभमिति भावः। परमार्थ एव पारमार्थिकः। विनयादेराकृतिगणत्वात्स्वार्थे ठक्। यद्वा परमार्थाय प्रभवति पारमार्थिकः। अर्थक्रियाकारीत्यर्थः। 'तस्मै प्रभवति संतापादिभ्यः' इति ठक्। अनारोपित इत्यर्थः। तथाविधेन विनयेनानौद्धत्येन दुर्विभाव्योऽभिभूतो मन्दमतिभिर्दुर्ज्ञेयो निपुणबुद्धिभिर्दुरवगाहार्थावगाहनपटुमतिभिः पुरुषैर्ग्राह्यो ज्ञेयो महान्विपुलोऽहंकारस्य शौर्यातिशयादिनिबन्धनचित्तसमुन्नतेर्ग्रन्थिः पर्वः। 'ग्रन्थिः पर्वगदान्तरे' इति रत्नमाला। भवतीति शेषः।

अप्राकृतस्य चरितातिशयस्य भावै-
रत्यद्भुतैर्मम हृतस्य तथाप्यनास्था ।
कोऽप्येष वीरशिशुकाकृतिरप्रमेय-
सामर्थ्यसारसमुदायमयः पदार्थः ॥ ३९ ॥

संभाव्यसप्तभुवनाभयदानपुण्य-
संभारमस्य वपुरत्र हि विस्फुरन्ति ।
लक्ष्मीश्च सात्त्विकगुणज्वलितं च तेजो
धर्मश्च मानविजयौ च पराक्रमश्च ॥ ४० ॥

---

**अप्राकृतेति** । अप्राकृतस्य प्राकृतजनस्वभावविजातीयस्य । 'प्राकृतस्तु पृथग्जनः' इत्यमरः । चरितातिशयस्य वृत्तोत्कर्षस्याद्भुतैरत्याश्चर्यकरैर्भावैः स्वभावैः । 'भावः पदार्थे सत्तायां क्रियाचेष्टात्मयोनिषु । विद्वल्लीलास्वभावेषु भूत्यभिप्रायजन्तुषु ॥' इति रत्नमाला । हृतस्य वशीकृतस्य मम तथापि वशीकृतत्वेऽप्यनास्था । एतावन्तं कालमीदृशाहंकारग्रन्थिग्रहणे तात्पर्यं नासीत् । अद्य तु तद्ग्रहणं सम्यग्जातमिति भावः । तद्ग्रहणमभिनीय वदति—कोऽप्येष इत्यादिना । वीरशिशुकाकृती रामात्मना भासमान एष कोऽप्यनिर्वाच्यः पदार्थोऽप्रमेयानां दुर्ज्ञेयानामपरिच्छिन्नानां सामर्थ्यानां दुर्घटार्थसंघट्टनशक्तीनां ये सारा उत्कृष्टांशास्तेषां समुदायमयः । संघातस्वरूप इत्यर्थः । स्वार्थे मयट् । समुदायादागतः, समुदायस्य विकारः, समुदायप्रचुरो वेत्यर्थः । 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः', 'तस्य विकारः', 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः', 'तत्प्रकृतवचने मयट्' इति च मयट् ॥ ३९ ॥ **संभाव्येति** । अस्य रामस्य वपुः शुभाकारः । 'वपुः काये शुभाकारे' इति रत्नमाला । संभाव्यो निश्चेयः । सप्तानां भुवनानां समाहारः सप्तभुवनम् । तस्मै यदभयदानं भयसंसर्गाभावनिर्वहणं तदेव पुण्यं धर्मस्तस्य संभारोऽतिशयो येन तत्तथोक्तम् । तथाविधं भवतीति शेषः । 'रूपमेवास्यैतन्महिमानं व्याचष्टे' इति श्रुतिरत्रानुसंधेया । अत्र रामवपुषि लक्ष्मीश्च लावण्यात्मकशोभा च । 'लक्ष्मीः संपद्रमा शोभा' इति रत्नमाला । सत्त्वं सत्त्वगुणस्तत्र भवैः । अध्यात्मादित्वाट्ठञ् । गुणैर्निर्मलत्वप्रकाशवत्त्वनिरामयत्वसुखसङ्गित्वज्ञानसङ्गित्वादिभिर्ज्वलितं विशदं तेजश्च । 'ब्रह्मविद इव सौम्य ते मुखं भाति' इति श्रुतिप्रसिद्धदीप्तिविशेषश्च । सत्त्वगुणस्य ह्युक्तगुणहेतुत्वं भगवतैव गीतम्—'तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् । सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥' इत्यादिना । यद्वा सत्त्वं बलं तत्र भवाः सात्त्विकाः । 'सत्त्वं द्रव्ये पिशाचादौ व्यवसायस्वभावयोः । गुणप्राणबलस्वान्तसत्तास्वस्त्री तु जन्तुषु ॥' इति रत्नमाला । तथाविधैर्गुणैर्धैर्यादिभिर्ज्वलितं प्रकाशितं तेजश्च । 'अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत् । प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम् ॥' इत्युक्तलक्षणं तेजश्च धर्मश्च श्रौतस्मार्ताभ्युदयसाधनगुणविशेषश्च । यद्वा धर्मो न्यायः, अहिंसा वा धर्मः । 'अथ धर्मोऽस्त्री पुण्ये सामा-

अयं हि

त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः
क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोशस्य गुप्त्यै ।
सामर्थ्यानामिव समुदयः संचयो वा गुणानां
प्रादुर्भूय स्थित इव जगत्पुण्यनिर्माणराशिः ॥ ४१ ॥

हे भवत्यः, प्रविशत्वियं वधूरभ्यन्तरमेव ।

**रामः**—(स्वगतम् ।) एवमेव ।

---

न्यभावयोः । चापन्यायाध्वराहिंसायज्वाचारयमेषु ना ॥' इति रत्नमाला । मानो गर्वश्चित्तसमुन्नतिर्वा । 'मानः स्त्रीणां कोपभेदे गर्वे चित्तोन्नतावपि' इति रत्नमाला । यद्वा मानं श्रुतिस्मृत्यादिजन्यं प्रमितिरूपं ज्ञानम् । 'मानं प्रमाणे प्रस्थादौ' इति रत्नमाला । विजयः पराभिभवनं विशिष्टपरावधिकोत्कर्षश्च । 'जि जये', 'जि अभिभवे' आभ्यां भावे 'एरच्' इत्यच्प्रत्ययः । तौ च पराक्रमश्च शक्तिश्च । 'शक्तिः पराक्रमः प्राणः' इत्यमरः । विस्फुरन्ति विशेषेण प्रकाशन्ते । 'यशो विधातुः कथयन्ति खण्डितम्' इत्यत्रेव सुबर्थसंख्याया अधिकत्वात्साधुत्वम् । 'स्फुरतिस्फुलत्योर्निर्निविभ्यः' इति वैकल्पिकं षत्वम् । हिशब्दः प्रसिद्ध्यर्थकोऽस्यार्थस्य दुरपह्नवत्वं व्यञ्जयति ॥ ४० ॥ अयं हि रामो हि । **त्रातुमिति** । लोकान्सप्तलोकान् । 'लोकस्तु भुवने जने' इत्यमरः । त्रातुं पालयितुम् । 'त्रैङ् पालने' इत्यस्मात् 'तुमुण्ण्वुलौ क्रियायां क्रियार्थायाम्' इति तुमुन् । कायवान्परिणतः शरीरवत्तारूपपरिणाममवस्थां प्राप्तोऽस्त्रमन्त्र इव जृम्भकाद्यस्त्रदेवताप्रकाशकवेदभाग इव । भवतीति शेषः । मन्त्रब्राह्मणरूपभागद्वयात्मके वेदे मन्त्रभागः 'तच्चोदकेषु मन्त्राख्ये'ति भगवता जैमिनिना लक्षितः । अहितनिरसनादिरत्र साधारणधर्मः । ब्रह्मकोशस्य ब्रह्माण्डस्य । 'पेशी कोशो द्विहीनेऽण्डम्' इत्यमरः । गुप्त्यै रक्षणाय । 'गुप्तिः स्याद्भुव्युदासेऽपि कारावेश्मनि रक्षणे' इति रत्नमाला । तनुं मूर्तिम् । 'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः । श्रितः प्राप्तः क्षत्रः क्षत्रवर्णसंबन्धी धर्म इव । 'शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् । दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥' इत्युक्तस्वभाव इव । भवतीति शेषः । सामर्थ्यानामिति । तनुं श्रित इत्यनुषज्यते । तनुं श्रितः सामर्थ्यानां सर्वकार्यफलौपयिकशक्तीनां समुदय इव गण इव । 'समुदायः समुदयः समवायश्चयो गणः' इत्यमरः । भवतीति शेषः । गुणानां ज्ञानाद्यात्मगुणानां सौन्दर्यादिविग्रहगुणानां च संचयो वा समूह इव भवति । 'वा स्याद्विकल्पोपमयोः' इत्यमरः । अत्रापि तनुं श्रित इत्यनुषज्यते । प्रादुर्भूय प्रत्यक्षीभूय स्थितः । पुण्यैर्निर्मीयन्त इति पुण्यनिर्माणानि । पुण्यफलानीत्यर्थः । 'कृत्यल्युटो बहुलम्' इति कर्मणि ल्युट् । 'भोजनाः शालयः' इतिवज्जगतां पुण्यनिर्माणानि जगत्पुण्यनिर्माणानि तेषां राशिरिव पुञ्ज इव भवति । 'स्यान्निकायः पुञ्जराशी' इत्यमरः । अत्र सर्वत्रोत्प्रेक्षालंकारः । तदुक्तम्—'यदायमुपमानानां लोकतः सिद्धिमिच्छति । तदोत्प्रेक्षैव येनैव शब्दः संभावनापरः ॥' इति वाशब्दस्येवशब्द-

(नेपथ्ये ।)

सीरध्वजो धनुष्पाणिरित एवाभिवर्तते ।
गौतमश्च शतानन्दो जनकानां पुरोहितः ॥ ४२ ॥

**सख्यः**—[1]भट्टिदारिए, परागदो जेव्व तादो । ता एहि । पविसह्म ।

**सीता**—[2]भअवदि, सङ्गामसिरी एसो दे अञ्जली ।

(इति निष्क्रान्ताः स्त्रियः ।)

**जामदग्न्यः**—

स एष राजा जनको मनीषी
पुरोहितेनाङ्गिरसेन गुप्तः ।
आदित्यशिष्यः किल याज्ञवल्क्यो
यस्मै मुनिर्ब्रह्म परं विवव्रे ॥ ४३ ॥

सद्वृत्त एषः । तथापि क्षत्त्रिय इति शिरःशूलमुत्कोपयति ।

(ततः प्रविशति संभ्रान्तो जनकः शतानन्दश्च ।)

**शतानन्दः**—राजन्, किमत्र युक्तम् ।

---

१. भर्तृदारिके, परागत एव तातः । तदेहि । प्रविशामः ।
२. भगवति, सङ्ग्रामश्रीरेष तेऽञ्जलिः ।

---

पर्यायत्वादुत्प्रेक्षाद्योतकत्वमविरुद्धम् । अत्रमन्त्रादेरुपमानस्य कायवत्त्वेन परिणामादिभिर्विशेषणैर्लोकप्रसिद्धत्वात्पञ्चस्वपि वाक्येषूत्प्रेक्षा । सा च स्वरूपोत्प्रेक्षेति द्रष्टव्यम् ॥ ४१ ॥ वधूः स्नुषा वसिष्ठसनाभितया परशुरामः स्वस्य सीतां प्रति श्वशुरदेशीयत्वमभिसंधाय सीतां वधूरिति निर्दिशति । अभ्यन्तरं गृहमध्यम् ॥ एवमेव । सीताया गृहाभ्यन्तरप्रवेशो ममापीष्ट इत्यर्थः ॥ **सीरध्वज इति** । सीरध्वजो जनकः । धनुश्चापः पाणौ यस्य स तथोक्तस्तथाविधः सन् । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ' इति सप्तम्यन्तस्य पाणिशब्दस्य परनिपातः । इत एवाभिवर्तते । अत्रैवायातीत्यर्थः । शिष्टं प्रागेव व्याख्यातप्रायम् ॥ ४२ ॥ प्रविशामः । अभ्यन्तरमिति शेषः ॥ **स एष इति** ॥ मनीषी प्राज्ञ आङ्गिरसेनाङ्गिरसोऽपत्येन । पौत्रादिरप्यपत्यमिति पक्ष एव मुख्य इत्यङ्गिरःशब्दात् 'तस्यापत्यम्' इत्यण्प्रत्ययः । पुरोहितेन शतानन्देन गुप्तः पालित एष जनको राजा । उद्देश्यसमर्पकमिदम् । यस्मै याज्ञवल्क्यस्तन्नामादित्यशिष्यः सूर्यशिष्यो मुनिः परं ब्रह्म परमात्मानं विवव्रे विवृतवान्स इति विधेयविशेषणतया योजनीयम् । अत्र 'जनको ह वैदेह आसांचक्रे । अथ ह याज्ञवल्क्य आवव्राज तम्' इत्यादि बृहदारण्यकसंदर्भो द्रष्टव्यः ॥ ४३ ॥ सद्वृत्तः साधुशीलः । क्षत्त्रिय इति क्षत्त्रियत्वाद्धेतोः । शिरःशूलं शिरोरोगविशेषम् । 'शूलमस्त्र्यायुधे रोगे स्याद्दुष्टवधकीलके । उपरागादिदोषे च' इति रत्नमाला । उत्कोपयति प्रकोपयति ।

**जनकः**—भगवन्, किमन्यत् ।

ऋषिरयमतिथिश्चेद्विष्टरः पाद्यमर्घ्यं
तदनु च मधुपर्कः कल्प्यतां श्रोत्रियाय ।
अथ तु रिपुरकस्माद्द्वेष्टि नः पुत्रभाण्डं
तदिह नयविहीने कार्मुकस्याधिकारः ॥ ४४ ॥

(इति परिक्रामतः ।)

**रामः**—किमित्यतिबाष्पायितं भगवता ।

**जामदग्न्यः**—न किंचित् । किंतु

संभूयैव सुखानि चेतसि परं भूमानमातन्वते
यत्रालोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवम् ।

---

वर्धयतीति यावत् ॥ संभ्रान्तः । परशुरामनिवारणे त्वरित इत्यर्थः । 'संभ्रमस्त्वरा' इत्यमरः ॥ अत्र परशुरामविषये ॥ किमन्यत् । वक्ष्यमाणातिरेकेण न किंचित्कर्तव्यमस्तीत्यर्थः । **ऋषिरिति** । अयं ऋषिर्जामदग्न्योऽतिथिश्चेच्छ्रोत्रियाय वेदाध्यायिनेऽस्मै जामदग्न्याय विष्टरः पीठाद्यासनविशेषः । 'विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम्' इत्यमरः । पाद्यं पादाय वारि । अर्घ्यं पूजार्थं द्रव्यम् । अत्र कल्प्यतामिति भिन्नवाक्यतया योजनीयम् । तदनु मधुपर्को मधुसंसृष्टं दधि च कल्प्यतां दीयताम् । अत्र 'गोमधुपर्कार्हो वेदाध्यायः' इत्यापस्तम्बवचनमभिसंहितम् । मधुपर्कस्वरूपमपि तत्रैवोक्तम्—'मधुपर्कश्च दधिमधुसंसृष्टं पयो वा मधुसंसृष्टमभाव उदकम्' इति । अथेति पक्षान्तरप्रस्तावे । अयं रिपुः सन्ननिष्टं लपन्सन् । 'रपेरिच्चोपधायाः' इत्युणादिषु लपतेरुप्रत्यये उपधाया इकारे च सत्यनिष्टं रपतीत्यर्थे रिपुशब्दो व्युत्पादितः । अकस्मान्निष्कारणं नः पुत्रभाण्डमस्मदीयं रामात्मकपुत्ररूपं मूलधनं कर्म । 'स्याद्भाण्डमश्वाभरणेऽमत्रे मूलवणिग्धने' इत्यमरः । द्वेष्टि चेत्तद्विषये द्वेषं करोति चेत्तन्निष्कारणद्वेषाद्धेतोर्नयविहीने न्यायादपेत इह परशुरामे कार्मुकस्य कोदण्डस्याधिकारो विनियोगः कल्प्यतामित्यनुषङ्गः । अत्रापि चेदं पुरा गीतमेवम् । 'भुवि । पीडाकरममित्राणां यत्स्यात्कर्तव्यमेव तत् ॥' इति द्रोणपर्वगतभारतवचनमनुसंधेयम् ॥४४॥ अतिबाष्पायितमत्यन्तं बाष्पोद्गमनं कृतम् । 'बाष्पोष्मभ्यामुद्गमने' इति क्यङन्ताद्भावे क्तः ॥ न किंचित् । वक्ष्यमाणादन्यन्न किमपीत्यर्थः । **संभूयेति** । यत्र त्वय्यालोकपथावतारिणि लोचनप्रसरगोचरं गते सति । आलोकस्य पन्था आलोकपथः । 'ऋक्पूरब्धूःपथामानक्षे' इति समासान्तः । सुखानि सुखशब्दवाच्यानि सर्वाण्यपि संभूय सङ्घभावं प्राप्य परमतिशयितं भूमानं वैपुल्यम् । 'बहु स्याद्विपुले स्त्र्यादिसंख्यायां च त्रिलिङ्गकः' इति रत्नमाला । 'बहोर्लोपो भू च बहोः' इति बहुशब्दाद्भावे इमनिच् । बहोर्भूरादेशे इमनिचि इकारलोपश्च । चेतस्यातन्वते प्राप्नुवन्ति । सर्वेषामप्यात्मनां सर्वेष्वपि देशेषु सर्वेषु च कालेषु सर्वेभ्योऽपि हेतुभ्यः सर्वप्रकाराणि

स त्वं नूतन एव कङ्कणधरः श्रीमान्प्रियश्चेतसो
हन्तव्यः परिभूतवान्गुरुमिति प्रागेव दूयामहे ॥ ४५ ॥

**रामः**—भार्गव, ज्ञायते मामनुकम्पस इति ।

---

सुखानि मिलितानि । क्षणपरिमितरामविग्रहालोकनसुखसमानरेखारूढानि भवन्तीत्यर्थः । अत्र च 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुत्यर्थः सूचितः । यद्वा यत्र त्वय्यालोकपथावतारिणि सति सुखानि चेतसि संभूय परमन्यं भूमानमातन्वते । सृजन्तीत्यर्थः । अयं भावश्छान्दोग्ये भूमविद्यायाम्—'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा यो वै भूमा तदमृतम्' 'स्वे महिम्नि प्रतिष्ठितः स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतः स एवेदꣳ सर्वं स वा एष एवंपश्यन्नेवंमन्वान एवंविजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः' इत्यादिसार्वात्म्यादिसर्वकल्याणगुणनिरवद्यसत्यपुरुषादिशब्दाभिधेयपरमात्मलक्षणो निःसङ्गनित्यमुक्तानुभाव्यनिरवग्रहनिरतिशयानन्दरूपः कोऽपि भूमा प्रतिपादितो 'भूमा संप्रसादात्' इत्यादिना ब्रह्मसूत्रेण निरूपितश्च । ततोऽप्यधिकः पूर्वं कमपि भूमानं रामदर्शनसुखानि मम मनसि निर्मान्तीति । अत्र च—'अखण्डैकरसानन्दतारकब्रह्मवाचकः । रामायेति सुविज्ञेयः सत्यानन्दचिदात्मकः ॥' इत्युपनिषदर्थः सूचितः । रतिमिति यत्रालोकपथावतारिणीत्येतन्मध्यमणिन्यायेनोत्तरत्राप्यन्वेति । यत्र त्वय्यालोकपथावतारिणि सति नेत्रोत्सवो नेत्रानन्दः । कार्ये कारणवाचकशब्दः । आनन्दजनकव्यापारोऽप्युत्सवः । रतिं स्रक्चन्दनादिजन्यां प्रीतिं प्रस्तौति निष्पादयति । पूर्वोक्तभूमविद्यागतात्मक्रीडादेरुपलक्षणमिदम् । स्रक्चन्दनादिजन्या प्रीती रतिः, उद्यानादिजन्या प्रीतिः क्रीडा, स्त्रीसंभवा प्रीतिर्मिथुनम्, मतिजन्या प्रीतिरानन्द इत्युपनिषद्व्याख्यातारः । अत्र च भूमानमित्यनेन भूमवाक्यं रतिमित्यनेनात्मरतिरित्यादिवाक्यं च स्फोरितम् । परमित्यनेन भगवतः परत्वावस्थातोऽपि रामावतारावस्थैव भोग्येति सूच्यते । उक्तं च हनूमता—'स्नेहश्च परमो राजंस्त्वयि नित्यं प्रतिष्ठितः । भक्तिश्च नियता वीरभावो नान्यत्र गच्छति ॥' इति । सोऽयमखिलवेदान्तपरमरहस्यार्थो जामदग्न्यवाक्यमुखेन कविनाविष्कृतः—स त्वमिति । स तथाविधो नूतनः कङ्कणधरोऽद्यैव वैवाहिकप्रतिसरं धारयमाणः । नूतनत्वं कङ्कणधरत्वेनेति । श्रीमांस्तेजस्वी भोग्यसमृद्धिरूपसंपत्तिमान्वा वेषरचनावान्वा । 'श्रीर्वेषरचनाशोभासंपत्सरलशाखिषु' इति रत्नमाला । चेतसः प्रिय इष्टोऽस्मद्गुरुं रुद्रं परिभूतवान्धनुर्भङ्गेन तिरस्कृतवान्स त्वं हन्तव्य इति हेतोः प्रागेव हननपूर्वमेव दूयामहे । 'दुङ् परितापे' इत्यस्माद्दिवादित्वाच्छ्यन् । अत्र गुरुपरिभवो हननहेतुः । कङ्कणधरत्वादिकं परितापहेतुः । पूर्वं वीरव्रतेन हन्तव्यत्वमुक्तम् । अद्य तु परिभवेन हन्तव्यत्वमिति हेतुभेदादपौनरुक्त्यम् ॥ ४५ ॥ **भार्गवेति** । मामनुकम्पस इति मयि दयावानिति ज्ञायते । मयेति शेषः । 'कृपा दयानुकम्पा स्यात्' इत्यमरः । अत्र मामनु मन्निमित्तं कम्पसे वेपस इति ज्ञायत इति च विवक्षितम् । 'लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः' इत्यनुशब्दस्य कर्मप्रवचनीयत्वात् 'कर्मप्रवचनीययुक्ते द्वितीया' ।

**जामदग्न्यः**—अरे, किमुद्भ्रान्तोऽसि ।

अमृताध्मातजीमूतस्निग्धसंहननस्य ते ।
कुठारः कम्बुकण्ठस्य कष्टं कण्ठे पतिष्यति ॥ ४६ ॥

**रामः**—आः, सत्यमेव करुणया परिक्षिप्तोऽसि ।

**जामदग्न्यः**—मय्येव भ्रुकुटीधरः संवृत्तः । अरे क्षत्रियडिम्भ, त्वं किल शिशुर्नववधूटिकापरिग्रहः सुन्दर इत्यपूर्वमुपतप्यतेऽस्माभिः ।

सुप्रसिद्धः प्रवादोऽयमितिहेतीह गीयते ।
जामदग्न्यः स्वयं रामो मातुर्मूर्धानमच्छिनत् ॥ ४७ ॥

अपि च । रे मूढ,

उत्कृत्योत्कृत्य गर्भानपि शकलयतः क्षत्रसंतानरोषा-
दुद्दामस्यैकविंशत्यवधि विधमतः सर्वतो राजवंश्यान् ।

---

दयस इत्यनुक्त्वा मामनुकम्पस इत्युक्तिरर्थान्तराभिप्रायिकेत्युपलक्ष्य भार्गव आह—**अरे, किमुद्भ्रान्तोऽसीति** । निर्भये भयग्रहणाद्भ्रान्तिः । तस्य बहिःकथनादुद्भ्रान्तिः । **अमृतेति** । अमृतेन सुधयाध्मातः पूरितो जीमूतो मेघ इव स्निग्धं शीतलत्वचाकचक्यादियुक्तं संहननं वपुर्यस्य स तथोक्तस्तस्य । 'गात्रं वपुः संहननम्' इत्यमरः । कम्बुरिव शङ्ख इव कण्ठो यस्य स तथोक्तस्तस्य । 'शङ्खः स्यात्कम्बुरस्त्रियाम्' इत्यमरः । यद्वा कम्बुः स्त्रीवलयः शङ्खः स इव कण्ठो यस्य स तथोक्तस्तस्य । 'कम्बुः स्त्रीवलये शङ्खे संख्यायां जलशुक्तिषु' इति रत्नमाला । 'रेखात्रयाङ्किता ग्रीवा कम्बुग्रीवेति कथ्यते' इति हलायुधश्च । तव कण्ठे कुठारः पतिष्यति । स्पष्टोऽर्थः ॥ ४६ ॥ आः, करुणया परिक्षिप्तोऽसि । आः इति कोपे । परिक्षिप्तोऽसि परिवृत्तोऽसि । सत्यमेवेत्यनेन व्यतिरेको व्यज्यते । त्वया मम दुःखोत्पादने हि परदुःखासहिष्णुत्वलक्षणा करुणा प्रस्तावमर्हति । तदेव तु तव दुःशक्यमिति भावः । किं चेयं दया पूर्वकराजेषु क्व गतेति भावः ॥ भ्रुकुटीधरः कोपेन विकृतभ्रूर्जातः । क्षत्रियडिम्भ क्षत्रियशिशो, नवो नूतनो वधूटिकाया अयोनिजात्वेन मातापितृरहिततया दयनीयाया बालिकायाः परिग्रहो येन स तथोक्तः । 'वयसि प्रथमे' इति ङीपि वधूटीशब्दः । तस्मादनुकम्पायां कनि ह्रस्वे च वधूटिकाशब्दः । 'जीवद्भर्त्री कुलस्था या वधूटी सा रूपपांसिनी' इति त्रिकाण्डशेषः । सुन्दरो मनोज्ञः । न विद्यते पूर्वो यस्मिन्कर्मणि तथोक्तम् । उपतप्यते दुःख्यते । पूर्वे राजानो हि नैवंविधास्ततस्ते निरुत्तापेन मया हताः । अद्य त्वीदृशे त्वयि मम करुणा जायत इत्यर्थः । **सुप्रसिद्ध इति** । जामदग्न्यो रामो मातुर्मूर्धानं स्वयमच्छिनदित्ययं सुप्रसिद्धः प्रवादो लोकवाद इह जगति इतिह पारम्पर्येण गीयते शब्द्यते । 'कै गै शब्दे' इति पठितागूयतेः कर्मणि लटि यकि 'घुमास्थागापाजहातिसां हलि' इतीत्वम् । 'अनन्तावसथेतिहभेषजां ञ्यः' इति सूत्रे इतिहेति निपातसमुदायः पारम्पर्ये वर्तत इति वैयाकरणाः । 'पारम्पर्योपदेशे स्यादैतिह्यमितिहाव्ययम्' इत्यमरः ॥ ४७ ॥ **उत्कृत्येति** । सर्वभूतैः सर्वप्राणिभिः कर्तृभिः

पित्र्यं तद्रक्तपूर्णह्रदसवनमहानन्दमन्दायमान-
क्रोधाग्नेः कुर्वतो मे न खलु न विदितः सर्वभूतैः स्वभावः ॥४८॥

**रामः**—नृशंसता हि नाम पुरुषदोषः। तत्र का विकत्थना।

**जामदग्न्यः**—आः निर्भय क्षत्रियबटो, अति नाम प्रगल्भसे।

प्रहर नमतु चापं प्राक्प्रहारप्रियोऽहं
मयि तु कृतनिघाते किं विदध्यात्परेण।

---

क्षत्रसंताने क्षत्रवंशे रोषात्कोपाद्गर्भानप्यकिंचित्करान्गर्भपिण्डानप्युत्कृत्योत्कृत्य पौनःपुन्येन छित्त्वा। 'कृती छेदने' इत्यस्माल्ल्यप्। शकलयतः पुनरपि खण्डयत उद्दामस्योदीर्णस्य सर्वतोऽखिलदेशेषु राजवंश्यान्राजवंशभवान्। सर्वान्राजवंशान्वा। आद्यादित्वात्तसिः। एकविंशतिरेकविंशोऽवधिश्चरमो यस्मिंस्तद्यथा तथा। विधमनक्रियाविशेषणम्। एकविंशतिशब्दो लक्षणयैकविंशपरः। यथा त्रिविष्टपशब्दे त्रिशब्दस्त्रितीयपरस्तद्वत्। अथवैकविंशत्या संख्ययावधिः परिच्छेदो यस्मिन्कर्मणि तत्तथोक्तम्। 'विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः। संख्यार्थे द्विबहुत्वे स्तः' इत्यमरः। 'अवधाने परिच्छेदे सीम्नि काले बलेऽवधिः' इति रत्नमाला। विधमतो नाशयतः। 'ध्मा शब्दाग्निसंयोगयोः' इत्यस्माल्लटः शतरि 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः' इति धमादेशः। उपसर्गवशेन च नाशनार्थकत्वम्। तेषां राजवंश्यानां रक्तैः पूर्णे। 'कर्तृकरणे कृता बहुलम्' इति समासः। ह्रदेऽगाधजलाधारे। 'जलाशया जलाधारास्तत्रागाधजलो ह्रदः' इत्यमरः। सवनेन स्नानेन। 'सवनं सोमनिष्पेषे जननस्नानयोरपि' इति रत्नमाला। यो महानन्दः प्रचुरसुखम्। मोक्षतुल्यानन्दाभिमानेन वा महानन्दोक्तिः। 'मुक्तिर्मोक्षे महानन्दः' इत्यभिधानात्। तेन मन्दायमानोऽल्पीभवन्क्रोध एवाग्निर्यस्य स तथोक्तः। तस्य पित्र्यं पितृकर्म। 'वाय्वृतुपित्रुषसो यत्' इति यत्। कुर्वतः। तद्रक्तेनेति शेषः। मे स्वभावः। क्षत्रियगर्भोत्कर्तनादिरूपो न विदित इति न। 'द्वौ नञौ प्रकृतार्थं बोधयतः'। विदित एवेत्यर्थः। खलुशब्दः प्रसिद्धौ ॥ ४८ ॥

नृशंसता घातुकता पुरुषदोषः पुरुषस्य हेयतापादकः। अतएव हि 'आनृशंस्यं परो धर्मः' इति शास्त्रम्। तत्र नृशंसतायां का विकत्थना का श्लाघा ॥ क्षत्रियबटो क्षत्रियबालक। 'बालो बटुर्माणवकः' इति कोशः। अति प्रगल्भसे प्रकर्षेण धृष्टो भवसि। 'गल्भ धार्ष्ट्ये' इति धातुः। अनुपसर्गा अपि प्रादयः सन्ति तेन मध्ये हिशब्दः प्रयुक्तः। 'प्रकर्षे लङ्घनेऽप्यति' इत्यमरः। **प्रहरेति**। प्रहर ताडयस्व। मामिति शेषः। चापं धनुः कर्तृ। 'भयामृतशकृद्दुग्धचापाभरणलाञ्छनम्' इति नपुंसकशेषेष्वमरोक्तेश्चापशब्दस्य नपुंसकत्वमिति। नमतु शरनिःसारणार्थं नतं भवतु। अन्तर्भावितण्यर्थस्य नमतेः कर्मणः कर्तृत्वविवक्षया कर्तरि लोट्। यद्यपि 'कर्मवत्कर्मणा तुल्यक्रियः' इति प्राप्तयोर्यगात्मनेपदयोर्मध्ये 'न दुहस्नुनमां यक्चिणौ' इति यको निषेधेऽप्यात्मनेपदं दुर्वारम्, यथा 'नमते दण्डः' इत्यादौ,

झटिति विततवल्ह्युद्गारभास्वत्कुठार-
प्रविघटितकठोरस्कन्धबन्धः कबन्धः ॥ ५९ ॥

**जनकशतानन्दौ**—वत्स रामभद्र, विश्वस्य तावदास्स्व ।

**रामः**—कष्टम् । अभ्यनुज्ञापेक्षः संवृत्तोऽस्मि ।

**जामदग्न्यः**—आङ्गिरस, अपि सुखम् ।

**शतानन्दः**—विशेषतस्त्वद्दर्शनात् । अपि च ।

त्वं नः पूज्यतमोऽतिथिर्यदि ततः सज्जातिथेया वयं

**जामदग्न्यः**—त्वं पुरोहितः सुचरितो गृहमेधी याज्ञवल्क्यशिष्यः । तदत्र सर्वं युज्यते । किंतु नाहमातिथ्यकामः ।

**शतानन्दः**—

कन्यान्तःपुरमक्रमात्प्रविशता संदूषितान्तःस्थितिः ।

---

तथापि 'निरङ्कुशाः कवयः' इत्युक्तत्वादात्मनेपदाभावः । यद्वा मामित्यध्याहारः । चापं कर्तृ । मां नमयत्वित्यर्थः । एवं च परशुरामनमने चापस्य करणत्वात्तस्य कर्तृत्वविवक्षायाम् 'असिश्छिनत्ति' इत्यत्रेव कर्तरि लकारः, परस्मैपदं च । अथवा चापं कर्तृ नमतु । विस्फारशब्दं करोत्वित्यर्थः । 'णमु प्रह्वत्वे शब्दे च' इति णमतिः शब्दार्थकः । अद्य तु मुख्यमेव कर्तृत्वम् । यद्वा मां प्रहर । मयि चापं कर्म नम । नमयेत्यर्थः । तुशब्दश्चार्थकः प्रहारं समुच्चिनोति । तुशब्दोऽवधारणार्थको वा । नमयैवेत्यर्थः । अहं प्राक्प्रहारप्रियः । शत्रुणा प्राक्प्रहारमिच्छामीत्यर्थः । स्वयं प्राक्प्रहारे तु शत्रोरपुनरङ्कुरत्वात्तेन मम प्रहारो दुर्लभ इति भावः । तदाह—**मयि त्वित्यादिना** । मयि तु सर्ववीरजनोत्तीर्णे मयि कृतनिघाते सति कृतप्रहारे सति परेण । अनन्तरकालवाचिनः परशब्दात् 'एनबन्यतरस्यामदूरेऽपञ्चम्याः' । झटिति शीघ्रं विततैर्विस्तृतैर्वल्ह्युद्गारैरभ्युद्गमनैर्हेतुभिर्भास्वता तेजस्विना कुठारेण प्रविघटितो वियोजितः कठोरः पूर्णः । 'कठिचकिभ्यामोरन्' इति सूत्रे कठोरशब्दः पूर्णतायामपीति शाब्दिकोक्तेः । स्कन्धस्यांसस्य । 'स्कन्धो भुजशिरोंऽसोऽस्त्री' इत्यमरः । बन्धो यस्य स तथोक्तः । कबन्धोऽपमूर्धदेहः । 'कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम्' इत्यमरः । किं विदध्यात्किं कुर्यात् । शकि लिङ् ॥ ४९ ॥ विश्वस्य परशुरामं जेतुं शक्त इति निश्चयः । संबुद्ध्यन्तमेतत् । आस्स्व तावत् । अद्य किंचित्कालं निर्व्यापारस्तिष्ठेत्यर्थः ॥ अभ्यनुज्ञा गुरुजनानुमतिरपेक्ष्यापेक्षणीया येन स तथोक्तः । 'गुरोश्च हलः' इति कर्मण्यकारप्रत्ययः ॥ **त्वं न इति** । सज्जं संभृतमातिथेयमतिथिषु साधु विष्टराध्यपाद्यादिकं यैस्ते तथोक्ताः । 'सज्जौ संभृतसंनद्धौ' इति रत्नमाला । अतिथिशब्दात् 'तत्र साधुः' इत्यधिकारे 'पथ्यतिथिवसतिस्वपतेर्ढञ्' इति ढञ् ॥ सुचरितः सुवृत्तः ॥ अक्रमात्सहसा कन्यान्तःपुरं प्रविशता । त्वयेति शेषः । अन्तः-

**जामदग्न्यः**—अरण्यवासी ब्राह्मणोऽहमनभिज्ञः परमेश्वरगृहव्यवहारस्य ।

**रामः**—(स्वगतम् ।) शोभत एव दत्तभुवनैकदक्षिणस्य सामन्तेष्वहंकारोत्प्रकाशः ।

**जनकः**—

पापं वाञ्छसि कर्म राघवशिशावस्मत्सनाथे कथं

(प्रविश्य ।)

**कञ्चुकी**—

देव्यः कङ्कणमोचनाय मिलिता राजन्वरः प्रेष्यताम् ॥५०॥

**जनकशतानन्दौ**—वत्स रामभद्र, श्वश्रूजनस्त्वामाह्वयति । तद्गम्यताम् ।

**रामः**—जामदग्न्य, एवमादिशन्ति गुरवः ।

**जामदग्न्यः**—क्रियतां लोकधर्मः । पश्यन्तु त्वां ज्ञातयः । किंतु

---

स्थितिरन्तःपुरमर्यादा । 'स्थानमर्यादयोः स्थितिः' इति रत्नमाला । संदूषिता विकलिता ॥ परमेश्वराणां प्रभूणां गृहस्यान्तःपुरादेर्व्यवहारस्य क्रमेण प्रवेशादिव्यापारस्यानभिज्ञः । अज्ञ इत्यर्थः ॥ अहंकारस्य गर्वस्योत्प्रकाशो व्यञ्जको मर्मोद्घाटनहासविशेषः ॥ अस्मत्सनाथेऽस्मत्परतन्त्रे राघवशिशौ रामे पापं कर्म कुठारप्रेरणरूपं कथं वाञ्छसीच्छसि । कुठारप्रेरणं हि रामस्यास्मत्सनाथत्वाच्छिशुत्वाच्च दुःशकं पापं चेति कथं तदिच्छसीत्यर्थः ॥ कञ्चुकी सौविदल्लः । कङ्कणमोचनाय वैवाहिकप्रतिसरविस्रंसनाय । 'निर्वृत्ते त्वथ कल्याणे नरो नद्धं च कौतुकम् । प्राप्ते निशामुखे तत्तन्मन्त्रेणाथ ततस्त्यजेत् ॥' इति वचनमत्र द्रष्टव्यम् । मिलिताः संगताः । प्रतीक्षन्त इति शेषः । वरो जामाता रामः । 'देवप्रसादे वरणे जामातरि वरः पुमान्' इति रत्नमाला ॥ ५० ॥ आदिशन्त्याज्ञापयन्ति ॥ लोकधर्मो लोकैरनुष्ठीयमानधर्मः । ज्ञातयो बन्धवः पश्यन्तु त्वाम् । इतःपरं मया युद्धे कं द्रक्ष्यन्तीति भावः । जनपदेषु देशेषु न परिक्षेप्तव्यो नातिवाहयितव्यः ॥ **प्रविश्येति** । इतरे जनकः शतानन्दो भार्गवश्च ॥ गुरुवचनाद्वसिष्ठविश्वामित्रवचनात् ॥ पूर्वाङ्केऽस्मिन्नङ्के च मुखसंधिः प्रतिमुखसंधिश्चोक्तः । तत्स्वरूपं तु—'मुखं बीजसमुत्पत्तिर्नानार्थरससंभवा । अङ्गानि द्वादशैतस्य बीजारम्भसमन्वयात् ॥ उपक्षेपः परिकरः परिन्यासो विलोभनम् । युक्तिः प्राप्तिः समाधानं विधानं परिभावना ॥ उद्भेदभेदकरणानि' इति दशरूपकादावुक्तम् । तत्र 'भद्रमस्तु' 'स्नेहं करोति' इति बीजारम्भसमन्वय उक्तः । बीजारम्भलक्षणं तु 'स्तोकोद्दिष्टः कार्यहेतुर्बीजं विस्तार्यनेकधा । औत्सुक्यमात्रमारम्भः फललाभाय भूयसे ॥' इत्युक्तम् । तत्रोपक्षेपादिकं तत्तदवसर एव लिखितम् । शिष्टमत्र

जनपदेषु न चिरमारण्यकास्तिष्ठन्ति । गन्तुकामोऽस्मि । अतो न कालः परिक्षेप्तव्यः ।

रामः—एवम् । (इति निष्क्रान्तः ।)

(प्रविश्य ।)

सुमन्त्रः—भगवन्तौ वसिष्ठविश्वामित्रौ भवतः सभार्गवानाह्वयतः ।

इतरे—क्व भगवन्तौ ।

सुमन्त्रः—महाराजदशरथस्यान्तिके ।

इतरे—गुरुवचनाद्गच्छामः ।

(इति निष्क्रान्ताः सर्वे ।)

**इति महाकविश्रीभवभूतिविरचिते महावीरचरिते द्वितीयोऽङ्कः ।**

---

लिख्यते—'अरिष्टतातिमाशास्महे' इति बीजसुखागमरूपप्राप्तिरुक्ता । 'कथमप्रमेय–' इत्यत्र बीजविषय आश्चर्यावेशरूपपरिभावनोक्ता । 'रामाय पुण्यमहसे' इत्यत्र बीजसुखदुःखहेतुरूपं विधानमुक्तम् । 'वत्स, हन्यताम्' इत्यत्र बीजानुगुणप्रोत्साहनरूपमेद उक्तः । 'अस्यायमवसरः' इत्यादौ बीजानुगुणप्रस्तुतकार्यारम्भरूपकरणमुक्तम् । एवमन्यदपि स्वयं द्रष्टव्यम् । अनन्तरं प्रतिमुखसंधिः । तत्स्वरूपं तु—'लक्ष्यालक्ष्यस्य बीजस्य व्यक्तिः प्रतिमुखं मतम् । बिन्दुप्रयत्नाभिगमादङ्गान्यस्य त्रयोदश ॥ विलासः परिसर्पश्च विधूतं शर्मनर्मणी । नर्मद्युतिप्रगमनं निरोधः पर्युपासनम् ॥ वक्रं पुष्पमुपन्यासो वर्णसंहार इत्यपि ॥' प्रथममप्रथममलक्ष्यस्य धनुर्भङ्गदिव्यास्त्रदानादिना लक्ष्यस्य च बीजस्य व्यक्तिरूपं प्रतिमुखम् । तत्र च बिन्दुप्रयत्नौ वक्तव्यौ । तत्स्वरूपं तु—'अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम् । प्रयत्नस्तु फलावाप्तौ व्यापारोऽतित्वरान्वितः ॥' इति । अत्र भार्गवप्रवेशो बिन्दुः । अवान्तरविच्छेदहेतुत्वेऽप्युत्तरत्र धनुर्दानादिभिरच्छेदकारणत्वात् । 'तपस्यंते–' इत्यादिषु प्रयत्नः स्पष्टः । तत्राङ्गानि लिख्यन्ते । 'सख्यः—कथयत तत्' इत्यत्र दृष्टनष्टपदार्थानुसरणरूपः परिसर्प उक्तः । 'नोत्सवा—' इत्यादावनिष्टवस्तुविक्षेपरूपविधूननमुक्तम् । 'किमेकदेशेन–' इत्यादिना रत्युपशमनरूपं शर्मोक्तम् । 'कुमार प्रेक्षस्व' इत्यादिनानुरागोद्घटनार्थप्रीतिरूपद्युतिरुक्ता । 'सखि, समुरासुर–' इत्यादिना चानुरागप्रकाशवचनरूपं पुष्पमुक्तम् । 'आतङ्कश्रम—'इत्यादिना चानुरागहेतुवाक्यरचनारूपन्यास उक्तः ।'धनुषि धारयन्ती' इत्यादिना च छद्मना हितागमनिरोधनरूपनिरोध उक्तः । 'उतसिक्तस्य' इत्यादिना च संभोगविषयमनोरथरूपविलास उक्तः । 'आर्यपुत्र' इत्यादिना चेष्टजनानुनयरूपपर्युपासनमुक्तम् । 'अन्विष्यत' इत्यादिना च प्रमुखनिष्ठुरवचनरूपं वज्रमुक्तम् । 'अयं स किल' इत्यादिना परिहासवचनरूपं नर्मोक्तम् । 'राम राम नयनाभिरामताम्' इत्यादिना चोत्तरोत्तरवाक्यैरनुरागबीजप्रकाशनरूपः प्रगम उक्तः । एवमन्यदपि यथासंभवं द्रष्टव्यम् ॥

कविना तेन महता प्रायशोऽस्मिन्निबन्धने ।
दशरूपकनिर्दिष्टः क्रमोऽङ्गानामनाश्रितः ॥
अथवा तत्क्रमोऽप्यत्र कथंचिल्लिखितुं क्षमः ।
स्फुटप्रतीतिमाश्रित्य क्रमत्याग उदीरितः ॥
यो महीसारवास्तव्यो वाधूलो वीरराघवः ।
स महावीरचरिते द्वितीयाङ्कं व्यवीवरत् ॥

इत्यण्णाप्पङ्गार्यनामधेयेन वाधूलवीरराघवेण विरचितायां महावीरचरितव्याख्यायां भावप्रद्योतिनीसमाख्यायां द्वितीयोऽङ्कः ॥



## तृतीयोऽङ्कः ।

(ततः प्रविशत उपविष्टौ वसिष्ठविश्वामित्रौ जामदग्न्यशतानन्दौ च ।)

**वसिष्ठविश्वामित्रौ**—(जामदग्न्यं प्रति ।)

इष्टापूर्तविधेः सपत्नशमनात्प्रेयान्मघोनः सखा
येन द्यौरिव वज्रिणा वसुमती वीरेण राजन्वती ।
यस्यैते वयमग्रतः किमपरं वंशश्च वैवस्वतः
सोऽयं त्वां तनयप्रियः परिणतो राजा शमं याचते ॥ १ ॥

तद्विरम शुष्ककलहात् । इदं चास्तु ।

---

अथ कविना तृतीयाङ्कः प्रस्तूयते—**ततः प्रविशत उपविष्टावित्यादिना ।** जामदग्न्यशतानन्दौ चेति । प्रविशत इत्यनुषङ्गः । वसिष्ठविश्वामित्रौ जामदग्न्यं प्रतीति । आहतुरिति शेषः । **इष्टापूर्तेति ।** अत्र य इत्यध्याहार उत्तरत्र येनेत्यादि यच्छब्द-युक्तवाक्यशैलीदर्शनात् । यो दशरथ इष्टं दर्शपूर्णमासज्योतिष्टोमाश्वमेधराजसूयादि-यागः । 'यज देवपूजायाम्' इत्यस्माद्भावे क्तः । पूर्तं देवालयतटाकारामादिकरणम् । 'क्रतुकर्मेष्टं पूर्तं खातादि कर्म यत्' इत्यमरः । इष्टं च पूर्तं चेति विग्रहे समाहार इत-रेतरयोगो वा द्वन्द्वः । पृषोदरादित्वादिष्टशब्दस्य दीर्घः । तयोर्विधेरनुष्ठानात्सपत्नानां शत्रूणां शमनान्निरसनात् । 'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः । मघोन इन्द्रस्य प्रेयानतिशयेन प्रियः सखा मित्रं भवति । वीरेण येन दशरथेन वज्रिणेन्द्रेण द्यौरिव स्वर्ग इव । 'सुरलोको द्योदिवौ द्वे' इत्यमरः । वसुमती भूमी राजन्वती शोभ-नेन राज्ञा युक्ता भवति । 'राजन्वान्सौराज्ये' इति निपातिताद्राजन्वच्छब्दात् 'उगि-तश्च' इति स्त्रियां ङीप् । एते वयमहं विश्वामित्रादयश्च यस्य दशरथस्याग्रतः पुरतः । भवाम इति शेषः । हितानुशासनाद्यर्थं नित्यं संनिहिता इत्यर्थः । अपरं वक्ष्यमाणा-दन्यत्किम् । वक्तव्यमिति शेषः । वंशश्च यस्येति वर्तते । यस्य दशरथस्य वंशः कुलं च वैवस्वतः सूर्यसंबन्धी । विवस्वच्छब्दात् 'तस्येदम्' इत्यण् । तनयप्रियः प्रियपुत्रः । 'वा प्रियस्य' इति परनिपातः । परिणतो वृद्धो राजा मुख्यराजत्ववान् । 'मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः' इत्युक्तेः । सोऽयं दशरथः शमं भवतः क्रोधनि-वृत्तिं याचते । भवन्तमिति शेषः । 'तस्मादपि वध्यं प्रपन्नं प्रति प्रयच्छति' इति श्रुत्या शरणागतव्यापादोऽत्यन्तदुष्ट इत्यर्थः । येनेत्यादि वैवस्वत इत्यन्तं योजयित्वा सोऽयं मघोनः सखा तनयप्रियः परिणतो राजा शमं याचत इत्यनध्याहारेण वा योज्यम् । एतदुत्तराङ्कस्य पूर्वाङ्कार्थानुसंगतत्वादङ्कावतरणम् । यथोक्तम्—'यत्र स्यादु-त्तराङ्कार्थः पूर्वाङ्कार्थानुसंगतः । असूचिताङ्कपात्रं तदङ्कावतरणं मतम् ॥' इति ॥ १ ॥

**तदिति ।** तत्तस्माद्धेतोः शुष्ककलहान्निष्प्रयोजनाद्युद्धात् । 'कलहास्फोटसंयुगाः' इत्यमरः । 'जुगुप्साविराम—' इत्यादिना पञ्चमी । विरम निवृत्तो भव । 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् । इदं वक्ष्यमाणार्थरूपम् । चकारः कलहविरामं समुच्चिनोति ।

संज्ञप्यते वत्सतरी सर्पिष्यन्नं च पच्यते ।
श्रोत्रिय श्रोत्रियगृहानागतोऽसि जुषस्व नः ॥ २ ॥

**जामदग्न्यः**—अत्र वो विज्ञापयामि किं न क्षमे यदि रामः प्रकृष्टवीर्यो न स्यात् । पश्यन्तु भवन्तः ।

रामः कर्मभिरद्भुतैः शिशुरपि ख्यातस्ततो भार्गवः
कस्मात्प्राप्य तिरस्क्रियामसहनोऽप्यस्थादिति प्रस्तुते ।
को विद्याद्गुरुगौरवादिति भवेज्ज्ञातापि वक्ता पुन-
र्नत्वेवास्ति तथास्थितस्य सुलभद्वेषं हि वीरव्रतम् ॥ ३ ॥

---

**संज्ञप्यत इति** । वत्सतरी द्वितीयं वयःप्राप्ता गौः । 'वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे' इति वत्सशब्दात्ष्टरच् । षित्वान्ङीष् । 'दम्यवत्सतरौ समौ' इत्यमरः । तृतीयं वयः प्राप्ता गौरित्यन्ये । संज्ञप्यते विशस्यते । 'मारणतोषणनिशामनेषु ज्ञा' इति मित्त्वात् णौ 'मितां ह्रस्वः' इति ह्रस्वः । णिजन्तात्कर्मणि यक् । युगान्तरेष्वतिथीनां मांसकल्पो विहितस्तदभिप्रायेणेत्थमुक्तम् । किंच सर्पिषि घृतेऽन्नं पच्यते संस्क्रियते । हे श्रोत्रिय साङ्गवेदाध्यायिन्, श्रोत्रियगृहान्साङ्गवेदाध्यायिनो गृहाञ्जनकस्य गृहम् । 'गृहाः पुंसि च भूम्न्येव' इत्यमरः । आगतोऽसि प्राप्तोऽसि । नोऽस्माकम् । वत्सतर्यादातिथ्यमिति शेषः । जुषस्व सेवस्व । 'जुषी प्रीतिसेवनयोः' इत्यस्मान्निमन्त्रणे लोट् । यद्वा श्रोत्रिय श्रोत्रियेति संमतौ द्विरुक्तिः । नोऽस्माकं गृहानागतोऽसि जुषस्व । प्रीयस्वेत्यर्थः । संबुद्ध्यैक्याभिसंधिना नेत्युक्तिः ॥ १ ॥ **अत्रेति** । अत्रास्मिन्नर्थे कलहविरत्यातिथ्यान्नग्रहणरूपे भवदुक्तार्थे । यदि रामः प्रकृष्टवीर्योऽधिकबलो न स्यात्किं न क्षमे । किमर्थं । क्रोधनिवृत्तिं न प्राप्नुयामित्यर्थः । पश्यन्तु निरूपयन्तु । **राम इति** । रामः शिशुरप्यद्भुतैस्ताटकाताटकेयनिरसनाद्याश्चर्यैः कर्मभिः ख्यातः प्रसिद्धः । असहनोऽपि क्षान्तिरहितोऽपि न विद्यते सहनं यस्येति विग्रहः । भार्गवस्ततस्तस्माद्रामात्तिरस्क्रियां गुरुधनुर्भङ्गरूपं परिभवं प्राप्य कस्माद्धेतोरस्थादप्रतिकुर्वन्स्थितः । तिष्ठतेर्लुङ् । 'गातिस्था–' इत्यादिना सिचो लुक् । इत्यस्मिन्नर्थे प्रस्तुते प्रकृते सति गुरुषु वसिष्ठादिषु गौरवात्तद्वचनानतिलङ्घनहेतुतदीयमहत्त्वाद्धेतोरप्रतिकुर्वन्भार्गवः स्थित इति को विद्याज्ज्ञातुमर्हः । अर्हे लिङ् । ज्ञाता गुरुगौरवादप्रतिकुर्वन्स्थित इति ज्ञानवान्कश्चिद्भवेदपि । 'विस्तीर्णा पृथिवी जनाश्च विविधाः' इति न्यायेन संभवतु नाम । अपीति संभावनायाम् । 'संभावनेऽलमिति चेत्सिद्धाप्रयोगे' इति लिङ् । वक्ता पुनर्गुरुगौरवादस्थात् भार्गव इति वक्ता तु न त्वेवास्ति नैवास्ति । परपरिवादरसिकत्वाल्लोकस्येति भावः । विस्तीर्णन्यायप्रवृत्तिशङ्कानिरासकस्तुशब्दः । अत्यन्तायोग्यत्वादत्र नवा प्रवृत्तिरिति भावः । यस्मादेवं तस्मात्तथास्थितस्य गुरुगौरवादप्रतिकुर्वन्स्थित इति लोके वेत्तुं वक्तुं चाविषयतया स्थितस्य । ममेति शेषः । वीराणां व्रतं परिभवासहनप्रयुक्तप्रतिकारकर्तव्यतानियमः सुलभद्वेषं न्याय्यकलहं हि । हिशब्दः प्रतियोग्यभ्युप-

अपि च ।

> यशसि निरवकाशे विश्वतः श्वेतमाने
> कथमपि वचनीयं प्राप्य यत्किंचिदेव ।
> कृतविततिरकस्मात्प्राकृतैरुत्तमानां
> विरमति न कथंचित्कश्मला किंवदन्ती ॥ ४ ॥

**वसिष्ठः**—अयि वत्स, किमनया यावज्जीवमायुधपिशाचिकया । श्रोत्रियोऽसि जामदग्न्य । पूतं भजस्व पन्थानम् । आरण्यकश्चासि । तत्प-

---

गमं सूचयति । 'अवाच्यवादान्–' इति न्यायेन लोकेष्ववाच्यवादपरिहारार्थत्वान्नायं शुष्ककलह इति भवद्भिरेवोपगन्तव्यं भवतीति भावः ॥३॥ **यशसीति** । विश्वतो विश्वस्मिन्देशे । आद्यादित्वात्तसिः । श्वेतमाने धावल्यं प्राप्नुवति । 'श्विता वर्णे' इत्यस्माल्लटः शानच् । शषो मुगागमः । कीर्तेः श्वैत्यवर्णनं कविसमयसिद्धम् । निरवकाशे परिवादप्रवेशार्हरन्ध्रशून्य उत्तमानां श्रेष्ठानां यशसि वीर्यशौर्यादिगुणवत्ताप्रथायां कथमपि कृच्छ्रेण प्रयत्नेन 'ज्ञातहेतुविवक्षायामप्यादिकथमव्ययम् । कथमादितथाप्यन्तं यत्नगौरवबाढयोः ॥' इत्युत्पलमालायाम् । यत्किंचित्स्वल्पं वचनीयं गर्ह्यम् । 'गर्ह्याधीनौ च वक्तव्यौ' इत्यमरः । तत्पर्यायत्वाद्वचनीयशब्दोऽपि तदर्थकः । प्राप्य लब्ध्वा । प्राकृतैः पृथग्जनैः । 'प्राकृतश्च पृथग्जनः' इत्यमरः । कृता विततिर्विस्तारो यस्याः सा तथोक्ता । वृद्धिं प्रापितेत्यर्थः । 'तनु विस्तारे' भावे क्तिन्, अनुनासिकलोपश्च । कश्मला मूर्च्छाकरी । हेयेति यावत् । 'मूर्च्छा तु कश्मलं मोहः' इत्यमरः । मत्वर्थीयोऽच्प्रत्ययः । ततः स्त्रियां टाप् । किंवदन्ती लोकवादः । 'तृभूवहिवसि–' इत्यादि झच्प्रकरणे बाहुलकाद्वदेरप्यौणादिके झच्प्रत्यये झस्यान्तादेशे झच्प्रत्ययस्य षित्त्वातिदेशात् 'षिद्गौरादिभ्यश्च' इति ङीषि किंवदन्तीति रूपम् । 'किंवदन्ती जनश्रुतिः' इत्यमरः । कथंचित्केनापि प्रकारेण बहुकालातिक्रमेऽप्यकस्मान्निष्कारणं प्रतीकाररूपकारणेन विना न विरमति न नश्यति । अतोऽपि नायं शुष्ककलह इति भावः ॥ ४ ॥ एवं गुरुपरिवादपरिहारार्थत्वाद्रामेण सह मया कलहः कार्य इत्यभिप्रायवन्तं भार्गवं वसिष्ठ आह—**अयि वत्सेति** । ब्राह्मणानर्हत्वेनागन्तुकत्वादवद्यावहत्वाच्च पिशाचिकात्वनिरूपणं कृतम् । यावज्जीवं जीवनकालमभिव्याप्य 'यावत्तावच्च साकल्ये' इत्यमरः । 'धातुसंबन्धे प्रत्ययाः' इत्यधिकारे 'यावति विन्दजीवोः' इति णमुल् । गुरूपदिष्टविद्याया एवावद्यावहत्वेन त्याज्यत्वादद्य गुरुपरिवादपरिभवो नावश्यक इति भावः । अथ यावज्जीवमाश्रयणीयां विद्यां प्रस्तौति—**श्रोत्रियोऽसीत्यादिना** । आभ्यां विशेषणाभ्यां शस्त्रविद्यानधिकारोऽध्यात्मविद्यायां सामान्यातीताधिकारश्चोक्तौ । श्रोत्रिय इति वैदुष्यं जामदग्न्य इति शास्त्रापर्युदासश्चोक्तः । पूतमनवद्यं पन्थानं निःश्रेयसोपायं भजस्व । अनेन शस्त्रग्रहणमार्गस्यापूतत्वं व्यञ्जितम् । तथा चापस्तम्बः—'परीक्षार्थोऽपि ब्राह्मण आयुधं नाददीत' इति । आरण्यकश्चासरण्ये

रिचिनु चित्तप्रसादनीश्चतस्रो मैत्र्यादिभावनाः । प्रत्यासीदति हि ते विशोका ज्योतिष्मती नाम योगवृत्तिः । तत्प्रसादजं ऋतंभराभिधानं

---

भवोऽसि । अनेनाध्यात्मविद्यायां विशेषाधिकार उक्तः । 'ये चारण्ये श्रद्धातप उपासते' इति श्रूयते । तत्तस्मात् । सामान्यतो विशेषतश्चाधिकारसद्भावादित्यर्थः । चित्तप्रसादनीश्चित्तनैर्मल्यकारिणीः । 'चित्तप्रसाधनीः' इति पाठे चित्तपरिकर्मकरीरित्यर्थः । 'परिकर्म प्रसाधनम्' इत्यमरः । मैत्री आदिर्यासां तास्तथोक्ता भावनाः संस्कारान्परिचिनु परिशीलय । आदिपदेन करुणा मुदिततोपेक्षा च गृह्यन्ते । तत्र पुण्यकृत्सु मैत्री, दुःखिषु करुणा, सुखिषु मुदितता, पापिषूपेक्षा च मनोमलहारिण्य इति योगशास्त्रप्रक्रिया प्रत्यासीदति । ते पूर्वोक्ताधिकारसंपत्तियुक्तस्य तव विशोका शोकापहा ज्योतिष्मती । द्रष्टव्यतया ज्योतिः परं ज्योतिरस्यामस्तीति ज्योतिष्मती । नामेति योगशास्त्रप्रसिद्धिरुच्यते । योगश्चित्तवृत्तिनिरोधस्तद्रूपा मनोवृत्तिर्योगवृत्तिः । तथा च पातञ्जलसूत्रम्—'योगश्चित्तवृत्तिनिरोधलक्षणः' इति । प्रत्यासीदति प्रत्यासन्ना भवति । अचिरसिद्धिमती भवतीत्यर्थः । क्रमेणैकादिद्वादशपर्यन्तसंवत्सरसाध्यान्सिद्धिविशेषाञ्शीघ्रमेव तव साधयतीत्यर्थः । तथा च योगशास्त्रे—'प्रथमे हतरुक्च सर्वलोकप्रिय एवाथ च वत्सरे द्वितीये । कवितां कुरुते सुपर्ववाण्या भुजगाद्यैर्न च बध्यते तृतीये ॥ चतुर्थकेनातुरतापिपासानिद्रादिना तर्जितवर्जितः स्यात् । दूरश्रवः पञ्चमवत्सरे वाक्सिद्धिः परेषां तनुषु प्रवेशः ॥ षष्ठे स वज्रैरपि यो न विध्यते ततोऽतिवेगी च सुदूरदर्शनः । भवेद्बुधः सप्तमवत्सरेऽष्टधा विभूतयोऽस्य प्रभवेयुरष्टमे ॥ गगनचरो दिग्विचरो नवमेऽब्दे यस्तु वज्रकायः स्यात् । स मनोगो दशमे स्याद्यत्रेच्छा तत्र गच्छति प्रमनाः ॥ एकादशके वर्षे सर्वज्ञः सिद्धिमान्भवेद्योगी । द्वादशके शिवतुल्यो हर्ता कर्ता स्वयं भवति ॥' इति ॥ **तत्प्रसादेति** । तस्या ज्योतिष्मतीयोगवृत्तेः प्रसादात्प्रत्ययान्तरसंवलनेनानाविलत्वाज्जायत इति तत्प्रसादजम् । 'पञ्चम्यामजातौ' इति डः । ऋतं परमार्थं बिभर्तीति ऋतंभरम् । 'संज्ञायां भृतॄ—' इत्यादिना खच्प्रत्ययः । ऋतपदस्य मुमागमश्च । ऋतंभरमित्यभिधानं यस्य तत्तथोक्तम् । नाम प्रसिद्धौ । बहिःसाधनैर्योगातिरिक्तलौकिकवैदिकसाधनैरुपधेयं संनिधाप्यं तन्न भवतीत्यबहिःसाधनोपधेयं सर्वार्थेषु सर्वप्रयोजनेषु सामर्थ्यं यस्मिन्नस्तीति तथोक्तम् । अपविद्धाः प्रध्वंसिता विप्लवाः क्रोधमोहमात्सर्यादय उपरागाः कामलोभमदादयोऽविद्यास्मितादयश्च येन तत्तथोक्तम् । ऊर्जस्वलं बलिष्ठमनपायि । अन्तर्ज्योतिषो हृदयान्तर्वर्तिनः परस्य ज्योतिषः परमात्मनो दर्शनं साक्षात्कारः । भवतीति शेषः । तदुक्तं योगशास्त्रे—'ज्योतिःपुञ्जं निराकारं लक्षयेन्मुक्तिदं भवेत् । ज्योतिःस्वरूपममलं हृदि बाह्यहीनं पश्यन्ति ये त इह संयमिनः कृतार्थाः' । इति सर्वार्थशब्देन 'सिद्धयोऽष्टादश प्रोक्ता धारणायोगपारगैः । तासामष्टौ मत्प्रधाना दशैव गुणहेतवः ॥' इत्यारभ्य 'उपासकस्य मामेवं योगधारणया मुनेः । सिद्धयः पूर्वकथिता उपतिष्ठन्त्यशेषतः ॥' इत्यन्तं भागवतगतभगवद्वचनमनु-

नामाबहिःसाधनोपधेयसर्वार्थसामर्थ्यमपविद्धविप्लवोपरागमूर्जस्वलमन्तर्ज्योतिषो दर्शनम् । यतः प्रज्ञानमभिसंभवति तद्ध्याचरितव्यं ब्राह्मणेन, तरति येनापमृत्युं पाप्मानम् । अन्यत्र ह्यभिनिविष्टोऽसि । पश्य ।

परिषदियमृषीणामत्र वीरो युधाजि-
त्सह नृपतिरमात्यै रोमपादश्च वृद्धः ।
अयमविरतयज्ञो ब्रह्मवादी पुराणः
प्रभुरपि जनकानामद्रुहो याचकास्ते ॥ ५ ॥

**जामदग्न्यः**—एवमेतत् । किंतु

---

संधेयम् । अबहिःसाधनोपधेयेत्यत्र 'जनौषधितपोमन्त्रैर्यावतीरिह सिद्धयः । योगेनाप्नोति ताः सर्वा नान्यैर्योगगतिं व्रजेत् ॥' इति वचनं द्रष्टव्यम् । अपविद्धविप्लवेत्यत्र 'क्लेशानां तु क्षयकरं योगादन्यन्न विद्यते' इत्यादिकं पराशरवचनमनुसंधेयम् । **यत इति** । येन प्रज्ञानेन करणेनापमृत्युमकालमृत्युवत्प्राणहरं परमात्मानुभवलक्षणप्राणसंबन्धहानिकरं पाप्मानं पापफलभूतसंसारम् । 'अस्त्री पङ्कं पुमान्पाप्मा' इत्यमरः । तरति लङ्घते । संसारान्मुक्तो भवतीत्यर्थः । तादृशं प्रज्ञानं फलतोऽनुषङ्गतो विषयतश्च प्रकृष्टं ज्ञानं यतो यस्मादभिसंभवति सम्यगुपपद्यते तत्प्रज्ञानसाधनदुश्चरितविरतत्वादिकं ब्राह्मणेनाचरितव्यम् । हिशब्दो वैदिकप्रसिद्धिं सूचयति । तथाच श्रुतिः—'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमनसो वापि प्रज्ञानेनैनमाप्नुयात् ॥' इति । अन्यत्र प्रज्ञानसाधनादन्यत्र ब्राह्मणस्य शास्त्रतः प्रतिषिद्धे शस्त्रपरिग्रहादावभिनिविष्टोऽसि बद्धश्रद्धोऽसि । 'एष्वर्थेष्वभिनिविष्टानाम्' इति समर्थसूत्रे भाष्यप्रयोगात् 'अभिनिविशश्च' इति कर्मसंज्ञाविरहादन्यत्रेति सप्तमी । **परिषदिति** । ऋषीणामियं परिषद्गोष्ठी । 'समज्या परिषद्गोष्ठी' इत्यमरः । वीरो युधाजित्कुशध्वजो रोमाणि पादयोर्यस्य स तथोक्तो वृद्धः स्थविरः । अतिवार्धके हि पादेषु रोमाणि रोहन्तीति लोकप्रसिद्धिः । अमात्यैः सिद्धार्थादिभिर्मन्त्रिभिः सह नृपतिर्दशरथोऽविरतयज्ञः संततानुष्ठीयमानमोक्षार्थदर्शपूर्णमासज्योतिष्टोमादियज्ञः पुराणश्चिरंतनो ब्रह्म परमात्मानं वदतीति ब्रह्मवादी । ताच्छील्ये णिनिः । अयं जनकानां प्रभुरपि सीरध्वजोऽपीत्येतेऽद्रुहः सन्तः । न द्रुह्यन्तीत्यद्रुहः । 'सत्सूद्विषद्रुहदुह—' इत्यादिना कर्तरि क्विप् । त्वय्यनपराधिन एव सन्तस्ते तव याचकाः । याचन्त इति याचकाः । कर्तरि ण्वुल् । शममिति शेषः । कृतापराधैरपि याचनायामनुग्रहः कार्यः । 'प्रसादं पितृहन्तॄणामपि कुर्वन्ति साधवः' इति हि शास्त्रम् । किं पुनरकृतापराधैरुत्तमैर्याच्ञायामिति भावः । यद्वा ते तवाद्रुहो द्रोहाभावस्य । 'द्रुह जिघांसायाम्' भावे क्विप् । याचका भवन्ति । तव रामविषये जिघांसानिवृत्तिं याचन्त इत्यर्थः ॥ ५ ॥ एतद्भवद्भिरुच्यमानं सर्वम् । किंत्विति पूर्वोक्तार्थव्यतिरेके ।

शत्रुमूलमनुत्खाय न पुनर्द्रष्टुमुत्सहे ।
त्र्यम्बकं देवमाचार्यमाचार्यानीं च पार्वतीम् ॥ ६ ॥

**विश्वामित्रः**—यदि गुरुष्वनुरुध्यसे चेतयस्वेमावपि ततः किंचित् ।

हिरण्यगर्भादृषयो बभूवु-
र्वसिष्ठभृग्वङ्गिरसस्त्रयो ये ।
सोऽयं वसिष्ठो भृगुनन्दनस्त्व-
मेषोऽपि तस्याङ्गिरसः प्रपौत्रः ॥ ७ ॥

---

**शत्रुमूलमिति** । शत्रूणां मूलं पुनःप्ररोहहेतुत्वान्मूलत्वरूपणं, क्षत्रियत्वात्स्वं प्रति शत्रुमूलत्वं, धनुर्भञ्जकत्वात्स्वाचार्यं प्रति शत्रुत्वमिति भावः । अनुत्खायानुद्धृत्य । 'खनु अवदारणे' इत्यस्माल्ल्यपि 'ये विभाषा' इत्यात्वम् । त्र्यम्बकं त्र्यक्षमाचार्यं धनुर्विद्योपदेष्टारमाचार्यस्त्रीमाचार्यानीं पार्वतीं च । 'आचार्यादणत्वं च' इति ङीषानुगागमौ णत्वाभावश्च । पुनर्द्रष्टुं नोत्सहे न व्यवस्यामि । 'उत्साहो व्यवसायः स्यात्' इत्यमरः । यद्यपि तौ कारुणिकौ तथापि नाहं तदपराधिनमहत्वात् तद्दर्शनार्ह इति भावः ॥ ६ ॥ गुरुष्वनुरुध्यसे स्नेहवान्भवसि यदि । 'अनो रुध कामे' इति दिवादिः । ततस्तस्माद्गुर्वनुरोधाद्धेतोरिमावपि वसिष्ठशतानन्दावपि किंचिच्चेतयस्व । अनुरोद्धव्यत्वेन क्षणं जानीहीत्यर्थः । 'चिती संज्ञाने' चुरादिः । गुरुत्वमुपपादयति—**हिरण्यगर्भादिति** । ये त्रयो वसिष्ठभृग्वङ्गिरस ऋषयो हिरण्यगर्भाच्चतुर्मुखाद्बभूवुरुत्पन्नाः । तेष्वित्यध्याहारः । पूर्वयच्छब्दस्य तच्छब्दनियतत्वात् । प्रसिद्धो हि यत्तदोर्नित्यसंबन्धः । अयं तेषु स वसिष्ठः । तेषां मध्ये प्रसिद्धो वसिष्ठ इत्यर्थः । त्वं तेषु भृगुनन्दनः । तेष्वन्यतमस्य भृगोर्वंश्य इत्यर्थः । एषोऽपि शतानन्दोऽपि तेषु तस्याङ्गिरसः प्रपौत्रस्तेष्वन्यतमस्याङ्गिरसः पौत्रस्य पुत्रः । स त्वं तस्याङ्गिरस इति तच्छब्दयच्छब्दौ प्रतिनिर्देशौ न भवतः । भृगुविषये तच्छब्दादर्शनात् । तन्मात्रविषयतच्छब्दाध्याहारे तु भृगुनन्दन इति समासो न स्यादतस्तेष्वित्यध्याहार आवश्यक इति द्रष्टव्यम् । अत्र 'अथाभिध्यायतः सर्गं दश पुत्राः प्रजज्ञिरे । भगवच्छक्तियुक्तस्य प्रजासंतानहेतवः ॥ मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । भृगुर्वसिष्ठो दक्षश्च दशमस्तत्र नारदः ॥' इति भागवतवचनमनुसंधेयम् । 'प्राणाद्वसिष्ठः संजातो भृगुस्त्वग्जः करात्क्रतुः । अङ्गिरा मुखतोऽक्ष्णोऽत्रिः' इत्येतदपीह विवक्षितम् । हिरण्यगर्भात्कूटस्थादङ्गिरास्तस्मादुचथ्यस्तस्माद्गौतमस्तस्माच्छतानन्दः । एवं कूटस्थाद्धिरण्यगर्भाद्भृगुर्भृगोर्धाता विधाता च । ततः क्रमेणर्चीकस्तस्माज्जमदग्निस्तस्मात्परशुरामः । एवं संख्याधिक्ये तत्स्थानेनावरं परशुरामं प्रति शतानन्दः स्थानेनाधिकः । वसिष्ठस्तु कनिष्ठप्रपितामहत्वाद्वृद्धत्वाच्च स्थानवयोभ्यामधिक इति तयोः परशुरामं प्रति गुरुस्थानीयत्वम् । किंच शतानन्दो ज्येष्ठस्य श्रेष्ठावयवभवस्याङ्गिरसो-

जामदग्न्यः—

प्रायश्चित्तं चरिष्यामि पूज्यानां वो व्यतिक्रमात् ।
न त्वेव दूषयिष्यामि शस्त्रग्रहमहाव्रतम् ॥ ८ ॥

यतो विमुक्तेरपि मानरक्षणं
प्रियं निसर्गेण तथा च पश्य मे ।

ऽपत्यत्वादपि परशुरामं प्रति गुरुस्थानीय इति तावप्यनुरोद्धव्याविति भावः ॥ ७ ॥

**प्रायश्चित्तमिति** । अत्र विश्वामित्रेति संबुद्ध्यन्तमुपस्कार्यम् । हे विश्वामित्र, पूज्यानां गौरव्याणां वो युष्माकं व्यतिक्रमात्प्रातिलोम्यकरणान्निमित्ताद्युष्मद्याचितशमाकरणनिमित्तात्प्रायश्चित्तं प्रत्यवायपरिहारकं कर्म चरिष्यामि । शस्त्रग्रह एव महाव्रतं महाबलसाधनम् । अवश्यकर्तव्यत्वेन संकल्पितधर्मं तु नैव दूषयिष्यामि नैव लोपयिष्यामि । 'दुष वैकृत्ये' इत्यस्माण्णिच् । 'दोषो णौ' इति दीर्घः । अत्र पूर्वोक्तरीत्या परशुरामं प्रति वसिष्ठशतानन्दयोः पूज्यत्वं विश्वामित्रस्य तु परशुरामं प्रति पितुर्मातुलत्वाच्च पूज्यत्वमिति द्रष्टव्यम् । 'प्रायः पापं विजानीयाच्चित्तं तस्य विशोधनम्' इति स्मरणात्प्रायश्चित्तशब्दः प्रत्यवायनिवर्तकधर्मवाचकः । 'प्रायस्य चित्तिचित्तयोः' इति सुडागमः । अत्र 'पुत्रादिजनकं ज्येष्ठं गुरुं चापि न पीडयेत् । एकशब्देन नामोक्त्वा त्वंकारं हुंकृतिं च वा ॥ तद्दोषपरिहारार्थं नाचिकेतव्रतं चरेत् । कृच्छ्रान्द्वादशरात्रं चरित्वा सचैलस्नातो गुरुप्रसादात्पूतो भवति' इति स्कान्दवचनमभिप्रेतम् । पीडयेदित्यनिष्टकरणमिष्टाकरणं च विवक्षितम् । यद्यपि 'नास्तिक्यं प्रति लोपश्च' इति याज्ञवल्क्यस्मृत्या शस्त्रग्रहव्रतत्यागे सत्युपपातकं व्रजति, तथापि गुरुवचनात्तत्त्यागे गुरुव्यतिक्रमप्रयुक्तप्रत्यवायो न भवति । 'अष्टौ तान्यव्रतघ्नानि आपो मूलं घृतं पयः । हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥' इति स्मरणाद्व्रतलोपदोषश्च न भवेत् । अतो गुरुवचनानुरोधाच्छस्त्रग्रह एव त्याज्य इतीमां शङ्कां निवर्तयितुं तुशब्दः शस्त्रग्रहव्रतपरिपालने महतस्तत्फलस्यावाप्तिरिति तदेव परिपालनीयम् । गुरुव्यतिक्रमदोषस्तु प्रायश्चित्तेनैव निवर्तयितुं शक्य इति भावः । किंचोक्तरीत्या वसिष्ठादयो जन्मनैव गुरवः, भगवान्स त्र्यम्बकस्तु जन्मना विद्यया च गुरुः, सोऽपि हिरण्यगर्भान्मरीच्यादिभिः पूर्वमेव जातः । तदुक्तं भागवते—'धिया निगृह्यमाणोऽपि भ्रुवोर्मध्यात्प्रजापतेः । सद्योऽजायत तन्मन्युः स रुद्रो नीललोहितः ॥' इति । 'अथो वेदोपदेशाच्च विद्यया गुरुः' इत्युभयप्रकारगुरोस्त्र्यम्बकस्यानुरोधापेक्षया जन्मनैव गुरूणां युष्माकं व्यतिक्रमोऽकिंचित्कर इत्यभिप्रायेण महाव्रतमिति महच्छब्दः । तथा चोक्तरीत्या गुरुलघुविचारे फलाफलविचारे च गुरुत्वात्फलवत्त्वाच्च शस्त्रग्रहव्रतमेव परिपालनीयम् । लघुत्वात्प्रत्यवायपरिहारातिरिक्तफलशून्यत्वात्प्रत्यवायस्य प्रायश्चित्तेनाप्यपनोदयितुं शक्यत्वाच्च वसिष्ठानुरोधस्त्याज्य इति परशुरामस्याभिप्रायः ॥ ८ ॥

भवत्वेवम्, तथापि पूर्वोक्तयोगानुष्ठानेन संसारतरणलक्षणनिरतिशयफले यतस्व । शस्त्रग्रहव्रतफलं हि तदपेक्षयाल्पल्पमेव तथा च मोक्षोपायाङ्गतया शमादिसंपादकत्वेन शस्त्रग्रहत्याग एव क्रियतामित्यत्राह—**यत इति** । यतो येन निसर्गेण स्वभावविशे-

सनाभयो यूयमयं च कर्कशः
शरासनज्याकिणलाञ्छनो भुजः ॥ ९ ॥

**विश्वामित्रः**—(स्वगतम् ।)

संपूजितं हि माहात्म्यमुद्गिरन्त्यः पदे पदे ।
अपि मर्माविधो वाचः सत्यं रोमाञ्चयन्ति माम् ॥ १० ॥

**जामदग्न्यः**—भगवन्कुशिकनन्दन,

ब्रह्मैकतानमनसो हि वसिष्ठमिश्रा-
स्त्वं ब्रूहि वीरचरितेषु गुरुः पुराणः ।

---

षेण । 'संसिद्धिप्रकृती त्विमे । स्वरूपं च स्वभावश्च निसर्गश्च' इत्यमरः । विमुक्तेर्मोक्षात् । अपिशब्देन बन्धुभ्यो युष्मच्च । 'पञ्चमी विभक्ते' इति पञ्चमी । मानस्य शौर्यविजयाद्युत्कर्षप्रयुक्तपूजातिशयस्य रक्षणं परिपालनं मे प्रियमिष्टं भवति तथा तथाभूतं स्वभावं पश्य । विमुक्तेः स्वतःसुन्दरत्वेऽपि न केवलं वस्तुसौन्दर्यमिच्छायां हेतुः, किंतु 'अन्नं भोज्यं मनुष्याणाममृतं तु दिवौकसाम्' इति देवमनुष्यत्वादिस्वभावभेदेन भोज्यव्यवस्थानेन भोगादृष्टसहकृतभोक्तृस्वभावोऽपि । तत्र कारणं निरूपयस्वेति भावः । किंच यूयं मानविस्रंसनार्थिनो भवन्तः सनाभयः । 'सपिण्डास्तु सनाभयः' इत्यमरः । 'ज्योतिर्जनपद–' इत्यादिना समानस्य सभावः । शरीरघटितपरम्परासंबन्धेन संबन्धिनो बहिरङ्गाः, शरासनज्यायाश्चापमौर्व्याः । 'ज्या मौर्वीभूमिमातृषु' इति रत्नमाला । किणानि व्रणपदानि लाञ्छनानि यस्य स तथोक्तः । कर्कशः साहसिकः । 'स्यात्कर्कशः साहसिकः' इत्यमरः । भुजो बाहुर्मानरक्षणार्थयोजनो बाहुरयं शरीरत्वात्साक्षात्संबन्धी सन्नन्तरङ्ग इत्यर्थः । तथा च 'अन्तरङ्गबहिरङ्गयोरन्तरङ्गो बलीयः' इति भुजाभिमतमानरक्षणमेव प्रबलम् । तत्तु भवदभिमतमानविस्रंसनमिति भावः । पूर्वोक्तो मम निसर्गश्च । मम भुजलाञ्छनैरेव वामिविशद इति चाभिप्रायः ॥ ९ ॥ **संपूजितमिति** । संपूजितं प्रशस्तं माहात्म्यं धृतिमत्त्वादिप्रकर्षं पदे पदे स्थाने स्थाने सुलभद्वेषं हि वीरव्रतं शत्रुमूलमनुत्खाय नत्वेव दूषयिष्यामि । विमुक्तेरपि मानरक्षणं प्रियमिति बहुषु स्थलेष्वित्यर्थः । उद्गिरन्त्यः प्रकाशयन्त्यो वाचः परशुरामवचनानि मर्माणि हृदयानि स्वल्पेन हेतुनापि मरणहेतुभूतानि शरीरस्थानानि । म्रियतेः 'सर्वधातुभ्यो मनिन्' इति मनिन्प्रत्ययः । विध्यन्ति घ्नन्तीति मर्माविधः । कर्तरि क्विप् । 'नहिवृति–' इत्यादिना पूर्वपदस्य दीर्घश्च । रामभद्रव्यापारादगर्भत्वाद्दुःखहेतुभूताः सत्योऽपीत्यर्थः । मां वीरवासनावासितं मां रोमाञ्चयन्ति रोमाञ्चवन्तं कुर्वन्ति । 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इति रोमाञ्चवच्छब्दाण्णिच्, मतुपो लोपश्च । उक्तिप्रत्युक्तिसौष्ठवेन वीररसोद्गारेण च वीरवासनावासितं मां हर्षयन्तीति सत्यमित्यर्थः ॥ १० ॥ **ब्रह्मेति** । वसिष्ठमिश्राः । मिश्रशब्दो बहुवचनं च पूजायाम् । तथा च पूज्यो वसिष्ठ इत्यर्थः । ब्रह्मणि ब्राह्म-

वंशे विशुद्धिमति येन भृगोर्जनित्वा
शस्त्रं गृहीतमथ तस्य किमत्र युक्तम् ॥ ११ ॥

**वसिष्ठः**—(स्वगतम् ।)

कामं गुणैर्महानेष प्रकृत्या पुनरासुरः ।
उत्कर्षात्सर्वतोवृत्तेः सर्वाकारं हि दृप्यति ॥ १२ ॥

**विश्वामित्रः**—वत्स, एतद्ब्रवीमि ।

एकव्यक्त्यपराधकोपविकृतस्त्वं क्षत्रजातेरपि
प्रागाधारनिरन्वयप्रमथनादुच्छेदमेवाकरोः ।

---

ण्योचितशमदमादिष्वेकतानमनन्यवृत्ति मनो येषां तथोक्ता भवन्ति । 'एकतानोऽनन्यवृत्तिः' इत्यमरः । युद्धादिषूदासीना इत्यर्थः । हिशब्दः प्रसिद्धौ । वीराणां चरितेषु मानरक्षणादिषु पुराणश्चिरंतनो गुरुरुपदेष्टा त्वं ब्रूहि वद । वक्ष्यमाणार्थनिर्णयमिति शेषः । येन मया विशुद्धिमति दृढव्रतत्वादिशुद्धिभूयिष्ठे भृगोः । भर्जयत्यनिष्टमिति भृगुरिति व्युत्पत्त्यानिष्टतापनैकस्वभावस्य भृगोर्वंशे जनित्वा शस्त्रं गृहीतं तस्य मे । अत्र शस्त्रग्रहणतत्संन्यासविषये किं युक्तम् । अथशब्दः प्रश्नार्थकः । किं युक्तं पृच्छयत इत्यर्थः । वंशभावादपि शस्त्रग्रहव्रतं पालनीयमिति भावः । 'प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च' इति भ्रस्जतेः कुप्रत्ययः संप्रसारणं सलोपो न्यङ्क्वादित्वात्कुत्वं च । 'भृज्जति तपसा भृगुः' इति शाब्दिकाः । 'भ्रस्जो पाके' इति धातुपाठः ॥ ११ ॥ **काममिति** । एष परशुरामो गुणैर्वीर्यशौर्यदृढव्रतत्वादिभिर्महानतिशयितः । काममित्यनुज्ञायाम् । अस्य गुणमहत्त्वं मामनुमतमेवेत्यर्थः । 'स्मराभिलाषयोः कामोऽनुज्ञायां काममव्ययम्' इति रत्नमाला । पुनःशब्दस्तुशब्दार्थकः । 'पुनरप्रथमे भेदे' इत्यमरः । किंतु प्रकृत्या स्वभावतः । 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीया । असुर एवासुरः । प्रज्ञादेराकृतिगणत्वात्स्वार्थेऽण्प्रत्ययः । असुरस्वभावभूयिष्ठ इत्यर्थः । तत्र हेतुमाह—उत्कर्षादिति । हि यस्मात्सर्वतः सर्वेषु प्रकारेषु वृत्तिर्वर्तनं यस्य स तथोक्तस्तस्मादुत्कर्षातिशयाद्धेतोः सर्वे आकारा मानसत्ववाचिकत्वकायिकत्वादयः प्रकारा यस्मिन्कर्मणि तत्तथोक्तं यथा तथा दृप्यति गर्ववान्भवति । 'दर्पोऽहंकारकस्तूर्योः' इति रत्नमाला । 'दृप हर्षमोहनयोः' इति दिवादिः । शौर्यवीर्याभिजात्याद्यतिशयप्रयुक्तदर्पाद्धेतोरेष आसुरप्रकृतिरित्यर्थः । दर्पो ह्यासुरस्वभावः । तथा च भगवता गीतम्—'दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च । अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥' इति दम्भादयः स्वभावा इत्यर्थः ॥ १२ ॥ **वत्सेति** । भगिनीपौत्रत्वाद्वत्सेत्यामन्त्रणम् । एतद्वक्ष्यमाणं ब्रवीमि वदामि । त्वं ब्रूहीति । त्वयोक्तोऽहमिदं ब्रवीमीत्यर्थः । **एकव्यक्तीति** । त्वं प्राक्पूर्वकाल एकया व्यक्त्या क्षत्रियत्वजात्याश्रयेण केनचिदपराधाद्धोमधेनुहरणादिरूपानिष्टाचरणाद्यः कोपस्तेन विकृतः सन्विकृतिं प्राप्तः सन्नाधाराणां क्षत्रियत्वजा-

त्रिःसप्तावधि विप्रशुक्रजमपि क्षत्रं तथैवोद्धृतं
वृद्धैः स्वैश्च्यवनादिभिर्नियमितः क्रोधाद्व्यरंसीर्ननु ॥ १३ ॥

**जामदग्न्यः**—व्यरंसिषमेव पितृवधप्रयुक्तात्क्षत्रवधमहाधिकारात् । किमत्र निह्नवः ।

परशुरशनिचण्डः क्षत्रघातं विहाय
प्रियमपि समिदिध्मव्रश्चनः किं न जातः ।
निभृतविशिखदंष्ट्रश्चापदण्डोऽपि धत्ते
प्रशमितविषवह्नेः साम्यमाशीविषस्य ॥ १४ ॥

---

त्याधारभूतव्यक्तीनां निरन्वयप्रमथनान्निरन्वयविनाशजननादपुनःप्ररोहार्हध्वंसोत्पादनात् । नाशो द्विविधः—सान्वयविनाशः, निरन्वयविनाशश्चेति । तत्र दीपादेरुत्तरोत्तरज्वालोदयशिरस्कः पूर्वज्वालाविनाशः सान्वयविनाशः । निर्वापणादिना सजातीयज्वालोदयानर्हविनाशस्तु निरन्वयविनाशः। तथाविधनिरन्वयविनाशजननात्क्षत्रजातेः क्षत्रियत्वजातेरुच्छेदमेव सर्वदेशसर्वकालेषु विलयमेवाकरोः कृतवानसि । एकव्यक्त्येकाश्रिताया जातेर्व्यक्तिनाशे निराधारस्थित्यसंभवादुच्छेद एवेति फलितार्थः । किंच विप्रशुक्रजमपि क्षत्रं विप्रेभ्यः क्षत्रियासूतान्ना अपि क्षत्रियाः । 'शुक्रं तेजोरेतसी च' इत्यमरः । त्रिःसप्तावधीति पूर्वोत्तरान्वयि । त्रिःसप्तावध्युच्छेदमकरोः । त्रिःसप्तावध्युद्धृतमित्यन्वेतव्यम् । सप्त सप्तत्वसंख्यावधिः परिच्छेदिका यस्या उद्धरणक्रियाया इति क्रियाविशेषणमिदम् । सप्तशब्दः सप्तत्वसंख्यापरः शक्त्या लक्षणया वेति पक्षद्वयमपि शाब्दिकैः सूचितम् । त्रिरिति सुच्प्रत्ययान्तम् । तदर्थश्चोद्धरणक्रियायां सप्तत्वावच्छेदेनान्वेतीत्येकविंशतिकृत्व इति लभ्यते । सुजर्थस्य क्रियैकान्वयित्वस्वाभाव्येन संनिहितेनापि सप्तत्वेनान्वयासंभवात् । तथैव साक्षात्क्षत्रियवदेवोद्धृतम् । ध्वंसिता इत्यर्थः । त्वयेत्यनुषङ्गविपरिणामौ । किंच । वृद्धैः स्थानवयःप्रभृतिनाधिकैश्च्यवनादिभिः स्वैर्ज्ञातिभिः । 'स्वोऽस्त्री धने पुमाञ्ज्ञातौ त्रिष्वात्मीये स्वमात्मनि' इति रत्नमाला । नियमितः सन्नियन्त्रितः सन्क्रोधात्पूर्वोक्तैकव्यक्त्यपराधकोपजनितात्कोपाद्व्यरंसीर्विरतोऽभूरित्येतद्ब्रवीमीति पूर्वेणान्वयः । पूर्वमेव शस्त्रग्रहव्रतस्य समापितत्वात्पूर्वोक्तफलाफलविचारोऽत्रानवसरग्रस्त इति भावः । व्यरंसीरित्यत्र 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् । 'यमरमनम–' इत्यादिना सगिटौ ॥ १३ ॥

**व्यरंसिषमिति** । पितृवधप्रयुक्तात्तन्मूलकात्क्षत्रियाणां वधविषयकमहाधिकाराद्व्यरंसिषं विरतोऽभूवम् । तथा च निमित्तभेदात्पुनः कोपः शस्त्रग्रहणं चाय न्याय्यमेवेति भावः । अत्र पितृवधप्रयुक्तकोपविरामे निह्नवोऽपलापः । 'अपलापस्तु निह्नवः' इत्यमरः । **परशुरिति** । अशनिवच्चण्डस्तीक्ष्णः परशुः प्रियमपि क्षत्रघातं क्षत्रियवधं विहाय त्यक्त्वा समिधां प्रादेशपरिमितानां पलाशादिदण्डखण्डानामिध्मानां तद्द्विगुणानां पलाशादीन्धनखण्डानां व्रश्चनश्छेदनकरणं न जातः किम् । जात एवे-

एवं मया नियमितश्च्यवनादिवाक्यैः
कोपानलश्च परशुश्च पुनर्यथैतौ ।
देवस्य संप्रति धनुर्मथनेन सत्य-
मुत्थापितौ रघुसुतेन तथा प्रसह्य ॥ १५ ॥
एकस्य राघवशिशोः कृतचापलस्य
कृत्त्वा शिरो मयि वनाय पुनः प्रयाते ।
स्वस्थाश्चिराय रघवो जनकाश्च सन्तु
माभूत्पुनर्बत कथंचिदतिप्रसङ्गः ॥ १६ ॥

**शतानन्दः**—आः, शक्तिरस्ति कस्य वा विदेहराजन्यस्य राजर्षेर्याज्यस्य मे प्रेयसश्छायामप्यवस्कन्दितुम्, किं पुनर्जामातरम् ।

---

त्यर्थः । 'व्रश्च छेदने' इत्यस्मात् 'करणाधिकरणयोश्च' इति ल्युट् । यद्यप्यमरेण समिदिध्मशब्दयोः 'इध्ममेधः समित्स्त्रियाम्' इति पर्यायत्वमुक्तं तथापि 'समित्पवित्रमेधश्च त्रयः प्रादेशसंमिताः । इध्मं तु द्विगुणं कार्यं त्रिगुणः परिधिः स्मृतः ॥' इति स्मृत्यनुरोधादपर्यायत्वमिति द्रष्टव्यम् । चापदण्डोऽपि धनुर्दण्डश्च । निभृता निश्चला विशिखा एव बाणा एव दंष्ट्रा यस्य स तथोक्तः सन्प्रशमितो निर्वापितो विषमेव वह्निर्यस्य स तथोक्तस्तथाविधस्याशीविषस्य सर्पस्य साम्यमौपम्यं न धत्ते किम् । धत्त एवेत्यर्थः । किंनशब्दयोरनुषङ्गः । अतोऽत्र किं निह्नव इति पूर्वेण संबन्धः । यद्यपि विशिखदंष्ट्रेति रूपकं प्रक्रम्य साम्यं धत्त इत्युपमायां समापितम्, तथापि रूपकोपमयोरनत्यन्तभेदान्न दोषः । तदुक्तम्—'उपमैव तिरोभूतभेदो रूपकमिष्यते' इति ॥ १४ ॥ **एवमिति** । श्लोकद्वयमेकवाक्यम् । च्यवनादीनां वाक्यैर्हेतुभिः । मया कर्त्रा । एवं पूर्वश्लोकोक्तप्रकारेण नियमितो निवर्तितः कोपानलश्च परशुश्चेत्येतौ रघुसुतेन रामेण संप्रति देवस्य रुद्रस्य धनुषो मथनेन भङ्गेन पुनः सत्यं याथार्थ्येन यथोत्थापितौ येन प्रकारेणोत्थापितौ भगवतस्तथा तेन प्रकारेण कृतं चापलं दुर्विनीतत्वं येन स तथोक्तस्य । 'चपलः पारदे कीशे पुमान्स्त्रीषु तु चञ्चले । दुर्विनीते द्रुते नीचे' इति रत्नमाला । एकस्य राघवशिशो रामस्य शिरः प्रसह्य हठात् 'प्रसह्य तु हठार्थकम्' इत्यमरः । कृत्त्वा छित्त्वा । 'कृती च्छेदने' आगमशासनस्यानित्यत्वादिडागमाभावः । मयि वनाय । 'क्रियार्थ—' इत्यादिना चतुर्थी । वनं गन्तुं पुनः प्रयाते सति रघवो जनकाश्च स्वस्था निरुपद्रवाश्चिराय चिरं सन्तु । अतिप्रसङ्गो गुरुतिरस्कारादिदुर्विनयप्रस्तावः पुनः कथंचिन्माभून्न भवेत् । अत्रैकस्य जनका रघवश्चेत्यनेन 'त्यजेदेकं कुलस्यार्थे' इति न्यायः सूचितः ॥ १५ ॥ १६ ॥ **आः, शक्तिरित्यादि** । 'आस्तु स्यात्कोपपीडयोः' इत्यमरः । परमपुरुषार्थभूतभगवद्विषयविद्वेषिषु 'कोपः सर्वात्मना कार्यः' इत्ययमर्थोऽत्र कविना शतानन्दादिमुखेनाविष्कृत इति द्रष्टव्यम् । याज्यस्य याजयितुमर्हस्य । यजेर्ण्यन्तात् 'अचो यत्'

वयमिव यथा गृह्यो वह्निस्तथैव चिरं स्थिताः
सुचरितगुरुस्तम्भाधारे गृहे गृहमेधिनाम्।
यदि परिभवस्तत्रान्यस्मादुपैति धिगस्तु त-
त्प्रियमपि तपो धिग्ब्राह्मण्यं धिगङ्गिरसः कुलम्॥ १७॥

**विश्वामित्रः**—साधु गौतम वत्स, साधु। कृतकृत्य एष राजा सीरध्वजस्त्वया पुरोहितेन।

न तस्य राष्ट्रं व्यथते न रिष्यति न जीर्यति।
त्वं विद्वान्ब्राह्मणो यस्य राष्ट्रगोपः पुरोहितः॥ १८॥

---

इति यत्प्रत्ययः। प्रेयसोऽतिशयेन प्रियस्य च्छायामप्यनातपमपि। समीपदेशमपीति यावत्। अवस्कन्दितुमाक्रमितुं कस्य शक्तिरस्तीत्यन्वयः। 'स्कन्दिर् गतिशोषणयोः' इत्यस्मात्तुमुन्। जामातरमवस्कन्दितुं कस्य शक्तिरिति किं पुनर्वक्तव्यमित्यर्थः। 'जामाता दुहितुः पतिः' इत्यमरः। **वयमिति**। सुचरितान्येवं श्रुतिस्मृत्याचारप्रमाणकानि सत्कर्माण्येव गुरवः स्तम्भा महत्यः स्थूणा आधाराः पतनप्रतिरोधका यस्य तत्तथोक्तं तस्मिन्। 'स्तम्भौ स्थूणाजडीभावौ' इत्यमरः। अत्र 'शत्रुभङ्गः सुवृत्तता' इत्येतदभिप्रेतं गृहमेधिनां जनकदशरथादिगृहस्थाश्रमनिष्ठानां गृहे गेहे। 'गृहं ग्रहाश्च भूम्नि स्याद्वाविमौ गेहभार्ययोः' इति रत्नमाला। वयमिवाहं वसिष्ठादयश्चैव वह्निः गृह्यो वश्यः। पक्षिमृगवद्गृहासक्तो वा भवतीति शेषः। 'कर्मावबोधके गृह्यमयं स्ववशगे त्रिषु। गृह्यं शाखापुरं गृह्या गृहासक्ता मृगाः खगाः॥' इति रत्नमाला। 'पदास्वैरिबाह्यापक्ष्येषु च' इति गृह्णातेः क्यप्। किंच वयं तथा चिरं स्थितास्तथैव वह्निश्चिरं स्थितः। तत्र 'गृहमेधिनां गृहे घटोऽस्ति तमानय' इत्यत्रेव तच्छब्दः पूर्वपरामर्शी। अन्यस्मात्परिभवोऽन्यहेतुकतिरस्कारो यद्युपैति प्रसक्तश्चेत्तत्तदा प्रियमपि प्राणेभ्योऽपीष्टं तप उपवासादि नियमजातम्। 'नियमेषु तपःशब्दः' इत्यापस्तम्बः। धिगस्तु। तपःकर्मिका निन्दा स्यादित्यर्थः। धिक्शब्दार्थस्यास्तिक्रियायां कर्तृत्वम्। यद्वास्त्वित्यव्ययमसूयार्थकम्, असूया च तपःप्रभृतिष्वकिंचित्करत्वाभिसंधिना क्रियत इति द्रष्टव्यम्। 'असूयोपगमेऽस्तु च' इत्यमरः। ब्राह्मण्यं वेदाध्ययनाद्युपयुक्तं ब्राह्मणवर्णं धिक्। अङ्गिरसः कुलं धिक्। 'अङ्गिरा मुखतो जज्ञे' इति विशिष्य ब्रह्मणो मुखजातस्याङ्गिरसः कुलं धिक्। अभिजनविद्यावृत्तानि धिगित्यर्थः॥ १७॥ गौतम गौतमपुत्र। कृतानि कृत्यानि येन स तथोक्तः। स्वयं फलार्थव्यापाररहितोऽपि त्वदीयव्यापारेण फलभागित्यर्थः। **नेति**। ब्राह्मणो मुख्यब्राह्मण्यवान्। 'ब्राह्मणोऽसौ षट्कर्मा यागादिभिर्युतः' इत्यमरः। विद्वान्सदा त्वदीयाभ्युदयसाधनावमर्शनपरः। 'विदः शतुर्वा' इति क्वसुः। त्वं यस्य सीरध्वजस्य। राष्ट्रं जनपदं गोपायति रक्षतीति राष्ट्रगोपः। 'गुपू रक्षणे' इत्यस्मात्कर्मण्यण्। 'राष्ट्रं विषय उत्पाते' इति रत्नमाला। तथाविधः पुरोहितो भवसि। न

**जामदग्न्यः**—गौतम त्वयेव बहुभिः क्षत्रियपुरोहितैर्ब्रह्मतेजसा स्फुरितमासीत्। किंतु प्राकृतानि तेजांस्यप्राकृते ज्योतिषि शाम्यन्ति।

**शतानन्दः**—(सक्रोधम्) अरे अनड्वन्, पुरुषाधम, निरपराधराजन्यकुलकदन, महापातकिन्, अशिष्ट, विकृतवेष, बीभत्सकर्मन्,

---

केवलं श्रौतस्मार्तकर्मणि भविष्यसि तद्दर्शी। किंतु राज्यविषयेऽपीति भावः। तस्य तथाविधस्य सीरध्वजस्य राष्ट्रं न व्यथते कुतश्चिदपि न बिभेति। यद्वा न व्यथते प्रकृतिविपर्यासं न भजते। 'व्यथ भयसंचलनयोः' इति धातुपाठः। संचलनं नाम प्रकृतिविपर्यास इत्युक्तम्। न रिष्यति न हिनस्ति। परस्परमिति शेषः। 'रुष रिष हिंसायाम्' इति च धातुपाठः। यद्वा प्रेरणांशत्यागाद्दुःखाश्रयो न भवतीत्यर्थः। हिंसा हि दुःखोत्पादनम्। न जीर्यत्यकाले शैथिल्यं न प्राप्नोति। 'जॄष् झॄष् वयोहानौ' इति धातुपाठः॥ १८॥ क्षत्रियपुरोहितैः कर्तृभिर्ब्रह्मतेजसा ब्राह्मण्यप्रयुक्तपराभिभवनसामर्थ्यरूपप्रभावेण करणेन स्फुरितमासीत्स्फुरणमभूत्। किंचिद्व्यापारोऽभूदिति यावत्। किंत्वेवं स्फुरणे प्राकृतानि पृथग्जनेषु भवानि। 'प्राकृतश्च पृथग्जनः' इत्यमरः। 'तत्र भवः' इत्यण्। अत्राङ्के नियताप्तिप्रकरीयोगात्मको विमर्शसंधिरुक्तः। तदुक्तम्—'गर्भसंधौ प्रसिद्धस्य बीजार्थस्यावमर्शनम्। हेतुना येन केनापि विमर्शः संधिरिष्यते॥ नियताप्तिप्रकर्युक्तेरङ्गान्यस्य त्रयोदश। तत्रापवादः संफेटो विद्रवद्रवशक्तयः॥ द्युतिः प्रसङ्गश्चलनं व्यवसायो निरोधनम्। प्ररोचनं विचलनमादानं च त्रयोदश॥' इति। तथा—'अपायाभावतः कार्यनिश्चयो नियताप्तिका। अव्यापिनी प्रकरिका' इति च परशुरामप्रयुक्तापायाभावेन निर्विघ्नरामश्रेयोरूपकार्यनिश्चयस्य तदुपयुक्तशतानन्दाद्यव्यापिकथांशस्य च योगाद्बीजार्थावमर्शनरूपविमर्शसंधिः। अस्याङ्गान्युत्तरत्र दर्शयिष्यन्ते॥ अनड्वन्गर्वोद्धत। गौणवृत्त्या निर्देशः। वृषभो हि दर्पस्तिमितो भवति। पुरुषाधम पराभ्युदयासहिष्णो। परसमृद्धिसहिष्णुत्वं ह्युत्तमपुरुषत्वम्, तद्व्यतिरेकः पुरुषाधमत्वम्, निरपराधेत्यादि। होमधेन्वपहरणादिना कस्यचिदपराधित्वेऽप्यन्यस्यानपराधित्वादिति भावः। कदन। वैक्लव्यकारिन्वैकल्यकारिन्निति वार्थः। 'कदि क्रदि क्लदि वैक्लव्ये'। 'वैकल्ये' इति च पाठः। त्रयोऽप्यनिदित इति नन्दी। तेन नुमभावः। महापातकिन्। महापातकशब्दो ब्रह्महत्यादिषु योगरूढः। तस्मादिनिः। यद्वा महापातकं ब्रह्महत्यादिरूपमतिशयेनास्तीत्यतिशयविवक्षायां कर्मधारयादिनिः। अतिशयो हि न बहुव्रीहिलभ्यः। नातः 'न कर्मधारयात्' इति निषेधः। अतिशयितब्रह्महत्या च कार्तवीर्यवधरूपा। तदुक्तं भागवते जमदग्निना—'राज्ञो मूर्धाभिषिक्तस्य वधो ब्रह्मवधाद्गुरुः॥' इति। अशिष्ट वेदप्रामाण्याभ्युपगमरहित। ब्राह्मणस्यायुधग्रहणप्रतिषेधातिक्रमादिति भावः। विकृतवेष। परशुधनुर्बाणादिब्राह्मण्यविरुद्धवस्तुधारणाच्छस्त्रक्षतकिणधारणाच्चेति भावः। बीभत्स्यानि जुगुप्सनीयानि कर्माणि यस्य स तथोक्तस्तस्य संबुद्धिः। 'बधेश्चित्तविकारे' इति जुगुप्सायां बधेः सन्। ततः कर्मणि 'अचो यत्' इति यत्।

अपूर्वपाषण्ड, काण्डीर, काण्डपृष्ठ, कथमस्यामपि दिशि प्रगल्भसे। ननु च रे, त्वमसि किं ब्राह्मण एव। अहो ब्राह्मणस्याचारः।

मातुरेव शिरश्छेदो गर्भाणां चापकर्तनम्।
राज्ञां च सवनस्थानां ब्रह्महत्यासमो वधः॥ १९॥

**जामदग्न्यः**—आः, स्वस्तिवाचनिक दुष्ट सामन्तपुरोहित, अपि च रे अहल्यायाः पुत्र, तवाहं काण्डपृष्ठः।

---

अपूर्वपाषण्ड नूतनपाषण्ड। 'भवव्रतधरा ये च ये च तान्समनुव्रताः। पाषण्डिनस्ते' इत्युक्तेरिति भावः। 'तस्मात्तु पाप्मनो लिङ्गं पाषण्डमिति कथ्यते' इत्युक्तपापलिङ्गधरेत्यर्थः। 'पाषण्डाः सर्वलिङ्गिनः' इत्यमरश्च। काण्डा बाणा अस्य सन्तीति काण्डीरस्तस्य संबुद्धिः। 'सायकः प्रदरः काण्डकङ्कपत्रशिलीमुखाः' इत्यमरशेषः। 'काण्डाण्डादीरन्नीरचौ' इति मत्वर्थीय ईरन्प्रत्ययः। 'स्यात्काण्डवांस्तु काण्डीरः' इत्यमरः। काण्डपृष्ठ आयुधजीविन्। 'शस्त्राजीवे काण्डपृष्ठायुधीया युधिकाः समाः' इत्यमरः। आयुधजीवित्वं ब्राह्मणस्य निषिद्धम्। प्रगल्भसे धार्ष्ट्यं करोषि। रे इति नीचसंबोधनम्। ननु चेति विरोधोक्तिः। त्वं किं ब्राह्मण एवासि कस्मिन्देशे कीदृशब्राह्मण्यवानसि। क्षेपोक्तिरियम्। अहो इति। ब्राह्मणस्याचारः। विस्मयनीय इत्यर्थः। **मातुरिति**। एवकारः प्राधान्यपरः। स्त्रीसामान्यवधे महान्दोषः, किं पुनः प्रधानभूताया मातुर्वध इति भावः। यद्वावधारणार्थको गुरुवचनानुरोधान्मातुर्वधो न दोषायेति शङ्कावारणार्थकः। गुरुवचनानुरोधोऽपि महापातकव्यतिरिक्तविषय एव युक्तः, न तु पतनीयप्रसङ्ग इति भावः। तथा चापस्तम्बः—'आचार्याधीनः स्यादन्यत्र पतनीयेभ्यः' इति, 'अमुं ममारातिं ब्राह्मणमित्थं व्यापादयेत्याचार्येणोक्ते एवमादि न कुर्यात्' इति तद्विषया ह्युज्ज्वला। तथा च—'पितुर्दशगुणं माता गौरवेणातिरिच्यते' इति पितुरतिजयेन गौरव्याया मातुर्वधः पितृवचनमूलकोऽपि न युक्त एव। गर्भाणामपकर्तनं च गर्भिणीभिः सह च्छेदश्च। सवनस्थानां यागादिदीक्षितानां राज्ञां क्षत्रियाणां ब्रह्महत्यासमो वधश्चेति ब्राह्मणस्याचारो विस्मयनीय इति पूर्वेण संबन्धः। ब्रह्महत्यासम इत्यनेन ब्रह्महत्यातिदेशो विवक्षितः। तथा च मनुः—'हत्वा गर्भमविज्ञातमेतदेव व्रतं चरेत्। राजन्यवैश्यावीजानावात्रेयीमेव च स्त्रियम्॥' इति। ईजानौ यागदीक्षामध्यवर्तिनौ। आत्रेय्यत्रिगोत्रजा गर्भिण्यृतुमती चेति तद्व्याख्यातारः। विष्णुरपि—'यागस्थक्षत्रियस्य वैश्यस्य रजस्वलायाश्चान्तर्वत्न्याश्चात्रिगोत्रजाया अविज्ञातगर्भस्य शरणागतस्य घातानि ब्रह्महत्यासमानि' इति। कामन्दकस्तु—'करणे ब्रह्महत्यासमत्वं कैमुतिकसिद्धम्'। अत्र गुणज्येष्ठस्य मूर्धावसिक्तस्य वधो भूयसा ब्रह्मवधाद्गुरुः। राजमात्रस्य यागमध्यस्थस्य वधो ब्रह्महत्यासमः, यागदीक्षारहितस्य राजमात्रस्य वधो ब्रह्महत्यायास्तुरीयांशसमः। तथा चामरः—'तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतः' इति॥ १९॥ आः इति क्रोधे। स्वस्तिवाचनेन जीवति स्वस्तिवाचनिकः। 'वेतनादिभ्यो जीवति' इत्यनेन

**शतानन्दः**—दुष्ट दुर्मुख भृगुप्रसवपांसन,

राजानो गुरवश्चैते महिम्नैव महाक्षमाः ।

क्षमन्तां नाम न त्वेवं शतानन्दः क्षमिष्यते ॥ २० ॥

(इति कमण्डलूदकेनोपस्पृशति ।)

(नेपथ्ये ।)

कः कोऽत्र भोः, प्रसाद्यतामयं धवित्रनिर्धूत इवाभिप्रणीतः पृषदाज्याभिघारघोरस्तनूनपात्समिध्यमानदारुणब्रह्मवर्चसज्योतिराङ्गिरसः ।

---

ठक्प्रत्ययः । दुष्ट दोषयुक्तेति संबुद्ध्यन्तम् । सामन्तविशेषणं वा । सामन्तस्य पार्श्वराजस्य । सार्वभौमताशून्यस्येति यावत् । पुरोहित । रे इति नीचाह्वाने । अहल्यायाः पुत्र । इन्द्रातिचाराभिप्रायेणाहल्यापुत्रत्वोक्तिः । 'षष्ठ्या आक्रोशे' इत्यलुक् । अहं तव काण्डपृष्ठः । त्वदभिप्रायेणायुधजीवीत्यर्थः । **दुष्टेति** । दुर्मुख परुषवदन । भृगुप्रसवानां भृगुवंश्यानां पांसनावद्यावह । अवद्यपरात्पांसुशब्दान्मत्वन्ताण्णिच् । मतुब्लोपे सति नन्द्यादित्वात्कर्तरि ल्युः । **राजान इति** । राजानो दशरथजनकादयः । गुरवो वसिष्ठादयः । महिम्नैव महात्त्वेनैव महक्षमा आगःसहनरूपक्षमाभूयिष्ठाः । क्षमन्तां नाम परशुरामपारुष्यं सहन्तां नाम । महतां क्षमास्वभावत्वात्तेषां क्षमा युक्तेत्यर्थः । शतानन्दस्तु तद्वत्क्षमाप्रयोजकमहद्भावविरहितोऽहमित्यर्थः । एवं वसिष्ठादिवन्नैव क्षमिष्यते । उत्तरक्षण एवापराधानुगुणं दण्डं प्रयोजयामीत्यर्थः । अत्र शतानन्दजामदग्न्याभ्यामन्योन्यदोषप्रख्यापनादपवादो नाम विमर्शसंध्यङ्गमुक्तम् । यथोक्तम्—'दोषप्रख्यापनमपवादः' इति । अत्रैवान्योन्यं रोषसंभाषणात्संफेटो नाम संध्यङ्गमुक्तम् । यथोक्तम्—'रोषसंभाषणं संफेटः' इति ॥ २० ॥ कमण्डलूदकेनोपस्पृशत्याचमनं करोति । 'उपस्पर्शस्त्वाचमनम्' इत्यमरः । कर्मणः करणत्वविवक्षया तृतीया । 'आचान्तेन कर्तव्यम्' इति नियमादिति ॥ **प्रसाद्यतामिति** । धवित्रेण मृगचर्मरचितव्यजनेन । 'धवित्रं व्यजनं तद्यद्रचितं मृगचर्मणा' इत्यमरः । निर्धूतः । समधिकज्वलनार्थमुत्कम्पितोऽभिप्रणीतः कृतसंस्कारः । 'प्रणीतः संस्कृतोऽनलः' इत्यमरः । विशिष्टवाचकानां पदानां विशेष्यवाचकपदसमभिव्याहारे विशेषणमात्रपरत्वम् । पृषदाज्यस्य दधिमिश्राज्यस्य । 'पृषदाज्यं सदध्याज्ये' इत्यमरः । अभिघारेणाभितः सेचनेन । 'गॄ घृ सेचने' इत्यस्माद्धौवादिकाद्भावे घञ् । घोरः चटचटात्कारविसंष्ठुलज्वालतया भयंकरस्तनूनपादग्निरिव । 'जातवेदास्तनूनपात्' इत्यमरः । समिध्यमानं सम्यग्दीप्यमानम् । अन्तर्भावितण्यर्थात् 'इन्धी दीप्तौ' इत्यस्मात्कर्मणि लटः शानच् । यद्दारुणं भयंकरं ब्रह्मणो वर्चस्तेजो ब्रह्मवर्चसम् । 'ब्रह्महस्तिभ्यां वर्चसः' इत्यच् । तदेव ज्योतिर्यस्य स तथोक्तः । ब्रह्मवर्चसज्योतिःशब्दयोःसा मान्यविशेष । भावान्न पुनरुक्तिः । यद्वा ब्रह्मवर्चसस्य सद्वृत्ताध्ययनसमृद्धेर्ज्योतिस्तेजो यस्येति विग्रहः-'स्याद्ब्रह्मवर्चसं वृत्ताध्ययनर्धिः' इत्यमरः । प्रसाद्यतां निवृत्तकोपः क्रियताम् । प्रसाद-

**शतानन्दः**—(ससंरम्भं शापोदकं गृहीत्वा ।) भो भोः सभासदः, पश्यन्तु भवन्तः ।

सक्रोधप्रसभमहं पराभिघाता-
दुद्भूतद्रुतगतिराततायिनं वः ।
उत्पातक्षुभितमरुद्विघट्यमानो
वज्राग्निर्द्रुममिव भस्मसात्करोमि ॥ २१ ॥

(नेपथ्ये ।)

भगवन्, प्रसीद । गृहानुपगते प्रशाम्यतु दुरासदं तेजः ।

श्लाघ्यो गुणैर्द्विजवरश्च निजश्च बन्धु-
स्तस्मिन्गृहानुपगते सदृशं किमेतत् ।
विद्वानपि प्रचलितस्तु यदेष मार्गा-
त्क्षत्रं हि तत्र विनयाय शमं भज त्वम् ॥ २२ ॥

---

वच्छब्दाण्णिजन्तात् 'प्रातिपदिकाद्धात्वर्थे' इत्यादिना मतुब्लोपे कर्मणि लोट् ॥ **ससंरम्भमिति** । संरम्भः सक्रोधयत्नः । शापस्य परानिष्टौपयिकक्रोशस्योदकमभिव्यञ्जनकं जलम् । सभायां सीदन्तीति सभासदः । 'सत्सूद्विष—' इत्यादिना सीदतेः कर्तरि क्विप् । **सक्रोधेति** । परस्यारेः परशुरामस्य । 'परोऽरिः परमात्मा च' इति रत्नमाला । अभिघातात्परिभवरूपहिंसनाद्धेतोः सक्रोधप्रसभं सकोपवेगम् । 'प्रसभो वेगहर्षयोः' इति कोशः । उद्भूतोत्पन्ना द्रुतगतिः शीघ्रव्यापारो यस्य तथाविधोऽहं वो युष्माकमाततायिनं वधोद्यतम् । 'आततायी वधोद्यतः' इत्यमरः । अनेन 'आततायिनमायान्तं हन्यादेवाविचारयन्' इति वचनं सूच्यते । उत्पातेन प्राणिनामशुभयोगेन हेतुना क्षुभितेन संचलितेन मरुता प्रवातेन विघट्यमानो भज्यमानो वज्राग्निरशनिवह्निर्द्रुममिव भस्मसात्करोमि कृत्स्नमेवामुं भस्म संपद्यमानं करोमि । 'विभाषा साति कार्त्स्न्ये' इति सातिप्रत्ययः । अत्र वधोद्योगाद्विद्रवो नाम संध्यङ्गमुक्तम् । यथोक्तम्—'वधबन्धादिविद्रवः' इति ॥ २१ ॥ प्रसीद प्रसादं प्राप्नुहि । गृहानुपगते । परशुराम इति शेषः । 'न कंचन वसतौ प्रत्याचक्षीत' इति श्रुतेरिति भावः । दुरासदं दुर्धर्षं तपःप्रयुक्तं पराभिभवनसामर्थ्यं तेजः प्रशाम्यतु प्रशान्तं भवतु । गृहानुपगत इति पूर्वापरान्वयि । **श्लाघ्य इति** । परशुराम इत्यादिः । परशुरामो गुणैः श्रोत्रियत्वादिभिः श्लाघ्यः प्रशंसनीयः । किंचायं द्विजवरो ब्राह्मणश्रेष्ठः । किंचायं तव निजो बन्धुः । स्वीयः सपिण्ड इत्यर्थः । 'निजौ स्वीयाविनाशिनौ' इति रत्नमाला । 'सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः' इत्यमरः । गृहानुपगते तस्मिन्युष्मद्गृहागते तथाविधपरशुरामविषय एतद्भस्मसात्करणं सदृशमनुरूपं किम् । नानुरूपमित्यर्थः । एष परशुरामो विद्वानपि ज्ञाता सन्नपि । अत्र 'विदुषोऽतिक्रमे दण्डभूयस्त्वम्' इत्येतद्विवक्षितम् । मार्गाद्ब्राह्मण्यानुगुणाचाररूपात्प्रचलित इति यत्, तत्र विनयाय शिक्षणाय

**वसिष्ठः**—(शापोदकमपहरन् ।) वत्स शतानन्द, यथाह संबन्धी ते महाराजदशरथः । अन्यच्च ।

यत्कल्याणं किमपि मनसा तद्वयं वर्तयाम-
स्त्वं जाबालिप्रभृतिसहितः शान्तिमध्यग्निकुर्याः ।
जेतुं जैत्रानथ खलु जपन्सूक्तसामानुवाका-
नस्मच्छिष्यैः सह स भगवान्वामदेवो गृणातु ॥ २३ ॥

(शतानन्दः परिक्रम्य निष्क्रान्तः ।)

**जामदग्न्यः**—पश्यत बटोः क्षत्रियावष्टब्धस्य गर्जितानि । तत्किमनेन । भो भोः कोसलविदेहेश्वरप्रसादोपजीविनो ब्राह्मणाः, सप्तद्वीपकुलपर्वतगोचराश्च सर्वक्षत्रियाः, वदामः ।

तपो वा शस्त्रं वा व्यवहरति यः कश्चिदिह वः
स दर्पादुद्दामस्त्विषमसहमानः स्खलयतु ।

---

क्षत्रं हि क्षत्रवर्णो हि । योग्यमिति शेषः । तुशब्दः शङ्काद्योतकः । सा च शङ्का परशुरामोऽयमाचारव्यतिक्रमाद्दण्डनीय इत्याकारिका । तत्र क्षत्रिय एव योग्यो न ब्राह्मण इति परिहारः । यस्मादेवं तस्माद्धे शतानन्द, त्वं ब्राह्मणोत्तमस्त्वं शमं क्रोधनिवृत्तिं भज प्राप्नुहि । अत्र विरोधशमनाच्छक्तिर्नाम संध्यङ्गमुक्तम् । यथोक्तम्—'विरोधशमनं शक्तिः' इति ॥ २२ ॥ यथाह तथैवास्त्विवति शेषः । **यदिति** । यत्कल्याणमगर्हितेष्टार्थसिद्धिरूपं रामस्य श्रेयस्तन्मनसा वयमहं विश्वामित्रादयश्च वर्तयाम आशासनेन निष्पादयामः । त्वं जाबाल्यादियुक्तः सन्नग्नावध्यग्नि । विभक्त्यर्थेऽव्ययीभावः । शान्तिमनिष्टशान्तिहोमं कुर्याः कुरु । पूर्वत्रात्र च फलस्य कर्तृगामित्वविरहान्नात्मनेपदम् । स भगवान् । 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे' इति श्रुतिप्रसिद्धज्ञानादिषाड्गुण्यपूर्णो वामदेवोऽस्मच्छिष्यैः सह सहितः सन्परानभिभवितुं जैत्राञ्जयहेतुभूतान् । करणस्य कर्तृत्वविवक्षया तृच् । जेतैव जैत्रः । प्रज्ञादेराकृतिगणत्वात्स्वार्थेऽण्प्रत्ययः । सूक्तानि श्रीसूक्तपुरुषसूक्तादीनि, सामानि रथंतरादीनि, अनुवाकान् 'शुक्रप्रविध्य' इत्यादिकान् 'आशुः शिशानः' इत्यादिकांश्च जपन्नुपांशूच्चारयन्गृणातु पठतु । जपतिरत्रोपांशुप्रयत्नमात्रवचनो गृणातिनोच्चारणस्याभिधानात् । अत्र कार्यसंग्रहणरूपमादानं नाम संध्यङ्गमुक्तम् । यथोक्तम्—'कार्यसंग्रहणमादानम्' इति ॥ २३ ॥ **पश्यतेति** । बटोरित्यनेन शतानन्दस्य परशुरामतो वयसा न्यूनत्वं सूचितम् । पूर्वोक्तं गुरुत्वं तु स्थानेनेति मन्तव्यम् । क्षत्रियावष्टब्धस्य जनकादिक्षत्रियावलम्बिनः । 'अवाच्चालम्बनाविदूर्ययोः' इत्यवपूर्वकस्य स्तम्भेः षत्वम् । कोसलविदेहेश्वरयोर्दशरथजनकयोः प्रसादमनुग्रहमुपजीवन्तीत्याश्रित्य जीवन्तीत्यर्थे 'सुप्यजातौ–' इति णिनिः । सप्तद्वीपाः कुलपर्वताश्च गोचरा निवासदेशा येषां ते तथोक्ताः । इदं पूर्वोत्तरान्वयि । **तपो वेत्यादि** । वो युष्माकं मध्ये यो ब्राह्मणो वा

अरामां निःसीरध्वजदशरथीकृत्य जगती-
मतृप्तस्तत्कुल्यानपि परशुरामः शमयति ॥ २४ ॥

(नेपथ्ये ।)

भार्गव भार्गव, अति हि नामावलिप्यसे ।

**जामदग्न्यः**—असूयति नामास्मदवलेपाय जनकः ससंरम्भश्च ।

(प्रविश्य ।)

**जनकः**—

शत्रुध्वंसात्परिणतिवशाद्गृह्यतन्त्रव्रतानां
नैरन्तर्यादपि च परमब्रह्मतत्त्वोपलम्भात् ।

---

क्षत्रियो वा कश्चिदिह दशरथजनकविषये तपो वा शापप्रयोजकं तपो वा, शस्त्रं वा युद्धोपकरणमायुधं वा । ब्राह्मणस्तपः क्षत्रियः शस्त्रमुभावप्युभयं वेति यथायथं विकल्पसमुच्चयौ द्रष्टव्यौ । व्यवहरत्यस्मदभियोगोपकरणत्वेन वदति । दर्पोदुद्दामः स दर्पाधिकः स ब्राह्मणः क्षत्रियो वा खिषमस्मदीयं तेजोऽसहमानः सन्नमृष्यमाणः संस्खिषमस्मदीयं तेजः स्खलयतु भ्रंशयतु । 'प्रैषातिसर्गप्राप्तकालेषु—' इति कामचारे प्राप्तकाले लोट् । 'स्खल संचलने' इत्यस्मात् 'हेतुमति च' इति णिच्, 'दलिवलिस्खलिरणिध्वनित्रपिक्षपयश्च' इति भोजराजमतेन मित्त्वात्स्खलयत्विति ह्रस्वः । कामचारार्थकलोटा न नः किंचिदनिष्टमिति सूच्यते । परशुरामोऽरामामविद्यमानरामाम् । 'नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः' इति विद्यमानशब्दस्य लोपः । जगतीं भूमिम् । 'जगती रत्नगर्भा च' इत्यमरः । निःसीरध्वजदशरथीकृत्य दशरथजनकशून्यां कृत्वा । 'कृभ्वस्तियोगे—' इत्यादिना च्विः । 'ऊर्यादिच्विडाचश्च' इति गतिसंज्ञायाम् 'कुगति—' इत्यस्मात्समासे 'समासेऽनञ्पूर्वे' इत्यादिना ल्यप् । अतृप्तः संस्तावताप्यलंबुद्धिरहितसंस्तत्कुल्यानपि जनकदशरथयोर्वंशे गृहे च स्थितान्मनुष्यानपि शमयति नमयिष्यति । 'वर्तमानसामीप्ये—' इति भविष्यदासन्ने लट् । अत्रोद्वेजनाद्द्युतिर्नाम संध्यङ्गमुक्तम् । यथोक्तम्—'तर्जनोद्वेजने द्युतिः' इति । तर्जनं कायिकमुद्वेजनं वाचिकमिति भेदः ॥ २४ ॥ अवलिप्यसे गर्ववान्भवसि ॥ अस्मदवलेपायासूयति । अस्मद्गर्वविषयकक्रोधप्रयुक्तदोषाविष्करणं करोतीत्यर्थः । 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' इति चतुर्थी । नामेति कुत्सायाम् । दुर्बलस्यासूया कुत्सनीयेत्यर्थः । 'नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने' इत्यमरः । ससंरम्भश्च ॥ प्रविश्येति । आहेति शेषः । **शत्रुध्वंसादिति** । विजयसहजं विजयेन सहोत्पन्नं यत्क्षात्रं क्षत्रियवर्णासाधारणं तेजः पराभिभवनसामर्थ्यं कर्तृ शत्रुध्वंसात्पुरा देवताप्रसादसहकृतभुजबलेन शत्रूणां निःशेषविध्वंसनात् । किंच परिणतिवशाज्जरानुरोधात् । 'वश कान्तौ' । कान्तिरिच्छा । किंच गृह्यस्यापस्तम्बादिप्रणीतकर्मावबोधकग्रन्थस्य । 'कर्मावबोधके गृह्यम्' इति रत्नमाला । तन्त्राणां तद्बोधितप्रयोगरूपाणाम् । तन्त्रं स्वराष्ट्रचिन्तायां तन्तुवाये परिच्छदे । यागप्रयोगसिद्धान्तशास्त्रमुख्यौषधेषु च ॥' इति रत्नमाला ।

क्षात्रं तेजो विजयसहजं यद्व्यरंसीदिदं त-
त्प्रत्युद्भूय त्वरयति पुनः कर्मणे कार्मुकं नः ॥ २५ ॥

**जामदग्न्यः**—भो जनक,

त्वं ब्रह्मण्यः किल परिणतश्चासि धर्मेण युक्त-
स्त्वां वेदान्तेष्वचरममृषिः सूर्यपुत्रः शशास ।
इत्याचारादसि यदि मया प्रश्रयेणोपजुष्ट-
स्तत्किं मोहादविदितभयः कर्कशानि ब्रवीषि ॥ २६ ॥

---

व्रतानामुपवासादिनियमानाम् । 'नियमो व्रतमस्त्री' इत्यमरः । नैरन्तर्याद्विच्छेदविरहात् । किंच परमस्य मुख्यस्य ब्रह्मणो ब्रह्मशब्दवाच्यस्य भगवतस्तत्त्वस्यानारोपितरूपस्योपलम्भाद्योगदृष्ट्या साक्षात्कारान्मुक्तात्मनाम् । प्रधानस्य वेदादेव गौण्या वृत्त्या ब्रह्मशब्दविषयत्वात्तद्व्यावृत्त्यर्थं परमेति । श्रूयते च—'देव ब्रह्म परमं कवीनाम्' इति । स्मर्यते च–'परमब्रह्मभूतस्य वासुदेवस्य' इति । 'वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि । तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने ॥' इति च । 'बृहति बृंहयति तस्मादुच्यते परमं ब्रह्म' । बृहन्तोऽस्मिन्गुणाः 'बृहत्त्वाद्बृंहणत्वाच्च ब्रह्मेति परिपठ्यते,' 'ब्रह्म परिवृढं सर्वत्र' इत्यादिना च ब्रह्मशब्दो निरुक्तः । तत्त्वोपलम्भादित्यनेन 'मनो ब्रह्मेत्युपासीत' इत्यादिनोक्तानामर्वाचीनफलकानां ब्रह्मोपलम्भानां व्युदासः । अनेन मोक्षहेतुब्रह्मसाक्षात्कारादिति फलितम् । एवं च हेतुचतुष्टयेन व्यरंसीद्युद्धादिकर्मणो विरतमभूत्तदिदं क्षात्रं तेजः कर्तृ । पुनः प्रत्युद्भूयोद्भूततां प्राप्य । प्रकाशावस्थां प्राप्येति यावत् । कार्मुकं कोदण्डं कर्मणे युद्धरूपकर्मणे त्वरयति संभ्रमयति । 'ञित्वरा संभ्रमे' घटादित्वान्मित्त्वं मित्वाद्ध्रस्वः । कर्मणे त्वरयतीत्यनेन 'कर्मण उकञ्' इति सूत्रोक्ता 'कर्मणे प्रभवति कार्मुकम्' इति व्युत्पत्तिः स्मारिता ॥ २५ ॥ **त्वमिति** । भो जनक, त्वं ब्रह्मण्यः किल । वेदवैदिकादिविषये साधुरिति प्रसिद्धिः । 'ब्रह्म तत्त्वं तपो वेदा ब्रह्मा विप्रः प्रजापतिः' इति कोशः । ब्रह्मशब्दात् 'तत्र साधुः' इति यत् । किंच परिणतोऽसि । किंच धर्मेण युक्तोऽसि । 'धर्मेण पापमपनुदति' इत्युक्तमोक्षसाधनधर्मेण नित्ययुक्तोऽसि । किंच त्वां सूर्यपुत्रो ऋषिर्याज्ञवल्क्यः । 'पुत्रका इति होवाच ज्ञानेन परिगृह्य तान्,' 'गरीयान्ब्रह्मदः पिता स हि विद्यातस्तं जनयति' इत्यादिना शिष्यस्य पुत्रत्वप्रतीतेः सूर्यपुत्र इत्युक्तम् । वेदान्तेषूपनिषत्स्वचरमं श्रेष्ठं बृहदारण्यकं शशास बोधितवान् । 'दुह्याच्–' इत्यादिना शासेर्द्विकर्मकत्वम् । बृहदारण्यकसमाख्ययैव तस्य वेदान्तेषु श्रैष्ठ्यमवगतमित्यभिप्रायेणाचरमपदेन तस्य निर्देशः । इतिशब्दो हेतौ । ब्रह्मण्यत्वादिहेतुचतुष्टयेन । 'आचारात्तेषां त्वयासनेन प्रश्वसितम्' इत्यादिश्रुत्युक्ताचारनिमित्तं मया त्वं प्रश्रयेण विनयेनोपजुष्टोऽसि यदि सेवितोऽसि यदि तत्ततो हेतोर्मोहात्स्वपरबलाबलाज्ञानादवि-

**जनकः**—अण्डभेदनं क्रियते प्रश्रयश्चेति। शृणुत भोः सभासदः,

भृगोर्वंशे जातस्तपसि च किलायं स्थित इति
द्विषत्यप्यस्माभिश्चिरमिह तितिक्षैव हि कृता।
यदा भूयोभूयस्तृणवदवधूनोत्यनिभृत-
स्तदा विप्रेऽप्यस्मिन्नमतु धनुरन्यास्ति न गतिः॥ २७॥

**जामदग्न्यः**—(सरोषहासाक्षेपम्।) किमात्थ। भो भो धनुर्धनुरिति। अहो आश्चर्यम्।

क्षत्रालोकक्षुभितहुतभुक्प्रस्फुलिङ्गाट्टहासं
हास्यः पश्यन्नपि रिपुशिरःशाणशातं कुठारम्।
दत्तोत्सेकः प्रलपति मया याज्ञवल्क्यानुरोधा-
न्मिथ्याध्मातः किमपि जरसा जर्जरः क्षत्रबन्धुः॥ २८॥

---

दितभयः सन्नज्ञातभाव्यनर्थः सन्कर्कशानि कठोराणि ब्रवीषि वदसि। 'स्यात्कर्कशः साहसिकः कठोरमसृणावपि' इत्यमरः॥ २६॥ अण्डभेदनं क्रियत इति। औद्दालकेनेति शेषः। प्रश्रयश्चेति। कीर्त्यत इति शेषः। अण्डभेदनप्रश्रयकथनयोर्मिथो व्याहृतिरिति भावः। शृणुतेति। यूयमिति शेषः। **भृगोरिति**। अयं परशुरामो भृगोर्वंशे जातः। किंच तपसि स्थित इति हेतोरस्माभिर्मया द्विषत्यपि द्वेषवत्यपीह परशुरामे तितिक्षैवापराधानुगुणदण्डाभावसंकल्प एव चिरमियन्तं कालं कृता। हिशब्दः प्रसिद्धौ। **यदेति**। अयमित्यनुषज्यते। अयं परशुरामोऽनिभृतः सन्नविनीतः सन्। 'निभृतविनीतप्रश्रिताः समाः' इत्यमरः। निभृतो न भवतीत्यनिभृत इति विग्रहः। यदा येन हेतुना भूयोभूयः पुनःपुनस्तृणवत्तृणेन तुल्यमवधूनोति कम्पयति। अस्मानिति शेषः। तदा तस्माद्धेतोर्विप्रेऽप्यस्मिन्परशुरामे धनुः कर्तृ नमतु नतं भवतु। कर्मणः कर्तृत्वविवक्षा। तदभावे हेतुः पूर्वमेवोक्तः। अन्या गतिरुपायान्तरं नास्ति। दण्डैकसाध्यत्वादस्येति भावः॥ २७॥ रोषः क्रोधः, हासः स्मितम्, आक्षेपोऽवमाननम्। किमात्थ किं ब्रवीषि। धनुर्धनुरिति द्वित्वं कार्मुकशब्दार्थाभिप्रायेण। अहो आश्चर्यमिति शब्दद्वयं विस्मयातिशयद्योतकम्। अहो इत्येतत्संबोधने वा। अहोशब्दस्य 'ओत्' इति प्रगृह्यसंज्ञायाम् 'प्लुतप्रगृह्याः—' इति प्रकृतिभावः। **क्षत्रेति**। याज्ञवल्क्यस्यानुरोधात्प्रेम्णा हेतुना मया मिथ्याध्मातोऽसद्गुणोद्गारेणापूरितोऽतएव दत्तोत्सेकः संजातस्मयः जरसा जरया जर्जरः शिथिलः क्षत्रबन्धुः क्षत्रियापसदः। 'ब्रह्मबन्धुरधिक्षेपे' इत्यमरसिंहवचनं क्षत्रबन्धुशब्दस्याप्युपलक्षणम्। ब्रह्मक्षत्रशब्दसमभिव्याहृतबन्धुशब्दो ब्राह्मणाधमं क्षत्रियाधमं चाभिधत्ते। जनक इति शेषः। क्षत्रस्य क्षत्रियवर्णस्यालोकेन दर्शनेन क्षुभितस्य प्रकृतिं गतस्य हुतभुजो वह्नेः प्रस्फुलिङ्गा एव प्रकृष्टकिरणा एवाट्टहासो महाहासो यस्य तथोक्तम्। 'अट्टहासो महान्हासो मुखरागादिकृत्' इत्यभिधानविदः। रिपुशिरोरूपेषु शाणेषु निकषोपलेषु। 'शाणस्तु निकषः कषः' इत्यमरः। शातं निशितम्। 'अथ निशितक्ष्णुतशा-

**जनकः**—(सावेगम् ।) किमत्र बहुना ।

ज्याजिह्वया वलयितोत्कटकोटिदंष्ट्र-
मुद्गारिघोरघनघर्घरघोषमेतत् ।
ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्र-
जृम्भाविडम्बिविकटोदरमस्तु चापम् ॥ २९ ॥

(इति धनुरारोपयति ।)

(नेपथ्ये ।)

विरम नरपते कथं द्विजेऽस्मि-
न्नविरतयज्ञवितीर्णगोसहस्रः ।
तव पलितनिरन्तरः पृषत्कं
स्पृशति पुराणधनुर्धरस्य पाणिः ॥ ३० ॥

**जनकः**—सखे महाराज दशरथ,

---

तानि तेजिते' इत्यमरः । कुठारं पश्यन्नपि हास्यः सन्किमपि प्रलपति । अनर्थकं वचो वदतीत्यर्थः । अत्र क्षत्रबन्धुरित्यादिनावमाननाच्चलनं नाम संध्यङ्गमुक्तं भवति । यथोक्तम्—'अवमाननं चलनम्' इति ॥ २८ ॥ सावेगं ससंभ्रमम् । बहुना किम् । वाक्येनेति शेषः । क्रियाकेवलमुत्तरमिति भावः । **ज्याजिह्वयेति** । ज्या मौर्वी सैव जिह्वा तया वलयिते संजातवलये उत्कटे उदग्रे कोटी एवाग्रे एव दंष्ट्रे यस्य तत्तथोक्तम् । यद्वा जिह्वेव ज्या ज्याजिह्वेत्युपमितसमासः । दंष्ट्रे इव कोटी कोटिदंष्ट्रे उपमितसमासः । वलयिते उत्कटे कोटिदंष्ट्रे यस्येत्युपमितसमासबहुव्रीह्याश्रयणाद्दंष्ट्रा-शब्दस्य न पूर्वनिपातः । पूर्वयोजनायां रूपकमत्र तूपमा । उद्गारोऽस्यास्तीत्युद्गारी । अविच्छिन्नोद्गत इत्यर्थः । 'उद्भूरि' इति च पाठः । भूयानित्यर्थः । घोरो भयंकरो घनस्तारो घर्घरघोषो यस्य तत्तथोक्तमेतच्चापं ग्रासे जगद्भक्षणे प्रसक्तस्य व्यापृतस्य हसतोऽन्तकस्य यमस्य यन्त्रसदृशवक्त्रस्य जृम्भां विडम्बयत्यनुकरोतीति जृम्भाविडम्बि विकटं दन्तुरमुदरं मध्यं यस्य तत्तथोक्तं तथाविधमस्तु भवतु ॥ २९ ॥ धनुरारो-पयति । ज्यामिति शेषः । अत्र तर्जनरूपा द्युतिर्नाम संध्यङ्गमुक्तम् । यथोक्तम्—'तर्जनो द्युतिः' इति ॥ **विरमेति** । नरपते जनक, विरम निवृत्तो भव । बाणप्रयोगादिति शेषः । अविरतं संततं यज्ञेषु ज्योतिष्टोमादियागेषु वितीर्णानि गवां धेनूनां सहस्राणि येन स तथोक्तः । 'दक्षिणाचारेण कर्तव्यम्' इति दक्षिणपाणिनिय-मादिति भावः । पलितेन जरातिशयप्रयुक्तकेशादिशौक्ल्येन निरन्तरो निविडः पुरा-णश्चिरंतनो धनुर्धर इति विग्रहे 'पूर्वकाल–' इत्यादिना समानाधिकरणसमासः । तव पाणिर्द्विजेऽस्मिन्परशुरामे । पृषत्कं बाणम् । 'पृषत्कबाणविशिखाः' इत्यमरः । कथं स्पृशति । प्रयोक्तुमिति शेषः । अत्रापि विरोधशमनाच्छक्तिर्नाम संध्यङ्गमुक्तम् ॥ ३० ॥ **सखे इति** । 'पूर्वसंबन्धिनं ज्ञात्वा ततः पूर्वं ब्रवीमि ते' इति रामायणे

अस्मानधिक्षिपतु नाम न किंचिदेत-
त्कस्य द्विजे परुषवादिनि चित्तभेदः।
वत्सस्य मङ्गलविरुद्धमयं तु पापः
कर्णे रटन्कटु कथं न बटुर्विषह्यः॥ ३१॥

**जामदग्न्यः**—आः दुरात्मन् क्षत्रियापसद, मामेवं बटुरित्यधिक्षिपसि।

उत्तिष्ठोत्तिष्ठ यावद्विशकलितयकृत्क्लोमवृक्कास्रगात्रः
स्नायुग्रन्थ्यस्थिशल्कव्यतिकरितजरत्कंधरादत्तखण्डः।

---

वसिष्ठोक्त्या जनकस्य दशरथः पूर्वमेव मित्रमिति सखे इत्युक्तम्। 'सर्वा पूर्वमियं येषामासीत्कृत्स्ना वसुंधरा' इति तत्रोक्त्या जनकस्य नरपतित्वमात्रम्, दशरथस्य तु महाराजत्वमिति महाराजेत्युक्तम्। **अस्मानिति**। अयमित्यादिकमयं परशुरामोऽस्मानधिक्षिपत्वस्मद्विषये दुरुक्तानि वदतु। कामचारे लोट्। नामेत्यभ्युपगमे। 'नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने' इत्यमरः। एतत्परशुरामकृताधिक्षेपणं न किंचित्किंचिदपि न भवति। लेशोऽपि दुःखकरं न भवति। स्तुतिनिन्दयोरविशेषादिति भावः। द्विजे परुषवादिनि सति कस्य। ब्रह्मनिष्ठस्यापीति भावः। चित्तभेदः क्रोधरूपमनोवृत्तिविशेषः। ब्रह्मनिष्ठस्य तु मम ब्राह्मणकृताधिक्षेपे कोपो नास्त्येवेति भावः। किंतु पापोदुष्कर्मकारी बटुर्बालोऽयं परशुरामो वत्सस्य रामस्य मङ्गलस्य कल्याणस्य विरुद्धं विपरीतं कटु परुषवाक्यं कर्णे रटञ्श्रोत्रसमीपे ध्वनन्सन्कथं नु विषह्यः कथं मर्षणीयः। 'परिनिविभ्यः–' इति सहतेः षत्वम्। 'रट परिभाषणे' इत्यस्माल्लटः शतरि रटन्निति रूपम्। परिभाषणं सनिन्दोपालम्भः। इह तु कटुपदेन कर्मण उक्तत्वाद्रटतेः शब्दमात्रपरत्वम्। अनेन तितिक्षाया आत्माधिक्षेपविषयत्वम्, अमर्षणस्य तु भगवदधिक्षेपविषयत्वमिति विभागो दर्शितः॥ ३१॥ आ इति क्रोधे। दुरात्मन्दुर्बुद्धे क्षत्रियापसद क्षत्रियाधम, 'निहीनोऽपसदो जाल्मः' इत्यमरः। अत्र प्रकरणे जनकादीनां बहूनां क्रोधसंरब्धानामन्योन्याक्षेपकथनान्निरोधनं नाम संध्यङ्गमुक्तम्। यथोक्तम्—'क्रोधसंरब्धानामन्योन्याक्षेपो निरोधनम्' इति। **उत्तिष्ठेति**। उत्तिष्ठोत्तिष्ठ। युद्धार्थमिति शेषः। क्रोधसंभ्रमेण क्रियाया द्विरुक्तिः। तदुक्तं वैयाकरणैः—'संभ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगः प्रायेण न्यायसिद्धः' इति। परशुः कुठारः। विशकलितानि विशेषेण खण्डितानि। यकृत्कालखण्डम्। 'कालखण्डयकृती तु समे इमे' इत्यमरः। क्लोमं तिलकम्। 'तिलकं क्लोम मस्तिष्कम्' इत्यमरः। वृक्काग्रमांसम्। 'वृक्काग्रमांसम्' इत्यमरः। अस्रं रक्तम्। 'अश्रुशोणितयोरस्रम्' इति रत्नमाला। यकृत्क्लोमवृक्कास्राणि यस्य तत्तथोक्तं विशकलितयकृत्क्लोमवृक्कास्रं गात्रं येन स तथोक्त इति परशुरामविशेषणम्। पृथक्पदं बहुव्रीहिगर्भं बहुव्रीहिरूपम्। किंच स्नायूनां स्नसानाम्। 'अथवा स्नसा। स्नायुः स्त्रियाम्' इत्यमरः। ग्रन्थिभिः। 'ग्रन्थिः पर्वगदान्तरे' इति रत्नमाला। अस्थीनां शल्कैश्च शकलैश्च। 'शल्के शकल-

मूर्धच्छेदादुदञ्चद्गलधमनिशिरासक्तडिण्डीरपिण्ड-
प्रायासृग्भारघोरं पशुमिव परशुः पर्वशस्त्वां शृणातु ॥ ३२ ॥

(प्रविश्यान्तरे ।)

**दशरथः**—भो भार्गव,

एष नो नरपतिर्यथा स्थितः
स्वं शरीरमपि ते स्थितं तथा ।
तत्र वाक्परिभवैः कृतैर्वयं
सर्वथैव ननु दुःखमासहे ॥ ३३ ॥

**जामदग्न्यः**—ततः किम् ।

---

वल्कले' इत्यमरः । व्यतिकरिता युक्ता जरती जीर्णा । 'जीर्यतेरतृन्' इति 'जॄष् वयोहानौ' इत्यस्मादतृन्प्रत्यये तस्योगित्त्वात् 'उगितश्च' इति ङीप् । या कंधरा ग्रीवा तस्यां ग्रीवायाम् । 'शिरोधिः कंधरेत्यपि' इत्यमरः । दत्तः खण्डः खण्डनं येन स तथोक्तस्तथाविधश्च सन् । मूर्धच्छेदाच्छिरश्छेदादुदञ्चतोद्गच्छता । इदं भारविशेषणम् । गलस्य कण्ठस्य । 'कण्ठो गलः' इत्यमरः । धमनीषु महानाडीषु शिरासु क्षुद्रनाडीषु । यद्यपि 'नाडी तु धमनिः शिरा' इति पर्यायवाचकौ धमनिशिराशब्दौ तथापि सहप्रयोगादवान्तरभेदौ द्रष्टव्यौ । सक्तेन संबद्धेन डिण्डीरपिण्डप्रायेण फेनसंघातबहुलेन । 'डिण्डीरोऽब्धिकफः फेनः' इत्यमरः । रक्तस्यैवावस्थाविशेषोपलक्षणमिदम् । असृग्भारेण रक्तसमूहेन घोरं भयंकरं त्वां पशुमिव व्याघ्रादिकमिव पर्वशः पर्वणि पर्वणि । 'पर्व ग्रन्थौ पञ्चदश्यामुत्सवे विषुवादिके' इति रत्नमाला । ग्रन्थौ ग्रन्थावित्यर्थः । 'संख्यैकवचनाच्च वीप्सायाम्' इति शस्प्रत्ययः । यद्यपि परिमाणशब्दादेवैकवचनान्ताच्छस् माषशो ददातीत्युक्तम्, तथापि जातिशब्दादप्यर्थप्रकरणानेकार्थवृत्तेर्वीप्सायां शस्भवति । खण्डशो ददाति, वनशः प्रविशतीति वामनमते जातिशब्दादपि शसः स्वीकारात्पर्वश इति शस्भवत्येव । 'कारकात्' इतीत्यनुवृत्तेऽधिकरणकारकाच्छस् । पर्वशब्दोऽयमङ्गुलिरेखावाची सन्परिमाणशब्दो भवतीति पक्षान्तरेऽपि शस्भवत्येव । त्वां पर्वपरिमितं शृणात्वित्यर्थः । अथ । कर्मकारकाच्छस् । यावच्छृणातु । हिनस्त्वेवेत्यर्थः । 'शॄ हिंसायाम्' क्र्यादिः । 'प्वादीनाम्–' इति ह्रस्वः । 'शृणाति' इति पाठे हिंसिष्यतीत्यर्थः । 'यावत्पुरानिपातयोः–' इति भविष्यति लट् । पूर्वपाठे तु यावच्छब्दोऽवधारणार्थकः । 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः ॥ ३२ ॥ अन्तरे जनकपरशुरामयोर्मध्ये । **एष इति** । एषोऽस्माकं मित्रं नरपतिर्जनको यथा स्थितस्तथा ते स्वं शरीरमपि स्थितम् । उभयोरप्यन्योन्यवाक्परिभवेन शरीरावयवेषु न कश्चिदपि छेद इति भावः । तत्र जनकविषये कृतैर्वाक्परिभवैर्हेतुभिर्वयं सर्वथैव सर्वप्रकारेणापि दुःखमासहे दुःखं यथा तथा वर्तामहे । नन्वित्यवधारणे । यद्यपि जनको ब्रह्मनिष्ठत्वात्परैरधिक्षेपेऽपि न खिद्यते तथापि तद्विषये परैरधिक्षेपोऽस्माकं दुःखहेतु-

**दशरथः**—ततश्च न क्षम्यते ।

**जामदग्न्यः**—त्वमप्यपरः प्रभविष्णुरिव मामवस्कन्दयसि । चेतयस्व नित्यनिरवग्रहः प्रकृत्यैव रामोऽसि जामदग्न्यः । क्षत्रियश्च भवान् ।

**दशरथः**—अतः खलु नोपेक्ष्यसे ।

दुर्दान्तानां दमनविधयः क्षत्रियेष्वायतन्ते
दुर्दान्तस्त्वं वयमपि च ते क्षत्रियाः शासितारः ।
सद्यः शान्तो भव किमपरं दम्यसे चाधुनैव
क्व ब्रह्माणः प्रशमनपराः क्षत्रधार्यं क्व शस्त्रम् ॥ ३४ ॥

**जामदग्न्यः**—(विहस्य ।) चिरस्य खलु कालस्य जामदग्न्यः सनाथो वर्तते यस्य यूयं क्षत्रिया विनेतारः ।

**दशरथः**—अरे, किमत्र काचिद्भ्रान्तिः ।

---

भवतीति भावः ॥ ३३ ॥ ततः किं दुःखासहने किम् ॥ ततश्च न क्षम्यते । अधिक्षेपो दुःखकरत्वान्न मृष्यतेऽस्माभिरित्यर्थः ॥ **त्वमपीति** । त्वमपीत्यपिशब्देन जनकः समुच्चीयते । अपरः प्रभविष्णुरिवान्यः प्रभुरिव । जनको हि प्रभुरिव मामवस्कन्दयति । त्वमपि ततोऽन्यः प्रभुरिवावस्कन्दयसि । संतापयसीत्यर्थः । 'स्कन्दिर् गतिशोषणयोः' । क्षेपोक्तिरियम् । नियाम्यस्त्वम् । नियामकोऽसीत्यर्थः । चेतयस्व जानीहि । किमित्यत्राह—**नित्येति** । प्रकृत्यैव स्वभावत एव नित्यनिरवग्रहो नित्यनिष्प्रतिबन्धो जामदग्न्यो रामोऽस्मि । क्षत्रियान्तकोऽस्मीत्यर्थः । क्षत्रियश्च भवान् । अतो वध्यघातकभावोऽनुक्तसिद्ध इत्यर्थः ॥ अतस्तव ब्राह्मणत्वान्मम क्षत्रियत्वाच्च विमार्गगस्त्वं मया नोपेक्ष्यसे, किंतु दम्यस इत्यर्थः । **दुर्दान्तानामिति** । दुर्दान्तानां दुःखेन दमयितव्यानाम् । अत्युद्धतानामित्यर्थः । दमनविधयः शिक्षाविधानानि क्षत्रियेष्वायतन्ते क्षत्रियायत्ता भवन्ति । आङ्पूर्वो यततिरायत्ततायां वर्तते । 'अधीनो निघ्न आयत्तः' इत्यमरः । त्वं दुर्दान्तः । क्षत्रिया वयमपि ते तव शासितारो दमयितारः । भवाम इति शेषः । सद्योऽस्मिन्नेव क्षणे । 'सद्यः सपदि तत्क्षणे' इत्यमरः । शान्तो निवृत्तकोपो भव । अपरं किमन्यत्किम् । त्वं शान्तिं न गच्छसि चेद्वक्ष्यमाणादन्यन्न किमपि, किंतु वक्ष्यमाणमेव तव भवतीत्यर्थः । किं तदित्यत्राह—दम्यस इति । दम्यसे शिक्ष्यसे । शिक्षाहेतुरतिचार इत्यत्राह—क्व ब्रह्माण इति । प्रशमनं प्रकृष्टा शान्तिः परमुत्कृष्टं येषां ते तथोक्ता ब्रह्माणो ब्राह्मणाः । 'ब्रह्मा विप्रः प्रजापतिः' इत्यमरः । क्व । कस्मिन्प्रकारे स्थिता इत्यर्थः । क्षत्रधार्यं शस्त्रं क्व कस्मिन्प्रकारे स्थितम् । ब्राह्मणत्वशस्त्रग्राहित्वयोर्व्याघात इत्यर्थः । अतः शस्त्रग्रहणाद्दुर्दान्तस्त्वं क्षत्रियैरस्माभिर्दम्यस इत्यर्थः ॥३४॥ सनाथो नाथवान् । विनेतारः शिक्षकाः । क्षत्रिया राजानः पालकाः । क्षेपोक्तिरियम् । नाहं नाथवान्नापि यूयं विनेतार इत्यर्थः ॥ अत्र तवास्माकं च शिक्ष्यशिक्षकभावविषये भ्रान्तिरन्यथाज्ञानं

अज्ञो वा यदि वा विपर्ययगतज्ञानोऽथ संदेहधृ-
दृष्टादृष्टविरोधि कर्म कुरुते यस्तस्य गोप्ता गुरुः ।
निःसंदेहविपर्यये सति पुनर्ज्ञाने विरुद्धक्रियं
राजा चेत्पुरुषं न शास्ति तदयं प्राप्तः प्रजाविप्लवः ॥ ३५ ॥

**विश्वामित्रः**—युक्तमाह महाराजः ।

अनुत्पन्नं ज्ञानं यदि यदि च संदेहविधुरं
विपर्यस्तं वा स्यात्परिचर वसिष्ठस्य चरणौ ।

---

व्यत्यासेन शिक्ष्यशिक्षकत्वज्ञानम् । **अज्ञ इत्यादि** । अज्ञो वा दृष्टादृष्टफलतदुपायविषय-प्रमितिरूपज्ञानानुदयवान्वा । विपर्ययमसद्धर्मविषयकत्वं सद्धर्मिविषयकत्वं च गतं प्राप्तं ज्ञानं यस्य स तथोक्तस्तथाविधो यदि वा । यदि चेति निपातसमुदायो वाशब्दसमा-नार्थकः । भ्रमस्य हि पीतः शङ्खः स्थूलोऽहमिति धर्मभ्रमत्वधर्मिभ्रमत्वाभ्यां द्वैविध्यं प्रसिद्धम् । तदुभयविधभ्रान्तिज्ञानवान्वा । भ्रान्तिज्ञानं च दृष्टादृष्टफलतदुपायविषयकं विवक्षितम् । अथेति कल्पान्तरप्रस्तावे । 'मङ्गलानन्तरारम्भ' इत्याद्यमरः । संदेह-मेकस्मिन्धर्मिणि विरुद्धनानाधर्मप्रकारकं ज्ञानं धरतीति संदेहधृत् । 'अन्येभ्योऽपि दृश्यते' इति क्विप् । 'ह्रस्वस्य–' इति तुगागमः । संदेहज्ञानमपि दृष्टादृष्टफलादिविष-यकं विवक्षितम् । यः पुरुषः । 'शास्त्रं तु मनुष्याधिकारत्वात्' इत्युक्तरीत्या तिर्य-ग्व्यावृत्तो देहीत्यर्थः । दृष्टमैहिकपशुपुत्रपुष्ट्यन्नायुरिन्द्रियादिफलम्, अदृष्टमामुष्मिक-स्वर्गमोक्षरूपं फलम्, तयोर्विरोधि नाशकं विपरीतफलप्रदं च कर्म कुरुते स्वानुभा-व्यफलहेतुतयानुतिष्ठति ।'स्वरितञितः–' इत्यादिना कर्तृगे फले तङ् । तस्य पूर्वोक्ता-नुदयसंशयविपर्यस्तपुरुषस्य गुरुरज्ञाननिवर्तक आचार्यः । 'गुशब्दस्त्वन्धकारे स्याद्रु-शब्दस्तन्निरोधकः । अन्धकारनिरोधित्वाद्गुरुरित्यभिधीयते ॥' इत्युक्तेः । गोप्तोप-देशादिनानुदयादिनिरसनेनैहिकामुष्मिकपुरुषार्थतत्साधनप्रयोजकस्तद्विपरीतनिवर्तकश्च भवतीत्यर्थः । 'गुपू रक्षणे' कर्तरि तृच् । ऊदित्त्वाद्वेट् । रक्षणमिष्टप्रापणमनिष्टनिवर्तनं च । ज्ञाने निःसंदेहविपर्यये सति संदेहत्वविपर्ययत्वाभ्यां निर्गते सति । भावप्रधानो निर्देशः । दृष्टादृष्टादिषु प्रमित्यात्मके सत्यपीत्यर्थः । विरुद्धा दृष्टादृष्टविरुद्धा क्रिया व्यापारो यस्य स तथोक्तस्तं पुरुषं पुनः पुरुषं तु । 'पुनरप्रथमे भेदे' इत्यमरः । राजा न शास्ति चेत्तस्माद्राजशासनविरहादयं प्रजाविप्लवः प्रजोपद्रवः प्राप्तः, अतस्त्वं शिक्ष्य एवेति नात्र शिक्ष्यशिक्षकभावव्यत्ययभ्रान्तिः कार्येति पूर्वेण संबन्धः । 'इन्द्रि-यदौर्बल्याद्विप्रतिपन्नानां शास्ता निर्वेदमुपदिशेत् । तस्य चेच्छास्त्रमतिप्रवर्तेरन्राजानं गमयेत् । बलविशेषेण वधदास्यवर्जं नियमैरुपशोषयेत्' इत्यापस्तम्बवचनमनुसंधेयम् । अत्र गुरुकीर्तनात्प्रसङ्गो नाम संध्यङ्गमुक्तम् । यथोक्तम्—'गुरुकीर्तनं प्रसक्तः' इति ॥ ३५ ॥ महाराजो दशरथः । **अनुत्पन्नमिति** । अत्र भार्गवेत्यादिः । हे भार्गव, तव ज्ञानं पूर्वोक्तदृष्टादृष्टविषयादिविषयकप्रमित्यात्मकं ज्ञानमनुत्पन्नं यद्यनुदितं चेद्वसि-ष्ठस्य चरणौ परिचर शुश्रूषस्व । 'शुश्रूषया वा परया', 'तद्विद्धि प्रणिपातेन परिप्रश्नेन

ध्रुवं ज्ञाने दोषः कथमपरथा दुर्व्यवहृति-
विंशुद्धौ चेत्पापं चरसि न सहन्ते नृपतयः ॥ ३६ ॥

**जामदग्न्यः**—कौशिक,

धर्मे ब्रह्मणि कार्मुके च भगवानीशो हि मे शासिता
सर्वक्षत्रनिबर्हणस्य विनयं कुर्युः कथं क्षत्रियाः ।
संबन्धस्तु वसिष्ठमिश्रविषये मान्यो जरायां न तु
स्पर्धायामधिकः समश्च तपसा ज्ञानेन चान्योऽस्ति कः ॥ ३७ ॥

---

सेवया' इत्युक्तदिशा गुरुशुश्रूषया तव सम्यग्ज्ञानमुदेष्यतीति भावः । तव ज्ञानं संदेहेन समानविषयकसंशयेन विधुरमनुष्ठानशून्यं यदि वसिष्ठस्य चरणौ परिचर । तत्प्रसादादर्थसंदेहो निवर्तिष्यत इत्यर्थः । संदेहत्वेनानुष्ठापनशक्तिशून्यं यदिति, भावप्रधानो निर्देश इति वा व्याख्येयम् । तव ज्ञानं विपर्यस्तं वा स्यात्पूर्वोक्तद्विविधभ्रान्त्यात्मकं यदि स्यात्ततोऽपि वसिष्ठचरणौ परिचर । तव तत्प्रसादाद्भ्रान्तिज्ञानं निवर्तिष्यत इत्यर्थः । ननु कथं संप्रतिपन्नज्ञाने परशुरामे ज्ञानानुदयाद्युपन्यास इत्यत्राह—ध्रुवमिति । ज्ञाने दोषो ध्रुवम् । अनुदयसंशयविपर्ययत्वरूपो दोषोऽस्य ज्ञानेऽनुमीयत इत्यर्थः । अत्र दुराचारो हेतुरभिप्रेतः । तथा चायं ज्ञानदोषवान्दुराचारात्संप्रतिपन्नवदित्यनुमानशरीरम् । अत्राप्रयोजकत्वशङ्कां निरस्यति—कथमिति । अपरथा ज्ञानदोषरूपसाध्याभावे दुर्व्यवहृतिर्दुराचारः कथं स्यादिति शेषः । व्यवपूर्वको हरतिः कायिकव्यापारे वाचिकव्यापारे च वर्तते । अत्र च समानविषयत्वादिसंबन्धेन ज्ञानव्यापारयोः सामान्यतः कार्यकारणभावः । तेनैव संबन्धेन सम्यग्ज्ञानसम्यग्व्यापारयोर्दुष्टज्ञानव्यापारयोश्च विशेषतः कार्यकारणभावश्च दृष्ट इति दुष्टज्ञानदुर्व्यापारयोः कार्यकारणभावभङ्गप्रसङ्ग एवाप्रयोजकत्वशङ्कानिवारक इति भावः । विशुद्धाविति । ज्ञान इत्यनुषज्यते । ज्ञाने विशुद्धौ पूर्वोक्तसंशयत्वादिदोषाभावेऽपि पापं चरसि चेच्छास्त्रप्रतिषिद्धं कर्मानुतिष्ठसि चेन्नृपतयो न सहन्ते । न मृष्यन्तीत्यर्थः । विदुषोऽतिक्रमे दण्डभूयस्त्वाद्राजानस्त्वादृशं दण्डयेयुरन्यथा तत्पापं तेषां भवेत् । यथोक्तं मनुना—'राजा त्वशासनात्तस्यं तदेवाप्नोति किल्बिषम्' इति । ततो राजानो न मृष्यन्तीति भावः ॥ ३६ ॥

**धर्म इति ।** भगवानीशो रुद्रो धर्मे वेदैकसमधिगम्यश्रेयःसाधने ब्रह्मणि धर्माराध्ये परमात्मनि कार्मुके धर्मविरोधनिराससमये धनुषि च विषये । अधिकरणत्वरूपस्य विशेषस्य विवक्षणान्न द्वितीया किंतु सप्तमी । मे मम शासिता बोधयिता । हिशब्दः प्रसिद्धौ । अतो मम ज्ञानदोष इति भावः । सर्वक्षत्रनिबर्हणस्य समस्तक्षत्रियजात्यानां संहर्तुर्मम निबर्हणम् । प्रमापणमित्यर्थः । प्रकृते तु नन्द्यादित्वात्कर्तरि ल्युः । विनयं शिक्षणं क्षत्रियाः कथं कुर्युः कथं कर्तुं शक्नुयुः । शकि लिङ् । अतो न सहन्ते नृपतय इत्युक्तम् । वसिष्ठमिश्रविषये संबन्धः पूज्यतमवसिष्ठप्रातियोगिकसंबन्धो जरायां मान्यः । जरेत्युपलक्षणम् । स्थान इत्यपि । स्थानवयोभ्यामाधिक्ये सति तच्चरणपरिचरणहेतुतया पुरस्कार्यः । तुशब्दः प्रपितामहत्वश्रुद्धत्वप्रयुक्तशङ्काद्योतकः । स्पर्धायां

**वसिष्ठः**—भृगुप्रसवात्पराजय इति प्रियं नः । किंतु

अस्माभिरेव पाल्यस्य प्रशस्तत्वात्प्रियस्य नः ।
अस्मद्गृहे पुराणस्य पश्याचारस्य विप्लवम् ॥ ३८ ॥

**जनकदशरथविश्वामित्राः**—अनार्य निर्मर्याद,

जगत्सनातनगुरौ वसिष्ठेऽपि निरङ्कुशः ।
व्यालद्विप इवास्माभिरुपकृष्यैव दम्यसे ॥ ३९ ॥

**जामदग्न्यः**—एवमवधूतोऽस्मि ।

---

तु ज्ञानतपःप्रयुक्तसंघर्षे सति तु न मान्यो न पुरस्कार्यः । कुत इत्यत्राह—अधिक इति । अन्यः को वसिष्ठो वा त्वमन्यो वा को ज्ञानेन तपसा चाधिकः समो वा ममास्तीत्यर्थः । अतो ज्ञानार्थं न तच्चरणपरिचरणं कार्यमिति विश्वामित्रोक्तं वाक्यत्रयमपि प्रत्युक्तम् । अत्र गुरुतिरस्कृतिरूपो द्रवो नाम संध्यङ्गमुक्तम् । यथोक्तम्—'गुरुतिरस्कृतिर्द्रवः' इति ॥ ३७ ॥ भृगुप्रसवाद्भृगुवंश्यात्पराजयस्तिरस्कारो न्यूनभावो भवतीति यत्तदस्माकमिष्टमित्यर्थः । भृगोर्ज्येष्ठत्वात्तद्वंश्येन पौत्रस्थानीयेन चानेन परिभवः प्रिय एव । 'पुत्रादिच्छेत्पराजयम्' इति स्मरणादिति भावः । **अस्माभिरिति** । अस्माभिः पाल्यस्यानुच्छेदेन रक्षणीयस्य प्रशस्तत्वादभ्यर्हितत्वान्नोऽस्माकं प्रियस्य पुराणस्य चिरंतनस्याचारस्य ब्राह्मणासाधारणानित्यत्वा(?)दिमूलसदाचारस्यास्मद्गृह एव विप्लवं हानिं पश्य । भृगुवसिष्ठयोः सनाभित्वादस्मद्गृह इत्युक्तम् । भार्गवोऽयं मामधिक्षिपतीति न दूये किंतु धर्मप्रवर्तकानामस्माकं वंशे धर्महानिर्जातेति दूय इति भावः ॥ ३८ ॥ **जनकेत्यादि** । आहुरिति शेषः । अनार्याशिष्ट । निर्मर्याद वैदिकव्यवस्थाभञ्जक । **जगदिति** । जगतां सनातनगुरौ नित्यगुरौ । 'नित्यसदातनसनातनाः' इत्यमरः । वसिष्ठेऽपि ब्रह्मणः प्राणाज्जातत्वात्प्राणवत्तदभिमते वसिष्ठेऽपि निरङ्कुशो निर्भयस्त्वं निरङ्कुशोऽङ्कुशान्निष्क्रान्तो व्यालद्विप इव दुष्टगज इव । 'व्यालः सर्पे दुष्टगजे श्वापदे नाशके त्रिषु' इति रत्नमाला । विशिष्टवाचकानां पदानां विशेष्यवाचकसमभिव्याहारे विशेषणमात्रपरत्वाद्दुष्टमात्रपरोऽत्र व्यालशब्दः । अस्माभिर्बहुभिर्ब्राह्मणक्षत्रियैरुपकृष्यानुनीय दम्यसे शिक्ष्यसे । 'दमु उपशमे' इत्यस्माण्ण्यन्तात्कर्मणि लट् । अत्र वसिष्ठोऽयं सप्तव्याहृतिषु ऋषित्वाज्जगतो नित्यगुरुः । यद्यपि धर्मे ब्रह्मणीति त्वदुक्तरीत्या रुद्रस्तव धर्मादौ गुरुरस्तु, तथापि ब्राह्मण्यनिदानसर्वाभ्यर्हितसप्तव्याहृतिऋषित्वात्तवायं मुख्यगुरुरिति तद्विषयस्पर्धा तव ब्रह्महत्यासमा । तथा च याज्ञवल्क्यः —'गुरूणामध्यधिक्षेपो वेदनिन्दा सुहृद्वधः । ब्रह्महत्यासमं ज्ञेयमधीतस्य च नाशनम् ॥' इति । 'धर्मे ब्रह्मणि कार्मुके च भगवानीशो हि मे शासिता', 'मान्यो जरायां न तु स्पर्धायाम्' इति त्वदुक्तं दुरुक्तम् । बहूनां पाल्याद्ब्राह्मणस्यापि विश्वामित्रस्य तत्रानुप्रवेशाद्गुर्वधिक्षेपेण परशुरामस्य तेजोवैकल्यसंभावनया चास्माभिस्त्वं दम्यस इत्युक्तम् । तेन 'सर्वक्षत्रनिबर्हणस्य' इत्यादिकमपि प्रत्युक्तम् ॥ ३९ ॥ अवधूतोऽ-

अन्तर्धैर्यभरेण वृद्धवचनात्संपीड्य पिण्डीकृतो
हृन्मर्माश्रितशल्यवत्परिदहन्मन्युश्चिरं यः स्थितः ।
स्फूर्जत्येव स एष संप्रति मम न्यक्कारभिन्नस्थितिः
कल्पापायमरुत्प्रकीर्णपयसः सिन्धोरिवौर्वानलः ॥ ४० ॥

दिष्ट्या ।

निकारं प्राप्तोऽयं ज्वलति परशुर्मृत्युरिव मे
पृथिव्यां राजानो दशरथकुले सन्त्युपगताः ।
पुनर्द्वाविंशोऽपि प्रकुपितकृतान्तोत्सवकर-
श्चिरात्क्षत्रस्यास्तु प्रलय इव घोरः परिमरः ॥ ४१ ॥

---

स्म्यधिक्षिप्तोऽस्मि । **अन्तरिति** । यो मम मन्युः क्रोधो वृद्धानां च्यवनादीनां वचनाद्धेतोर्धैर्यस्य क्रोधनियमनसामर्थ्यप्रयोजकधृतिविशेषस्य भरेणातिशयेन हेतुना संपीड्य वीररणप्रतिबन्धकपिण्डीभावानुकूलव्यापारं कृत्वा पिण्डीकृतः संहततां प्राप्तोऽत एव हृन्मर्माश्रितशल्यवद्धृदयदेशात्मकविमर्दासहदेहप्रदेशगतबाणखण्डेन तुल्यं परिदहन्सन्नेकत्र स्थितोऽपि परितस्तापं कुर्वन्नन्तः शरीरान्तश्चिरं स्थितः स एष मन्युर्मम न्यक्कारेण जनकादिकृतधिक्करणेन भिन्नस्थितिश्छिन्नमर्यादः सन् । 'मर्यादा धारणा स्थितिः' इत्यमरः । कल्पस्य ब्रह्मदिनस्यापायेऽवसाने मरुता वायुना । 'सप्तमी' इति योगविभागात्समासः । प्रकीर्णमुद्धतं पयो यस्य स तथोक्तस्य सिन्धोरौर्वानल इव वडवानल इव । 'और्वस्तु वाडवो वडवानलः' इत्यमरः । अत्र वाडवस्य स्वरूपविशेषणमात्रपरत्वमौर्वशब्दस्यानलपदसमभिव्याहारादिति द्रष्टव्यम् । संप्रति स्फूर्जति वज्रशकलवद्व्याप्रियते । वेगवत्त्वदुर्निवारत्वादिना सादृश्यम् । 'टुओस्फूर्जा वज्रनिर्घोषे' इति पठितस्य लक्षणयोक्तार्थपरत्वं विवक्षितम् । एवकारो दार्ढ्यद्योतकः ॥ ४० ॥ दिष्ट्येत्यानन्दे । **निकारमिति** । निकारं जनकादिकृतं परिभवम् । 'निकारो विप्रकारः स्यात्' इत्यमरः । प्राप्तोऽयं मे परशुर्मृत्युरिव ज्वलति शत्रुदहनानुकूलज्वलनवान्भवति । दिव्यपरशोरभिमानिदेवताधिष्ठानान्निकारप्राप्त्युक्तिरिति मन्तव्यम् । पृथिव्यां दशरथकुले च राजानः पृथिवीस्था दशरथगृहस्थाश्च राजानः सीरध्वजकुशध्वजादयो दशरथरामलक्ष्मणादयश्चोपगताः सन्ति । यस्मादेवं तस्मात्प्रकुपितस्य कोपातिशयवतः कृतान्तस्य यमस्योत्सवकर आनन्दजननशीलः । 'कृञो हेतुताच्छील्यानुलोम्येषु' इति टः । द्व्यधिका विंशतिर्द्वाविंशतिः । 'द्व्यष्टनः संख्यायाम्' इत्यादिना द्विशब्दस्यात्वम् । द्वाविंशतेः पूरणो द्वाविंशः । 'तस्य पूरणे डट्', 'तिविंशतेर्डिति' इति तिशब्दलोपः । पूर्वमेकविंशतिः क्षत्रियवधा आसन्, अयमन्यो द्वाविंश इत्यर्थः । अपिशब्दः पूर्वसमुच्चये । प्रलय इव प्रपञ्चप्रलय इव घोरो ममापि भयंकरः क्षत्रस्य क्षत्रवर्णसामान्यस्य परिमरः, परिम्रियन्तेऽस्मिन्वीरा इति परिमरः सङ्ग्रामः । परिपूर्वान्म्रियतेः 'पुंसि संज्ञायां घः प्रायेण' इत्यधिकरणे घप्रत्ययः । पुनरप्यस्तु । प्राप्तकाले लोट् ॥ ४१ ॥

**वसिष्ठः**—कष्टं भोः,

कामं हि नः स्वजन एष तथापि दर्पा-
द्घोरं व्यवस्यति कथं नु भवेदवश्यः ।
संदूषितेन च मया सकृदीक्षितश्चे-
द्वत्सस्य भार्गवशिशोर्दुरितं हि तत्स्यात् ॥ ४२ ॥

**विश्वामित्रः**—अरे जामदग्न्य, अब्रह्मवर्चसमिव भ्रंशितशस्त्रसामर्थ्य-मिव जीवलोकं मन्यसे ।

ब्रह्मक्षत्रसमाजमाक्षिपसि यद्वत्से च घोराशय-
स्तेनातिक्रमणेन दुःखयसि नः पाल्योऽपि संबन्धतः ।

---

**काममिति** । एष परशुरामो नोऽस्माकं स्वजनो बन्धुर्भवति । 'बन्धुः स्वस्वजनाः समाः' इत्यमरः । काममित्यनुज्ञायाम् । तथापि स्वजनत्वेऽप्येष दर्पाद्घोरं भयंकरं कर्म व्यवस्यति कर्तव्यत्वेन निश्चिनोति । रामभद्रादिष्विति शेषः । एषोऽवश्योऽस्माकमपरतन्त्रः कथं नु भवेत्कथं भवेत् । सर्वथास्माकं स्वाधीन एव कार्यः । अन्यथा व्यवसायानुगुणं व्याप्रियेतेत्यर्थः । तत्र स्वाधीनकरणोपायस्तु न तावत्साम भवेद्दृप्तत्वात् । नापि दानं विरक्तत्वात् । न च भेदोऽसहायत्वात् । किंतु दण्डः परिशिष्यते । सोऽपि संबन्धवशेन कारुणिकस्य मामनुमत इत्यभिप्रायेणाह—**संदूषितेनेति** । एष परशुरामः संदूषितेन क्रोधरूपविकृतिं प्राप्तेन । 'दुष वैकृत्ये' इति पठिताण्णिच् । प्रेरणांशत्यागादकर्मकत्वेन । 'गत्यर्थाकर्मक-' इति कर्तरि क्तः । वैकृत्यं विकृतिः । यद्वा संदूषितेन 'मान्यो जरायां न तु स्पर्धायाम्' इति दोषोद्भावनेनाधिक्षिप्तेन मया सकृदेकवारमीक्षितश्चेत्तदीक्षणं वत्सस्य प्रपौत्रत्वरूपसंबन्धेन लालनीयस्य भार्गवशिशोरस्मज्ज्येष्ठभ्रातृवंशजस्य ज्ञानतपोवयोभिरल्पत्वाद्दयनीयस्य दुरितमनिष्टकरं स्यात् । हि यस्मादेवं तस्मात्कष्टमिति संबन्धः । अत्र भगवता वसिष्ठेनापकारिण्यपि तितिक्षुत्वकारुणिकत्वादिस्वगुणाविष्करणाद्विचलनं नाम संध्यङ्गमुक्तम् । यथोक्तम्—'स्वगुणाविष्करणं विचलनम्' इति ॥ ४२ ॥ अब्रह्मवर्चसमिव शापानुग्रहसामर्थ्यहेतुसद्वृत्तस्वाध्यायाध्ययनसमृद्धिशून्यमिव । 'स्याद्ब्रह्मवर्चसं वृत्ताध्ययनर्द्धिः' इत्यमरः । भ्रंशितमधःपतितं शस्त्रसामर्थ्यमायुधपरिग्रहशक्तिर्यस्य स तथोक्तमिव । 'शस्त्रमायुधचापयोः' इति रत्नमाला । जीवलोकं प्राणिनां निवासभूतं भुवनम् । 'जीवो बृहस्पतिप्राणजीवनात्मद्रुमेषु ना । मौर्व्यां वसायां जीवन्त्यां जीवाजीववति त्रिषु ॥' इति रत्नमाला । 'लोकस्तु भुवने जने' इत्यमरः । **ब्रह्मक्षत्रेति** । जामदग्न्य, त्वं संबन्धतोऽस्मद्भागिनेयजमदग्निपुत्रत्वरूपेण संबन्धेन हेतुना पाल्योऽप्यस्माकं रक्षणीयोऽपि ब्रह्मक्षत्रसमाजं ब्राह्मणानां क्षत्रियाणां च तपोध्ययनादिना सधर्मिणां समूहम् । 'पशूनां समजोऽन्येषां समाजोऽथ सधर्मिणाम्' इत्यमरः । आक्षिपस्यधिक्षिपसि । किंच वत्से रामे घोराशयः क्रूराभिप्रायोऽसि । 'अभिप्रायश्छन्द आशयः'

आतस्त्वां प्रति कोपनस्य तरलः शापोदकं दक्षिणः
प्राक्संस्कारवशेन चापमितरः पाणिर्ममान्विष्यति ॥ ४३ ॥

**जामदग्न्यः**—ननु भो कौशिक,

त्वं ब्रह्मवर्चसधनो यदि वर्तमानो
यद्वा स्वजातिसमयेन धनुर्धरः स्याः।
उग्रेण भोस्तव तपस्तपसा दहामि
पक्षान्तरे च सदृशं परशुः करोतु ॥ ४४ ॥

(नेपथ्ये।)

अयमहं भोः, कौशिकान्तेवासी रामः प्रणम्य विज्ञापयामि।
पौलस्त्यविजयोद्दामकार्तवीर्यार्जुनद्विषम्।
जेतारं क्षत्रवीर्यस्य विजयेय नमोस्तु वः ॥ ४५ ॥

---

इत्यमरः। इति यत्, तेन ब्रह्मक्षत्रसमाजाधिक्षेपरामजिघांसासमुच्चयात्मकेनातिक्रमणेन वेदवैदिकमर्यादातिलङ्घनेनास्मान्दुःखयसि दुःखवतः करोषि। दुःखवच्छब्दात् 'तत्करोति–' इति णिचि णाविष्टवत्त्वान्मतुब्लोपः। यद्वा नोऽस्माकं दुःखयसि दुःखं करोषि। 'सुखदुःख तत्क्रियायाम्' इति णिच्। इति यत्। आतः अतः। अतःशब्दवदातःशब्दोऽपि दीर्घादिर्हेत्वर्थकोऽस्ति। विषु एकपदे वृत् आत इत्यव्ययेषु पाठात्। त्वां प्रति कोपनस्य त्वद्विषयकक्रोधयुक्तस्य मम दक्षिणः पाणिस्तरलः संस्त्वां प्रति शापोदकमन्विष्यति। इतरः पाणिर्वामः करः प्राक्संस्कारवशेन तपोवसिष्ठवाक्याभ्यां ब्रह्मर्षित्वाधिगमात्पूर्वं क्षत्रियत्वप्रयुक्तधनुर्विद्यापाटववासनानुरोधेन। 'ग्रहो ग्राहे वशः कान्तौ' इत्यमरः। कान्तिरिच्छा। चापमन्विष्यति। शापचापाभ्यां वर्तमानभूतब्राह्मणत्वक्षत्रियत्वानुगुणाभ्यां निगृह्णामीत्यर्थः। 'ऋषि गतौ' इति दैवादिकस्योपसर्गवशेनेच्छार्थकत्वम् ॥ ४३ ॥ **त्वमिति**। त्वं वर्तमानो ब्रह्मवर्चसधनो यदि स्याः। वर्तमानत्वं ब्रह्मवर्चसधनत्वद्वारान्वेति। एतत्कालवर्तिब्राह्मणत्वानुगुणवृत्ताध्ययनसमृद्ध्युपकरणको भवसि चेदुग्रेण तपसा ब्राह्मणत्वानुगुणेन तव तपो ब्राह्मणत्वानुगुणं दहामि भस्मीकरोमि। 'दह भस्मीकरणे'। यद्वेति कल्पान्तरे। स्वजातिसमयेन क्षत्रियात्क्षत्रियाण्यां स्वजन्मतोऽनुरूपेण समयेनाचारेण। 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः। धनुर्धरः स्याश्चेत्। पक्षान्तरे धनुरुपकरणत्वरूपपरिग्राह्यकल्पविशेषे। 'पक्ष परिग्रहे' इति पठितात्पक्षतेः पक्षशब्दो निष्पन्नः। सदृशमनुरूपं युद्धात्मकं कर्म परशुः करोतु। कामचारे लोट्। तपसो यद्यपि कर्तृत्वेन मदपेक्षा स्यात्परशोस्तु न मदपेक्षेति निर्देशभेदाभिप्रायः। अत्र स्वशक्तिप्रशंसनाद्व्यवसायो नाम संध्यङ्गमुक्तम्। यथोक्तम्—'स्वशक्तिप्रशंसनं व्यवसायः' इति ॥ ४४ ॥ कौशिकान्तेवासी विश्वामित्रशिष्यः। 'छात्रान्तेवासिनौ शिष्ये' इत्यमरः। युद्धप्रस्तावाद्वसिष्ठव्यपदेशिनोऽपि स्वस्य रामेण कौशिकान्तेवासीति व्यपदेशः कृतः। **पौल-**

दशरथः—कथं प्राप्तो रामः । कथं हि नामैतत् ।

जनकः—हन्त भोः, प्रशस्तमभ्यनुजानीत । विजयतां रामभद्रः ।

अयं विनेता दृप्तानामेकवीरो जगत्पतिः ।
वयं वसिष्ठधौरेयाः सर्वे प्रतिभुवोऽत्र वः ॥ ४६ ॥

दशरथः—

नन्वद्यैव प्रथितयशसामूढरक्षाव्रतानां
याज्यानां वो गुणवति गृहे रामभद्रः सुजातः ।

---

स्त्येति । पौलस्त्यविजयेन रावणविजयेनोद्दामस्योद्धतस्य कार्तवीर्यार्जुनस्य द्विषं शत्रुं क्षत्रवीर्यस्यान्येषां क्षत्रियाणां वीर्यस्य जेतारमभिभवितारं परशुरामं विजयेय विजेतुं शक्नोमि । 'शकि लिङ्', 'विपराभ्यां जेः' इति तङ् । गुरुसंनिधौ शक्त्याविष्करण-दोषस्य प्रायश्चित्तं चरति—नमोऽस्तु व इति । यद्वा न मां यूयं प्रेमातिशयेनास्थान-शङ्कया निवारयध्वमित्यनुनयति—नमोऽस्तु व इति । अत्र वालिरावणयोरपि मया प्रेप्सितो विजयः सुकरश्चेति रामाभिप्रायः सूचितः । एतेन शिष्टचतुष्टयाङ्कार्थः सूचितः ॥ ४५ ॥ कथं प्राप्तः । कथमिति संभ्रमे । एतद्बालेन रामेण क्षत्रियान्तकनिरसनम् । प्रशस्तं सम्यक् । हन्त हर्षे । अभ्यनुजानीतानुज्ञां कुरुत । विजयतां रामभद्रः । परशु-राममिति शेषः । **अयमिति** । एकवीरः सजातीयद्वितीयशून्यो वीरः । बाहुलकात्स-मासः । जगत्पतिरयं रामो दृप्तानां विनेता दमयिता । तृजन्तमिदम् । दृप्तानामिति बहुवचनेन वालिरावणयोरपि विनेतेति सूचितम् । वसिष्ठो धौरेयो निर्वाहको येषां ते तथोक्ताः । 'धुरो यड्ढकौ' इति ढक् । सर्वे वयमत्र रामस्य विनेतृत्वे प्रतिभुवो लग्नकाः । 'स्युर्लग्नकाः प्रतिभुवः' इत्यमरः । अत्र 'अयं विनेता दृप्तानाम्' इति सिद्धवद्भाविश्रे-यःकथनात्प्ररोचनं नाम संध्यङ्गमुक्तम् । यथोक्तम्—'सिद्धवद्भाविश्रेयःकथनं प्ररोच-नम्' इति ॥ ४६ ॥ **नन्वित्यादि** । नन्वित्यामन्त्रणे । 'प्रश्नावधारणानुज्ञानुनयाम-न्त्रणे ननु' इत्यमरः । रामभद्रः प्रथितयशसां प्रख्यातकीर्तीनां यद्यपि यश एव ख्या-तिस्तथापि ख्यातेः ख्यातिर्विवक्षिता । 'कीर्तेः कीर्तिः' इति ह्युक्तम् । गुणवत्ताप्रथारूप-कीर्तेः । गुणवत्ताप्रथा हि वस्तुसंनिबन्धनत्वरूपगुणप्रसिद्धिरूपा । 'पुण्यैर्यशो लभ्यते' इति दृष्टनिबन्धनशून्यमपि हि यशः क्वचिदुक्तम् । अतस्तद्व्यावृत्तये प्रथितयशसामि-त्युक्तम् । ऊढं धृतं रक्षाव्रतं जगद्रक्षणनियमो यैस्ते तथोक्तास्तेषाम् । किंच वो युष्मा-भिर्याज्यानां याजयितुमर्हाणाम् । 'कृत्यानां कर्तरि वा' इति व इति षष्ठी । तथावि-धानाम् । इक्ष्वाकूणामिति शेषः । गुणवति गृहे गुणभूयिष्ठे गृहेऽद्यैव सुजातः । पूर्वं पुत्रकामेष्ट्या जातोऽपि जातो न भवति, इदानीमेव भाविपरशुरामादिविजयरूपश्रेय-स्कतया भवद्भिरनुगृहीतत्वाच्छोभनजन्मवानित्यर्थः । यद्वा नन्विति जनकं प्रत्यामन्त्र-णम् । रामभद्रः प्रथितयशसामूढरक्षाव्रतानां याज्यानां वो गृहेऽद्यैव सुजातः । नास्म-द्गृहे पूर्वं प्रजात इत्यर्थः । यद्यस्माज्ज्ञानज्योतिषा ज्ञानप्रकाशेन परिगताः सम्यग्ज्ञाता भवतां वर्तमानानां भूतानामतीतानां भव्यानां भाविनां च प्रभावाः प्रकृष्टस्वभावा येषां

ज्ञानज्योतिःपरिगतभवद्भूतभव्यप्रभावा
यद्ब्रह्माणः किमपि शिशुकेऽप्यत्र संवेदयन्ते ॥ ४७ ॥

**जामदग्न्यः**—एहिमन्ये राजपुत्र, जामदग्न्यं विजेष्यसे । (सस्मितम् ।) नहि विजेष्यसे । दुर्दान्तो हि रेणुकातनयस्त्वदन्तकः । तथाहि ।

कृत्तक्षत्रियकण्ठकंदरसरत्कीलालनिर्वापित-
प्रत्युद्भूतशिखाकलापहुतभुग्झङ्कारिभिर्मार्गणैः ।
एतद्घस्मरकालरुद्रकवलव्यापारमभ्यस्यतु
ब्रह्मस्तम्बनिकुञ्जपुञ्जितघनज्याघोषघोरं धनुः ॥ ४८ ॥

(इति निष्क्रान्ताः सर्वे ।)

**इति महाकविश्रीभवभूतिविरचिते महावीरचरिते तृतीयोऽङ्कः ।**

---

ते तथोक्ताः । 'भव्यगेय-'इत्यादिना भवतेः कर्तरि यत् । 'भव्यं सत्ये शुभे क्लीबे त्रिषु स्याद्योग्यभाविनोः' इति रत्नमाला । ब्रह्माणो वसिष्ठविश्वामित्रादयो ब्राह्मणोत्तमाः । शिशुकेऽप्यत्रात्यन्तबालेऽपि रामे किमपि मह्यपेक्षया मनसाप्युल्ललितुमनर्हं परशुरामादिविनेतृत्वं संवेदयन्ते संभूय जानन्ति । 'विद वेदनाख्याननिवासेषु' इति चुरादौ पठ्यते । अत्रायैव जात इत्यादिनापायाभावतः कार्यनिश्चयरूपनियताप्तिरुक्ता । शतानन्दाद्यव्यापिकथारूपप्रकरी चोक्ता । अतोऽस्मिन्नङ्के समग्राङ्गो विमर्शसंधिरुक्तः ॥ ४७ ॥ एहिमन्ये राजपुत्र, जामदग्न्यं विजेष्यसे । हे राजपुत्र, जामदग्न्यमहं विजेष्य इति मन्यसे, इत एहीति योजना । 'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च' इति मन्योपपदाद्धातोरुत्तमे प्रयोक्तव्ये मध्यमः प्रयोक्तव्यः । मन्यतेर्मध्यमे प्रयोक्तव्ये उत्तमः प्रयोक्तव्यः प्रहासे गम्यमान इत्युक्तेरत्र मन्ये विजेष्यस इत्युत्तममध्यमयोः प्रयोगः । एहीति च प्रहासद्योतकम् । अतएव 'एहिमन्ये ओदनं भोक्ष्यसे' इत्युदाहृतम् । तत्र ह्योदनस्यान्योपयुक्तत्वमजानन्तं बुभुक्षमाणं प्रतिहासः । प्रकृतेऽपि क्षत्रियान्तकस्य क्षत्रियबालकविजयः प्रहासहेतुरित्यभिप्रेत्यात्र पुत्रेत्युक्तम् । तमिमं प्रहासं कण्ठत एवाह—सस्मितम् । नहि विजेष्यसे । दुर्दान्तो हि रेणुकातनयस्त्वदन्तक इति 'विपराभ्यां-' इति जयतेरात्मनेपदम् । **कृत्तेति** । ब्रह्मस्तम्बानां ब्रह्माण्डानाम् । 'स्तम्बो गुल्मेऽप्यशाखेऽद्रौ' इति रत्नमाला । स्तम्बशब्देनोर्ध्वत्वादिसादृश्याद्द्रौण्या भुवनाण्डान्युच्यन्ते । तेषां निकुञ्जेषु कुञ्जेषु । 'निकुञ्जकुञ्जौ' इत्यमरः । ब्रह्माण्डानि कुञ्जोपपादकलतास्थानीयानि भवन्ति । तेन ब्रह्माण्डगणेष्विति फलितम् । पुञ्जितो राशीकृतोऽत एव घनो ज्याघोषस्तेन घोरं भीष्ममेतद्धनुः कर्तृ कृत्तारिछन्नाः क्षत्रियाणां कण्ठा एव कंदरास्ताभ्यः सरद्भिर्निष्क्रामद्भिः कीलालै रक्तैः । 'शोणितेऽम्भसि कीलालम्' इत्यमरः । निर्वापिताः शमिताः प्रत्युद्भूताः शिखानां कलापाः संघाता यस्य स तथोक्तः । 'कलापो भूषणे बर्हे काञ्च्यां संहतितूणयोः' इति रत्नमाला । तथाविधस्य हुतभुजोऽग्नेर्झङ्कारा एषु सन्तीति विग्रहे 'अत इनिठनौ' इनिप्रत्ययः ।

तथाविधैर्मार्गणैः । 'कलम्बमार्गणशराः' इत्यमरः । घस्मरस्य जगद्भक्षकस्य । 'भक्षको घस्मरोऽद्मरः' इत्यमरः । कालरुद्रस्य प्रलयकालरुद्रस्य कवलव्यापारं ग्रासक्रियामभ्यस्यतु पुनःपुनः करोतु । 'योग्यागुणनिकाभ्यासः' इत्यमरः । 'उपसर्गादस्यत्यूह्योर्वावचनम्' इत्यात्मनेपदस्य वैकल्पिकत्वात्परस्मैपदम् । अत्र पदार्थवृत्तिरूपनिदर्शनाविशेषोऽलंकारः 'पदार्थवृत्तिमप्येके वदन्त्यन्यां निदर्शनाम्' इति तल्लक्षणात् । अत्र च कुठारं विहाय धनुषः कीर्तनेन तस्मादपि धनुषः प्रियत्वावगमादुत्तराङ्के रामजितेन भार्गवेण प्रीत्या रामाय धनुषः प्रदानं करिष्यमाणं सूच्यते ॥ ४८ ॥

यो महीसारवास्तव्यो वाधूलो वीरराघवः ।
स महावीरचरिते तृतीयाङ्कं व्यवीवरत् ॥

अस्मद्गुरुर्जयतु संप्रति यो निवासो लक्ष्म्या हि संततमशेषगुरूपसेव्यः ।
श्रीरङ्गराजशिशुनेह सुपुत्रवान्स दूरीकृतेशगुरुशेषतुरङ्गकण्ठः ॥

**इत्याण्णाप्पङ्गार्यनामधेयेन वाधूलवीरराघवेण विरचितायां महावीरचरितव्याख्यायां भावप्रद्योतिनीसमाख्यायां तृतीयोऽङ्कः ॥**



## चतुर्थोऽङ्कः ।

(नेपथ्ये ।)

भो भो वैमानिकाः, प्रवर्तन्तां मङ्गलानि ।

कृशाश्वान्तेवासी जयति भगवान्कौशिकमुनिः
सहस्रांशोर्वंशे जयति जगति क्षत्रमधुना ।
विनेता क्षत्रारेर्जगदभयदानव्रतधनः
शरण्यो लोकानां दिनकरकुलेन्दुर्विजयते ॥ १ ॥

---

इदानीं कविः पुनरपि मुखान्तरेण गर्भसंधिं विमर्शसंधिं च तुरीयपञ्चमषष्ठैरङ्कैर्विवक्षयन्प्रथमं तुरीयाङ्कस्य विष्कम्भमुपक्षिपति—**भो भो इत्यादि** । विमानेन व्योमयानेन चरन्तीति वैमानिकाः । 'तेन चरति' इति ठक् । मङ्गलानि पुष्पवर्षादीनि शुभकर्माणि प्रवर्तन्ताम् । कर्तरि लोट् । कोऽत्र हेतुरित्याह—**कृशाश्वेति** । कृशाश्वस्य जम्भकादिदिव्यास्त्राणां प्रथमं द्रष्टुः कृशाश्वनाम्नो ब्रह्मर्षेरन्तेवासी शिष्यो भगवान्कौशिको मुनिर्जयति सर्वोत्कर्षेण वर्तते । 'शिष्यप्रकर्षो यशसे गुरूणाम्' इति भावः । अधुना सहस्रांशोर्वंशे सूर्यवंशे क्षत्रं क्षत्रवर्णो जयति । कुत इत्यत्राह—विनेतेति । क्षत्रारेः परशुरामस्य विनेता दमयिता जगतामभयदानव्रतमेव धनं यस्य स तथोक्तः । लब्धपरिपालनादलब्धस्य लभ्यत्वाच्च धनसादृश्यम् । जगत्कण्टकवालिरावणादिवधोऽपीह सूचितः । लोकानां शरण्यः शरणे रक्षणे साधुः । 'शरणं रक्षणे गृहे' इति विश्वः। 'तत्र साधुः' इति यत्प्रत्ययः । जगदभयेत्यादिना त्रैवर्गिकफलप्रदानं तत्प्रत्यनीकविध्वंसनं च विवक्षितम् । शरण्य इत्यादिना च भयनिवर्तनं मोक्षप्रदानं च विवक्षितम् । अनेन सुग्रीवविभीषणाभ्यां किष्किन्धालङ्कैश्वर्यप्रदानं तत्परिपन्थिनोर्वालिरावणयोर्वधश्च वक्ष्यमाणः सूचितः । एवं जटायुवालिनोर्मोक्षप्रदानं च सूचितम् । एवंभूतो दिनकरकुलेन्दुः सूर्यवंशानन्दकरो रामो विजयते सर्वोत्कर्षेण वर्तते । दिनकरेत्यनेन संतापकरस्याप्युष्णकिरणस्य चन्द्रवत्तापहरत्वं रामस्य व्यज्यते । अत्र परशुरामविजयेन दृष्टस्योत्तरत्र वनप्रवासेनादृष्टस्य रामश्रेयोहेतुविश्वामित्रयत्नरूपबीजस्यान्वेषणाद्गर्भसंधिः । तदुक्तम्—'गर्भो दृष्टस्य नष्टस्य बीजस्यान्वेषणं मुहुः' इति । अस्मिंश्च संधौ पताकारूपार्थप्रकृतिः प्राप्ताशारूपाचार्थप्रकृतिर्वक्तव्ये । तत्स्वरूपं तु—'उपायापायशङ्काभ्यां प्राप्त्याशाकार्यसंभवः । प्रतिपाद्यकथाङ्गं स्यात्पताकाव्यापिनी कथा ॥' इत्युक्तम् । वसिष्ठविश्वामित्रानुग्रहाद्युपायशङ्कया माल्यवन्मन्त्राद्यपायशङ्कया च कार्यसंभावनाया उक्तत्वात्प्राप्त्याशोक्ता । प्रतिपाद्यरामकथाङ्गस्य व्यापिन्या लक्ष्मणकथायाश्चोक्त्या पताका वर्णिता । अस्य च गर्भसंधेरङ्गानि द्वादश । तदुक्तम्—'अभूताहरणं मार्गो रूपोदाहरणक्रमाः । संग्रहश्चानुमानं च तोटकादिबले तथा । उद्वेगसंभ्रमाक्षेपा द्वादशाङ्गान्यनुक्रमात् ॥' इति । एतेषां स्वरूपाणि स्वावसरेष्वेव दर्शयिष्यन्ते ॥ १ ॥ विष्कम्भक-

(ततः प्रविशतः संभ्रान्तौ विमानेन शूर्पणखामाल्यवन्तौ ।)

**माल्यवान्**—दृष्टस्त्वया दिवौकसामेकायनीभावः, यदिन्द्रादयः स्वतो बन्दित्वमुपागताः ।

**शूर्पणखा**—णहि तुम्हेहिं णिरूविदं विसंवदइ । संपदं उक्कम्पिदम्हि । ता किं एत्थ करणिज्जम् ।

**माल्यवान्**—या सा राज्ञा दशरथेन प्राक्प्रतिश्रुतवरद्वया राज्ञी भरतमाता कैकेयी, तया मन्थरा नाम परिचारिका दशरथस्य वार्ताहारिणी मिथिलामयोध्यातः प्रेषिता मिथिलोपकण्ठे वर्तत इति संप्रत्येव मम निवेदितं चारैः । तस्यास्त्वया शरीरमाविश्यैवमेवं च कर्तव्यम् । (इति कर्णे कथयति ।)

---

१. नहि युष्माभिर्निरूपितं विसंवदति । सांप्रतमुत्कम्पितास्मि । तत्किमत्र कार्यम् ।

---

माह—**ततः प्रविशत इत्यादिना** । संभ्रान्तौ । अत्र संभ्रमवचनात्तोटकं नाम संध्यङ्गमुक्तम् । यथोक्तम्—'रोषसंभ्रमवचनं तोटकम्' इति । स्वोत्तेजितस्य परशुरामस्य पराजयात्संभ्रान्तवचनम् । वैमानिकप्रवृत्त्यवगमाय विमानप्रवेशः ॥ एकमयनमधिकरणं येषां ते तथोक्ता अनेकायनाः संपद्यन्त इत्यस्मिन्नर्थे भवतियोगे च्विप्रत्ययः । भवतेश्च भावे घञ्प्रत्ययः । एकायनीभावः । रामात्मकैकाधिकरणत्वमित्यर्थः । 'अयनं निलये मार्गे दक्षिणोदग्गतौ रवेः' इति रत्नमाला । दृष्टः किमिति काक्वा योजनीयम् । इन्द्रादयः । आदिपदाद्ब्रह्मयादिपरिग्रहः । बन्दित्वं स्तुतिपाठकत्वम् । 'बन्दिनः स्तुतिपाठकाः' इत्यमरः । कृशाश्वान्तेवासीत्यादिश्लोकापेक्षयेदं बन्दित्वमुक्तम् । स्वतः स्वेच्छयोपगता इति यत्, अयमेकायनीभाव इत्यन्वयः ॥ निरूपितं विचार्य निर्णीतं वस्तु न विसंवदति नान्यथा भवति । 'विप्रलम्भो विसंवादः' इत्यमरः । सर्वे तं विजयिनं निर्जरा जानीयुरित्यादिना द्वितीयाङ्कविष्कम्भे माल्यवता निरूपणाद्युष्माभिर्निरूपितं शूर्पणखयोक्तम् । एष संचितार्थप्राप्तिरूपः क्रमो नाम संध्यङ्गमुक्तम् । यथोक्तम्—'संचितार्थप्राप्तिः क्रमः' इति । सांप्रतमुत्कम्पितास्मि । सांप्रतं परशुरामपरिभवानन्तरम् । तत्किमत्र कार्यम् । अत्र रामविषये । तत्रापि शक्तितः प्रतिविधास्य इति माल्यवता सामान्यतः प्रतिविधानं परशुरामपरिभवपक्षे प्रतिज्ञातम्, तद्विशेषतोऽद्य शूर्पणखया पृच्छयते किमत्र करणीयमिति ॥ **या सेति** । प्रतिश्रुतं प्रतिज्ञातं वरद्वयम् । व्रियेते प्रार्थ्येते इति वरौ । 'वृङ् संभक्तौ', संभक्तिः प्रार्थनम्, तयोर्द्वयं यस्यै सा तथोक्ता । 'अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः' इत्यमरः । केकयस्यापत्यं स्त्री कैकेयी । 'केकयमित्रयुप्रलयानाम्' इत्यादिना यादेरियादेशः । वार्ताहारिणी प्रवृत्तिप्रापिका । अयोध्यातोऽयोध्यायाः । 'अपादाने च' इत्यादिना पञ्चम्यास्तसिः । मिथिलामिति । प्रेषयतेः 'गतिबुद्धि—' इत्यादिना द्विकर्मकत्वान्मिथिलामिति

**शूर्पणखा**—किं[1] अण्णहा करिस्सदि एव्वं रामो त्ति।

**माल्यवान्**—भिद्यते न सद्वृत्तमिक्ष्वाकुगृहेषु, विशेषतस्तादृशस्य विजिगीषोः।

**शूर्पणखा**—तदो[2] किम्।

**माल्यवान्**—ततोऽनेन योगाचारन्यायेन दूरमाकृष्य रक्षसामङ्कमु-

---

१. किमन्यथा करिष्यत्येवं राम इति।

२. ततः किम्।

---

द्वितीया। प्रेषिता। 'प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः' इत्युक्तेः कर्मणि क्तः। चारैर्गूढपुरुषैः। 'चारस्तु गूढपुरुषः' इत्यमरः। तस्या मन्थरायाः। कर्णे कथयतीति। 'अर्थस्त्वेकेन विज्ञेयः पश्चाज्ज्ञाप्यश्च यो भवेत्। कर्णे एवमिवेत्युक्त्या काव्यबन्धे तमीरयेत्॥' इत्युक्तत्वाद्रहस्यार्थस्य कर्णे कथनमुक्तम्। अत्र च वरद्वयेऽप्येकेन रामस्य वनप्रवासनमपरेण भरतस्याभिषेक इत्युत्तरत्र स्फुटीभविष्यति। अत्र प्रस्तुतोपयोगिच्छद्माचरणादभूताहरणं नाम संध्यङ्गमुक्तम्—'अभूताहरणं प्रस्तुतोपयोगिच्छद्माचरणम्' इति॥ रामः किमेवं करिष्यति वनं प्रवेक्ष्यति किम्। अन्यथा करिष्यति किम्। वनप्रवेशं विहाय स्वयं राज्यं करिष्यतीत्यर्थः। अत्र वितर्कप्रतिपादनाद्रूपं नाम संध्यङ्गमुक्तम्। यथोक्तम्—'वितर्कप्रतिपादनं वाक्यं रूपम्' इति॥ इक्ष्वाकुगृहेषु सद्वृत्तं मातृपितृवाक्यकरणरूपसमीचीनवृत्तं न भिद्यते न भिन्नं भवति। न त्यक्तं भवतीत्यर्थः। भिनत्तेः कर्मकर्तरि यक्। **विशेषत इति**। तादृशस्य लोकोत्तरस्य विजिगीषोर्विजयेच्छो रामस्य सद्वृत्तं विशेषतो न भिद्यते। तस्य सद्वृत्तभेदाभावोऽतिशयित इत्यर्थः। तत्र हेतुर्विजिगीषोरिति। विजिगीषुलक्षणं कामन्दकेनोक्तम्—'संपन्नस्तु प्रकृतिभिर्महोत्साहः कृतश्रमः। जेतुमेषणशीलश्च विजिगीषुरिति स्मृतः॥' इति। प्रकृतयोऽपि तत्रैवोक्ताः—'अमात्यराष्ट्रदुर्गाणि कोशो दण्डश्च पञ्चमः। एताः प्रकृतयस्तज्ज्ञैर्विजिगीषोरुदाहृताः॥' इति। सद्वृत्तहानिरमात्यराष्ट्राणामप्रीतिहेतुरिव सा त्याज्येति भावः। तादृशोऽस्मीत्यनेन दशवर्गयुक्तत्वं विवक्षितम्। दशवर्गश्च—'दुष्टानां निग्रहश्चैव शिष्टानां प्रग्रहस्तथा। द्रुतचारनिसर्गश्च रञ्जनं बलराष्ट्रयोः॥ धर्मार्थयोस्तथा कार्यं तथा सैन्यस्य वेतनम्। नित्यकर्म क्रिया चेति दश कर्म प्रचक्षते॥' इत्युक्तः। तत्र सदाचारहानौ बलराष्ट्ररञ्जनधर्मयोर्हानिः प्रसज्येदिति भावः। पितृवचनपालनम् 'जीवतोर्वाक्यकरणात्' इत्यादिभ्यो धर्मोऽवगतः। अत्र प्रस्तुतोत्कर्षाभिधानादुदाहृतिर्नाम संध्यङ्गमुक्तम्। यथोक्तम्—'प्रस्तुतोत्कर्षाभिधानमुदाहृतिः' इति॥ ततः किम्। रामेण सद्वृत्तपालनेन पितृवचनकरणाद्धेतोः किं फलं भविष्यतीत्यर्थः॥ **ततोऽनेनेत्यादि**। ततः। पितृवचनपरिपालने रामेण कृते सतीत्यर्थः। अनेन मया तव कर्णे कथितेन योगानां सामदानभेददण्डात्मकानामुपायानामाचारस्यानुष्ठानस्य न्यायेन देशकालाद्यानुगुण्याद्युपायेषु त्याज्योपादेयविवेकपूर्वकानुष्ठानहेत्वौचित्यनिरूपणेन। 'योगः संनहनोपायध्यानसंगतियुक्तिषु' इत्यमरः। 'अत्रेषन्या-

पनीतस्य विन्ध्यकान्तारेष्वदेशज्ञस्य विचरतः सुकराण्येवावस्कन्दनानि स्युः। विराधदनुकबन्धप्रभृतयस्तीक्ष्णा दण्डकारण्यसत्रेषु चरिष्यन्ति। ते हि शक्ताः लुप्तप्रभुशक्तेरुत्साहशक्तिं छद्मनातिसंधातुम्। अनिवर्तनीयश्च रावणस्य सीतास्वीकारग्रहः। स चैवमीषत्करः सप्रयोजनश्चेति।

**शूर्पणखा**—अह लक्खणसहाअत्तणे किं पओअणम्।

**माल्यवान्**—

वीरोऽस्त्रपारगश्चिन्त्यो यथा रामस्तथैव सः।
छद्मदण्डप्रयोगस्तु यथैकस्मिंस्तथा द्वयोः॥ २॥

---

१. अथ लक्ष्मणसहायत्वे किं प्रयोजनम्।

---

यकल्पाश्च' इति चामरः। यद्वा योगाचारो नाम बुद्धशिष्येष्वन्यतमस्तदुक्तेन न्यायेन संवरणाख्येन। मायाप्रयोगात्मना दण्डविशेषेणेत्यर्थः। रक्षसामङ्कं समीपं स्थानमुपनीतस्य प्रापितस्य। 'अङ्को नाटकविच्छेदे संज्ञायां युधि भूषणे। समीपे रूपके स्थाने मतावुत्सङ्गचिह्नयोः॥' इति रत्नमाला। विन्ध्यकान्तारेषु विन्ध्यपर्वतवनेष्वदेशज्ञस्य विचरतोऽदेशज्ञस्य सतो विचरतः। देशदोषमज्ञात्वा संचरत इत्यर्थः। अवस्कन्दनानि पीडनानि सुकराण्येव स्युः सुखेन कर्तुं शक्यान्येव भवेयुः। 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इति कर्मणि करोतेः खल्प्रत्ययः। **विराधेति**। तीक्ष्णाः क्रूरा दण्डकारण्यसत्रेषु दण्डकस्य राज्ञो देशः शुक्रशापेनारण्यमासीदिति दण्डकारण्यसंज्ञकवनेषु। 'सत्रं यज्ञे यज्ञभेदे सदादाने वनेऽशुके' इति रत्नमाला। संज्ञाशब्दत्वादपुनरुक्तिः। लुप्ता नाशिता प्रभुशक्तिः कोशदण्डजतेजोरूपसामर्थ्यं यस्य स तथोक्तस्तस्य। पूर्वमेव राज्यभ्रंशवनवासाभ्यां कोशदण्डजशक्तिरूपप्रभुशक्तिविकलस्येत्यर्थः। रामस्येति शेषः। उत्साहशक्तिं कर्तव्येषु स्थेयान्प्रयत्न उत्साहस्तत्र शक्तिः सामर्थ्यं तां छद्मना मायाप्रयोगरूपगूढानिष्टकरणेनातिसंधातुं वञ्चनेन नाशयितुं शक्ताः। समर्था इत्यर्थः। अतिसंपूर्वको दधातिरिह वञ्चनया नाशने प्रयुक्तः। **अनिवर्तनीय इति**। रावणस्य सीतास्वीकारग्रहः सीतास्वीकारनिर्बन्धः। 'निर्बन्धोपरागार्कादयो ग्रहाः' इत्यमरः। अनिवर्तनीयः प्रकारान्तरेण निवर्तयितुमशक्यः। भवतीति शेषः। **स चेति**। एवं मायाप्रयोगे सत्येव स सीतास्वीकारनिर्बन्ध ईषत्करोऽनायासेन कर्तुं शक्यः, सप्रयोजनश्च सीतालाभरूपविषयसिद्धिमांश्च। भवेदिति शेषः॥ माल्यवता शूर्पणखायाः कर्णे कथिते वाक्यसंदर्भे 'सीतालक्ष्मणमात्रकात्परिजनादन्यो न चानुव्रजेत्' इति स्थितम्। तत्र लक्ष्मणस्यापि वञ्चनया प्रत्याकर्षणे किं फलमिति शूर्पणखा पृच्छति—अथ लक्ष्मणसहायत्वे किं प्रयोजनमिति। अथेति प्रश्ने॥ **वीर इति**। वीरो नैसर्गिकशक्तियुक्तोऽस्त्राणां पारमध्ययनसमाप्तिपराकाष्ठां गच्छतीति गच्छतेः कर्तरि डः। 'पार तीर कर्मसमाप्तौ' इत्यस्माद्भावे घञ्। एवं रामो यथा चिन्त्यो भयस्थानत्वेन शङ्क-

**शूर्पणखा**—मम दु दुअं एव्व एदं ण जुत्तं पडिभाइ । जं दूरट्ठिदस्स दासरहिणो संणिहाणकरणं, जं अ अनाबद्धवेरस्स अप्पडिसमाहेअं इत्थियावेरं ति ।

**माल्यवान्**—स तावद्भूतसे, भूम्यानन्तर्यतः प्रत्यासन्न एव । सानुचरसुन्दोपसुन्दपुत्रोपप्लवाच्च ताटकारिर्भूम्यनन्तरः कथमनाबद्ध-

१. मम तु द्वयमेवैतन्न युक्तं प्रतिभाति । यद्दूरस्थितस्य दाशरथेः संनिधानकरणम्, यच्चानाबद्धवैरस्याप्रतिसमाधेयं स्त्रीवैरमिति ।

नीयो भवति, तथैव वीरोऽस्त्रपारगो लक्ष्मणोभयस्थानत्वेन चिन्तनीय इत्यर्थः । लक्ष्मणेन सहास्मिति हि पूर्वं रामेण प्रार्थितम् । छद्मदण्डप्रयोगो गूढदमानुष्ठानम् । 'दण्डोऽस्त्री दमहिंसासेनालगुडेषु शासने राज्ञाम्' इति रत्नमाला । एकस्मिन्नेकत्र यथा । कार्ये इति शेषः । तथा द्वयोः कार्यः । रामे लक्ष्मणे च कार्य इत्यर्थः ॥ २ ॥ **मम त्विति** । अप्रतिसमाधेयं स्त्रीवैरं प्रकारान्तरेणानिवर्त्यं स्त्रीप्रयुक्तवैरम् । प्राकृते स्त्रीशब्दस्य 'इत्थिया' आदेशः । अनाबद्धवैरस्य निमित्तान्तरप्रयुक्तवैररहितस्य यत्संनिधानकरणं यच्च स्त्रीवैरमेतद्द्वयमिति पूर्वेण संबन्धः । वैरं हि पञ्चविधम् । तदुक्तम्—'सापत्नं वस्तुजं स्त्रीजं वाग्जातमपराधजम् । वैरप्रभेदनिपुणैर्वैरं पञ्चविधं मतम् ॥' इति । **स तावदिति** । तावच्छब्दः क्रमार्थकः । संनिधानं युक्तमेवेति प्रथमं निरूप्यत इत्यर्थः । स रामो भूमेरानन्तर्यतो भूम्यनन्तरत्वाद्धेतोः प्रत्यासन्न एव संनिहित एव । रावणापेक्षया भूम्यनन्तरत्वं विवक्षितम् । तच्च स्वमण्डलसंनिकृष्टमण्डलवर्तित्वम् । तदुक्तममरसिंहेन—'विषयानन्तरो राजा शत्रुर्मित्रमतःपरम्' इति । विषयानन्तरो भूम्यनन्तरः । 'नीवृज्जनपदौ देशविषयौ' इति विषयशब्दस्य देशवाचित्वाद्द्वादशविधेषु राजसु भूम्यनन्तरो नाम कश्चित् । तथाहि—मध्यतो विजिगीषुः, तस्यारिः, मित्रम्, अरेर्मित्रम्, मित्रशत्रुः, शत्रुमित्रमित्रं चेति पुरोवर्तिनः पञ्च । पार्ष्णिग्राहः, आक्रान्तः, पार्ष्णिग्राहासारः, आक्रान्तासारश्चेति विजिगीषोः पृष्ठभागस्थाश्चत्वारः । एवं च भवति विजिगीषुर्दशमः, पार्श्वस्थो मध्यमः, एतेषां बहिरवस्थित उदासीनश्चेति राजानो द्वादशविधा भवन्ति । तदिदमुक्तं कामन्दकेन—'संपन्नस्तु प्रकृतिभिर्महोत्साहः कृतश्रमः । जेतुमेषणशीलश्च विजिगीषुरिति स्मृतः ॥ अरिर्मित्रमरेर्मित्रं मित्रमित्रमतःपरम् । अथारिमित्रमित्रं च विजिगीषोः पुरःसराः' ॥ 'पार्ष्णिग्राहस्ततः पश्चादाक्रान्तस्तदनन्तरम् । आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः ॥ अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः । अनुग्रहे संहतयोर्व्यस्तयोर्निग्रहे प्रभुः ॥ मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः । अनुग्रहे संहतानां व्यस्तानां च वधे प्रभुः ॥' इति । अत्र रावणो माल्यवत्पक्षेण विजिगीषुः, तथारिरिन्द्रादिदेववर्गः, मित्रमसुरवर्ग इत्यादि यथायोग्यं विजिगीष्वादिकल्पनायां रामो भूम्यनन्तरः संपद्यते । एवं संनिधानं निरूपितम् । अथ वैरसद्भावं निरूपयति—**सानुचरेत्यादिना** । सानुचरयोः सुन्दोपसुन्दपुत्रयोः सुबाहुमारीचयोरुपप्लवादेकस्य वधरूपादन्यस्य समुद्रप्रक्षेपणरूपाच्चोपद्रवाद्धेतोर्भूम्यन-

वरः । अप्रतिविधेयं च रामरावणयोरितरथापि वैरम् । पश्य ।

पाल्यं तस्य जगद्वयं तु जगतो नित्यं हठादेशिनः
सामैवं सति कीदृगप्रियकृता शश्वद्विरुद्धात्मना ।
कानर्थान्रघुनन्दनो मृगयते देवैः पतिर्यो वृत-
स्तस्माद्दानमपीह नास्ति न भिदा तस्यैव नः साधनम् ॥ ३ ॥

दण्डोऽप्यभ्यधिके शत्रौ न प्रकाशः प्रशस्यते ।
तूर्णींदण्डस्तु कर्तव्यस्तस्य चायमुपक्रमः ॥ ४ ॥

---

न्तरस्ताटकारी रामः कथमनाबद्धवैरः । ताटकारित्वात्सुबाहुमारीचोपप्लवाच्च रामो भूम्यनन्तरः । बद्धवैर एवेत्यर्थः । तथा चोक्तम्—'राज्यस्त्रीस्थानदेशानां ज्ञातीनां च धनस्य च । अपहारो मदो मानः' इत्यारभ्य 'इति विग्रहयोनयः' इति । इतरथा प्रतिविधेयम् । छद्मदण्डप्रयोगेण विना दुर्निवर्त्यमित्यर्थः । तदेव वैरस्य दुर्निवर्त्यत्वमाह—**पश्येत्यादिना** । सुनिरूपत्वाभिप्रायेण पश्येति विधिः ॥ **पाल्यमिति** । जगत्तस्य रामस्य पाल्यं रक्षणीयम् । भवतीति शेषः । वयं च रावणादयो वयं तु जगतो लोकस्य नित्यं हठेन बलात्कारेणादेशिनः शासितारः । भवाम इत्यर्थः । 'प्रसभस्तु बलात्कारो हठः' इत्यमरः । जगत्पालनतत्प्रसभयोर्व्याघातादिति भावः । ततः किमत्राह—**सामेति** । एवं सति रामस्यास्माकं च जगत्सुखदुःखतत्परत्वे सति शश्वत्सदा विरुद्धात्मना विपरीतबुद्धिनाऽप्रियकृता विप्रियकारिणा रावणेन कर्त्रा रामविषये सामात्यर्थं मधुरवाक्यं कीदृक् । कथंभूतमित्यर्थः । विप्रियकृतो वाक्यमपि विप्रियमेवेति सामस्वरूपमेव दुर्घटमिति भावः । 'साम सान्त्वमुभे समे', 'अत्यर्थं मधुरं सान्त्वम्' इत्यमरः । अनेन सामोपायो न वैरप्रतिविधानहेतुरित्युक्तं भवति । यो रघुनन्दनो रामो देवैरिन्द्रादिभिः पतिः पालकः स्वामी च वृतः स रामः कानर्थान्देयवस्तूनि मृगयतेऽपेक्षते । 'मृग अन्वेषणे' । अनेन दानोपायोऽपि न वैरप्रतिविधानहेतुरित्युक्तं भवति । तदेवाह—तस्माद्दानमपीह नास्तीति । इह वैरप्रतिविधौ नास्ति । हेतुतयेति शेषः । इह रामे वा । तस्यैव देवैः पतित्वेन वृतस्यैव रामस्य भिदा भेदोपायो नः साधनमस्माकं प्रतिविधिहेतुर्न भवति । वेतनेन सैन्यसंग्रहेऽप्यधिकवेतनप्रदानप्रलोभेन सैन्यादीनां पृथक्करणं न घटते । तेषां स्वार्थतया स्वारसिकरामपक्षपातेन भेदो दुर्घट इति भावः ॥ ३ ॥ दण्डः परमवशिष्यते, मायोपेक्षयोस्तत्रैवान्तर्भावादिन्द्रजालस्य भेदेऽन्तर्भावाच्च । सप्तोपायपक्षानभ्युपगमेनोपायचतुष्टयस्यैवाभ्युपगमात् । तदुक्तं कामन्दकेन—'साम दानं च भेदश्च दण्डश्चेति चतुष्टयम्' इति । सोऽयं दण्डो द्विविधः—प्रकाशदण्डः, तूर्णींदण्डश्चेति । तत्र प्रकाशः सेनाभिगमनादिना वधबन्धनादिः । तूर्णींदण्डस्तु गूढवधादिः । अयमेव छद्मदण्डादिशब्देन व्यवह्रियते । तत्र प्रबले प्रकाशदण्डो न युक्तः । तस्मात्तूर्णींदण्ड एवोचित इत्याह—**दण्डोऽपीति** । अभ्यधिकेऽत्यन्ताधिके । अधिकः कार्तवीर्यः, ततोऽप्य

तथा सति सीतापहारतः किमपरं कुर्यात् । ततश्च,

हृतजानिररातिभिः सलज्जो
यदि मृत्युः शरणं ततोऽन्यथा तु ।
म्रदितो मृत एव निष्प्रतापः
परितप्तो यदि वा घटेत संधौ ॥ ५ ॥

---

धिकः परशुरामः, ततोऽप्यधिको राम इत्यभिप्रायेणाभ्यधिक इत्युक्तम् । शत्रौ रामे प्रकाशो दण्डः सेनाया अभिगमनादिना वधादिर्न प्रशस्यते न गुणवान्भवति । किंतु प्रयोक्तुर्दुर्बलत्वेन स्वरूपोच्छेदकरतया दोषवानेव भवतीत्यर्थः । 'शंसु स्तुतौ' कर्मणि यकि नलोपः । स्तुतिर्गुणिनिष्ठगुणाभिधानमभ्यधिके शत्रौ तूष्णींदण्डस्तु कर्तव्यः कर्तुमर्हः । तुशब्दः प्रकाशदण्डवैलक्षण्यद्योतकः । तच्च प्रयोक्तुः स्वरूपोच्छेदकरत्वाभावरूपम् । अयं तव मन्थराशरीरप्रवेशादिस्तस्य तूष्णींदण्डस्योपक्रमो बुद्धिपूर्वारम्भः । भवतीति शेषः । 'ज्ञात्वारम्भ उपक्रमः' इत्यमरः । अत्र प्रस्तुतोपयोगिसामदानवचनात्संग्रहो नाम संध्यङ्गमुक्तम् । तथोक्तम्—'प्रस्तुतोपयोगिसामदानवचनात्संग्रहः' ॥ ४ ॥ तथा सति वनविप्रवासादौ सति सीतापहारहेतोः किमपरं कुर्यात्किमन्यत्कर्तुं शक्नुयादिति वक्ष्यमाणादन्यत् किमपि कर्तुं न शक्नुयादिति भावः । शकि लिङ् । **हृतजानिरिति** । अत्र राम इत्यादिः । रामोऽरातिभिः शत्रुभिः । 'अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः' इत्यमरः । यदि हृतजानिर्हृतदारो भवेद्यदि, तदा रामः सलज्जो भवेत् । लोकमुखनिरीक्षणानर्हतया युद्धादिकार्याक्षमो भवेदित्यर्थः । अथवा तस्य रामस्य मृत्युर्मरणं शरणं रक्षकं भवेदिति शेषः । तस्येत्यपि शेषः । प्राणेभ्योऽपि गरीयस्यास्तस्याः क्षणविरहासहतया तत्क्षण एव म्रियेतेति भावः । 'शरणं गृहरक्षित्रोः' इत्यमरः । अन्यथा तु तत्क्षणमरणाभावेऽपि म्रदितो मृदूकृतः सन् । मृदुशब्दात्तत्करोतीत्यर्थे णिचि ऋकारस्य रेफादेशे च सति कर्मणि क्तः । मृतो भवेत् । क्षीणबलः सन्क्रमेण म्रियेतेत्यर्थः । अन्यथा त्वित्यनुषज्यते । अन्यथा तु क्रमेण मरणाभावेऽपि निष्प्रतापः पूर्वमेव राज्यभ्रंशात्कोशदण्डजतेजोविरहितः । 'स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम्' इत्यमरः । परितप्तः संतप्तः सन्संधौ घटेत चेष्टेत । 'घट चेष्टायाम्' । चेष्टा हिताहितपरिस्पन्दः । यदिवेत्ययमव्ययसंघातो यद्वेत्यर्थे वर्तमानः सर्वेषु कल्पेष्वन्वेतव्यः । संधिर्नाम विजिगीषोर्व्यवस्थाकरणलक्षणमैक्यम् । स च षाड्गुण्ये प्रथमः । 'संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः । षड्गुणाः' इत्यमरः । तच्च षड्गुणं निरुक्तम् । यथा विजिगीषोर्व्यवस्थाकरणलक्षणमैक्यं संधिः, विरोधो विग्रहः, विजिगीषोरारिं प्रति यात्रा यानम्, तयोर्मिथः प्रतिबद्धशक्त्योः कालप्रतीक्षया तूष्णीमवस्थानमासनम्, दुर्बलप्रबलयोर्द्विषोर्वाचिकमात्मसमर्पणं द्वैधीभावः, अरिणा विध्यमानस्य बलवदाश्रयणं समाश्रय इति । एतादृशे संधौ व्याप्रियेतेत्यर्थः । अत्र शत्रुविषये वृत्तचतुष्टयं नीतिसिद्धम् । तच्च—'उच्छेदनं चापजयः पीडनं कर्शनं तथा' इत्युक्तम् । तत्र सलज्ज इत्यपजयः, मृत्युरित्युच्छेदनम्, मृत इति पीडनम्, परितप्त

उत्तिष्ठेत वधाय नः परिभवप्रेद्धेन चेन्मन्युना
नेष्टे तत्प्रसरं निरोद्धुमुदधिस्तिग्मांशुवीर्यो हि सः।
किंतु प्राक्प्रतिपन्नरावणसुहृद्भावेन भीमौजसा
शत्रुर्वज्रधरात्मजेन हरिणा घोरेण घानिष्यते ॥ ६ ॥

अनेन प्रसङ्गेन बह्वनुसंधातव्यम्।

---

इति कर्शनं चोक्तम् ॥ ५ ॥ पक्षान्तरमाह—**उत्तिष्ठेतेत्यादि** । अत्रापि राम इत्यादिः । रामः परिभवप्रेद्धेन सीतापहाररूपतिरस्कारप्रदीप्तेन पूर्वमेवेन्द्रादिपीडनेन मन्युः, मुनिपीडनेन तस्य दीप्तत्वम्, सीतापहरणेन तु प्रदीप्तत्वमिति भावः । मन्युना क्रोधेन हेतुना शत्रुकृतापराधादिना मनःप्रज्वलनं क्रोधो नोऽस्माकं वधाय । न इत्येतन्मध्यमणिन्यायेन वधपरिभवाभ्यामन्वेतव्यम् । उत्तिष्ठेत चेदुद्युङ्क्ते चेत् । 'उदोऽनूर्ध्वकर्मणि' इत्यात्मनेपदम् । 'उत्थानं पौरुषे तन्त्रे संनिविष्टोद्गमेऽपि च' इत्यमरः । उदधिः समुद्रस्तस्य रामस्य प्रसरमस्मात्प्रतिप्रस्थानम् । 'स्यादासारः प्रसरणम्' इत्यमरः । प्रसरणशब्दः प्रसरशब्दश्च पर्यायौ । निरोद्धुं निवर्तयितुं नेष्टे न शक्नोति । 'ईश नियमने' शपो लुक् । हि यस्मात्स रामस्तिग्मांशुवीर्यः सूर्यसदृशप्रतापः । भवतीति शेषः । 'वीर्यं बले प्रभावे च' इत्यमरः । यद्यपि रामेणोत्थानेऽप्यस्माकं जलदुर्गः समुद्रोऽस्त्येव । यथोक्तम्—'औदकं पार्वतं वार्क्षमैरिणं धान्वनं तथा । शस्तं प्रशस्तमतिभिर्जलदुर्गोपचिन्तकैः ॥' इति । 'तेषां मध्ये सप्त महादुर्गाणीत्यपरे जगुः । गिरिदुर्गं वनाढ्यं च सलिलं पङ्कदुर्गकम् ॥ ऐरिणं देवदुर्गं च मिश्राख्यमिति सप्तधा ॥' इति च, तथापि रामस्य तदकिंचित्करम् । सूर्यवत्तस्य जलशोषणसमर्थत्वादिति भावः । एवं शूर्पणखाभिप्रेतं समुद्रदुर्गपक्षं दूषयित्वा स्वपक्षमाह—किंत्विति । प्राक्प्रतिपन्नरावणसुहृद्भावेन पूर्वमेव स्वीकृतरावणसख्येन भीमौजसा रावणस्यापि भयहेतुबलयुक्तेन । 'ओजः शब्दगुणे ज्ञाने बले गर्वप्रकाशयोः' इति रत्नमाला । घोरेण रामस्यापि भयस्थानभूतेन वज्रधरात्मजेनेन्द्रपुत्रेण हरिणा वानरेण । वालिनेति फलितम् । शत्रू रामो घानिष्यते हनिष्यते । 'हन हिंसायाम्' इत्यस्मात्कर्मणि लृट्, 'स्यसिच्—' इत्यादिना चिण्वद्भावाद्वृद्धिरिडागमश्च । 'अचिण्णलोः—' इत्युक्तेश्चिणि तकारादेशाभावः कुत्वं च । अत्र चेन्द्रात्मजस्य कथमिन्द्रपक्षरामविपक्षत्वमिति शङ्कावारणाय हरिणेत्युक्तम् । तस्य कापेयात्पितृपक्षविप्रतिपक्षत्वं संभवतीति भावः । 'एतदप्यस्य कापेयं यदर्कमुपतिष्ठति' इति न्यायोऽत्राभिप्रेतः । ननु दुर्बलस्य तस्य कथं रामप्रत्यनीकत्वमिति शङ्कावारणाय भीमौजसेति । तादृशबलाधिक्ये को हेतुरिति शङ्कावारणाय वज्रधरेति । ननु तथापि स्वस्मादधिकबलं रामं स कथं हनिष्यतीति शङ्कावारणाय घोरेणेति । समुद्गतानां सर्वेषामपि बलाकर्षणेनोपचीयमानबलत्वं घोरत्वम्, अतो रामबलमप्याकर्षेदिति हृदयम् । ननु तथापि रावणकार्यं कुतः स करिष्यतीति शङ्कावारणाय प्रतिपन्नरावणसुहृद्भावेनेति । 'शरीरं वसु विज्ञानं मित्रार्थं संपरित्यजेत्' इत्युक्तेर्मित्रकार्यं करिष्यत्येवेति भावः । ननु तथापि रामेण वालिनो

**शूर्पणखा**—किं[1] विअ ।

**माल्यवान्**—रावणप्रियासि वत्से, कार्यज्ञा च । ततो निःशङ्कमावेद्यते हृदयखेदः ।

> क्षितेरानन्तर्यादपकृदपकृत्यश्च सततं
> द्विधा रामः शत्रुः प्रकृतिनियतः क्षत्रिय इति ।
> तृतीयो मे नप्ता रजनिचरनाथस्य सहजो
> रिपुः प्रत्यासत्तेरहिरिव भयं नो जनयति ॥ ७ ॥

---

१. किमिव ।

---

मित्रीकरणे स कथं रामं हनिष्यतीति शङ्कावारणाय प्रागिति । पूर्वमेव वालिनो रावणेन मित्रीकरणात्तस्याप्रमित्रारिणा रामेण मित्रीकरणमेव न घटत इति भावः । अतो निर्दोषोऽयं पक्ष इति हृदयम् । एवं षाड्गुण्ये चरमोद्दिष्टः समाश्रयः कर्तुं युक्त इत्युक्तम् । समाश्रयो ह्यरिणा पीड्यमानस्य बलवदाश्रयणरूपः । अत्रेष्टार्थोपायानुसरणादाक्षेपो नाम संध्यङ्गमुक्तम् । यथोक्तम्—'इष्टार्थोपायानुसरणमाक्षेपः' इति ॥ ६ ॥ एवं परपक्षभयेऽपहृतेऽपि रावणस्य स्वपक्षभयं यदीदमित्याशङ्क्य परिहरति—अनेन प्रसङ्गेनेत्यारभ्य नोपेक्षेत्यन्तेन । अनेन प्रसङ्गेन । परपक्षोभयोपन्यासप्रयुक्तोपस्थितिविषयत्वे सत्युपेक्षानर्हत्वरूपेणोपस्थितस्योपेक्षानर्हत्वं हि प्रसङ्गः । बहुविस्तरेण वक्ष्यमाणमर्थजातमनुसंधातव्यं निरूपयितव्यम् ॥ **रावणप्रियेति** । कार्यं जानातीति कार्यज्ञा । 'आतोऽनुपसर्गे कः' इति कः । निःशङ्कं परेभ्यः कथनशङ्कारहितं यथा तथा हृदयखेद आवेद्यते कथ्यते । तुभ्यमिति शेषः । अत्र मित्रं त्रिविधम्—कृत्रिमं सहजं प्राकृतं चेति । एवं शत्रुस्त्रिविधः—कृत्रिमः सहजः प्राकृतश्चेति । तत्रोपकारात्मकक्रियया निवृत्तं कृत्रिमं मित्रम् । एकशरीरजातं मित्रं सहजमित्रम्, तच्च मातृष्वसेयपैतृष्वसेयादिरूपं प्रकृत्या स्वभावेन सिद्धम् । पूर्वोक्तकृत्रिममित्रत्वरहितं मित्रं प्राकृतमित्रम् । तच्च विषयानन्तरराजरूपम् । एवमपकारक्रियया निर्वृत्तः शत्रुः कृत्रिमः, एकशरीरजातः पितृव्यतत्पुत्रादिरूपः सहजशत्रुः, विषयानन्तरः प्राकृतशत्रुः । तत्र रामो रावणस्य न सहजशत्रुः क्षत्रियत्वात्, किंतु विषयानन्तरत्वात्प्राकृतः शत्रुः । अपकर्तृत्वादिना च कृत्रिमशत्रुर्भवति । विभीषणस्तु रावणस्य सहजशत्रुत्वाद्रामस्य तु गुणतः प्रत्यासन्नः रावणस्यापकुर्यादिति भयस्थानमित्याह—**क्षितेरानन्तर्यादित्यादिना** । क्षत्रियो रामः क्षितेरानन्तर्यात्पूर्वोक्तभूम्यनन्तरत्वाद्धेतोः प्रकृतिनियतः स्वभावसिद्धः । प्राकृत इति यावत् । किंचापकृदपकृत्यश्चेत्यपकर्तापकार्यश्चेति । कृत्रिमश्चेति यावत् । द्विधा शत्रुः प्राकृतत्वकृत्रिमत्वरूपप्रकारद्वययुक्तः शत्रुः । रावणस्य भवतीति शेषः । क्षत्रियपदं सहजशत्रुत्वाभावविवक्षया क्षत्रियो रामः क्षितेरानन्तर्यात्प्रकृतिनियत इत्यपकृदपकृत्यश्चेति द्विधा शत्रुर्भवतीति योजना । **रजनिचरनाथस्य सहजो रिपुः** । भ्रातृत्वादिति शेषः । मे तृतीयो नप्ता मम

कुम्भकर्णस्तु सन्नप्यसत्समः कृत्रिमस्वापव्यसनादविनयाच्च । विभीषण-स्त्वाभिगामिकात्मगुणसंपन्न इत्येनमनुरताः प्रकृतयः । खरदूषणप्रभृतयस्तु संघवृत्तयो राजानमुपतिष्ठन्ते, यतस्तेन वत्सेनेव राजानमर्थान्दुह-न्ति । उपजापिताश्च प्रत्युपजपन्ति प्रकृतयः । तदिदमन्तर्भेदजर्जरं

---

तृतीयो दौहित्रः । विभीषण इत्यर्थः । प्रत्यासत्तेर्गुणतो रामप्रत्यासत्तेः, देशतो दायादतश्च रावणप्रत्यासत्तेः संनिकर्षादहिरिवैकाश्रयाश्रितः सर्प इव नोऽस्माकं भयं भाव्यनर्थशङ्कां जनयत्युत्पादयति । अतः स्वपक्षप्रभवभयं वर्तत इति भावः । अहिरिवेत्यनेनाहिभयशब्दोऽहेरिव भयमिति व्युत्पत्त्या स्वपक्षप्रभवभये निरूढ इति ध्वनितम् । 'महीभुजामहिभयं स्वपक्षप्रभवं भयम्' इत्यमरश्च । अत्र शङ्कात्रासयोरुक्तेः संभ्रमो नाम संध्यङ्गमुक्तम् । यथोक्तम्—'शङ्कात्रासौ च संभ्रमः' इति ॥ ७ ॥ ननु कुम्भकर्णः कथं न शङ्क्यते, कथं विभीषणाद्भयं तेन न निवर्त्येतेत्यत्राह—**कुम्भकर्णस्त्वति** । कृत्रिमस्वापव्यसनाद्ब्राह्मवरात्मकक्रियया निर्वृत्तनित्यनिद्रादुःखादविनयाच्च किंचिज्जागरे चात्याहारादिकरणेन मदोत्कटत्वाच्च सन्नप्यसत्सम इत्यन्वयः । विभीषणस्य भयहेतुत्वं विवृणोति—**विभीषणस्त्वि-त्यादिना** । विभीषणस्तु । तुशब्दः कुम्भकर्णाद्व्यावृत्तिद्योतकः । अभिगमाय प्रभ-वन्तीत्याभिगामिकाः । 'तस्मै प्रभवति सङ्ग्रामादिभ्यः' इति ठक्प्रत्ययः । अमात्या-दिकर्तृकाभिगमहेतुभूता इत्यर्थः । तथाविधैरात्मगुणैः संपन्नः समृद्ध इति हेतोरेनं पूर्वोक्तं विभीषणम् । अन्वादेशे इदम एनादेशः । प्रकृतयोऽमात्या अनुरताः । अनु-रक्ता इत्यर्थः । एवमिति 'लक्षणेत्थंभूत–' इत्यादिनानोः कर्मप्रवचनीयसंज्ञायाम् । 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीया । आभिगामिकगुणवर्गश्च कामन्दकीये दर्शितः—'सुशीलत्वं वयस्यत्वं दाक्षिण्यं क्षिप्रकारिता । अविसंवादिता सत्यं वृद्ध-सेवा कृतज्ञता ॥ दैवसंपन्नताबुद्धिरक्षुद्रपरिवारता । शक्यसामन्तता चैव तथैव दृढभ-क्तिता ॥ दीर्घदर्शित्वमुत्साहः शुचिता स्थूललक्षता । विनीतता धार्मिकता गुणाः साध्वाभिगामिकाः ॥ गुणैरेतैरुपेतः सन्सुव्यक्तमभिगम्यते ॥' इति । 'अमात्यराष्ट्रदु-र्गाणि कोशो दण्डश्च पञ्चमः । एताः प्रकृतयस्तज्ज्ञैर्विजिगीषोरुदाहृताः ॥' इति प्रकृतयोऽपि तत्रैव दर्शिताः । **खरदूषणप्रभृतयस्त्वति** । संघेन वृत्तिर्जीवनं येषां ते तथोक्ताः । प्रत्येकं बुद्धिसामर्थ्यशून्या इत्यर्थः । राजानं स्वामिनमुपतिष्ठन्ते भजन्ति । तिष्ठतेः 'वा लिप्सायाम्' इत्यात्मनेपदम् । यतो यस्माद्धेतोस्तेन संघेन । वत्सेनेव धेनुमिति शेषः । राजानमर्थान्दुहन्ति । दुहिर्द्विकर्मकः । धेनोर्वत्समिव राज्ञः संघं दर्शयित्वा धेनोः सकाशात्पय इव राज्ञः सकाशात्प्रयोजनानि संपादयन्त इत्यर्थः । प्रयोजनार्थिनां तेषां स्वामिनियमो न विवक्षित इति भावः । यद्वा तेन विभीषणेन वत्सेनेवेत्यादिपूर्ववत् । सहजरिपुमिममेवावष्टभ्य कदाचित्पृथग्भवेयुरिति शङ्कमानाद्राज्ञः स्वप्रयोजनानि लभन्त इति भावः । तर्हि सुखान्तरेण प्रकृतयो विभीषणाद्भेद्यन्तामित्यत्राह—**उपजापिता इति** । प्रकृतयोऽमात्यादय उपजापिताः

राजकुलमभियुक्तमात्रं रामेण भिद्यते । यथोक्तम्—'लघ्वपि व्यसनपदमभियुक्तस्य कृच्छ्रसाध्यं भवति' इति । तत्र विभीषणावग्रहस्य प्रतिविधानं कर्तव्यम् । स तु प्रकाशदण्डस्तूष्णींदण्डः संरोधनमपसारणं वा स्यात् । तत्र प्रकाशमभिन्नसंबन्धाः कथं राक्षसास्तितिक्षेरन् । तूष्णींदण्डोऽपि प्राज्ञैरनुमीयमानः प्रकृतिकोपको रामेऽभियोक्तरि दुरन्तः स्यात् ।

---

सत्यः प्रत्युपजपन्ति । भेदकानेव विभीषणानुगुण्येन भिन्द्युरित्यर्थः । 'भेदोपजापौ' इत्यमरः । विभीषणगुणग्राहिण्यः प्रकृतयो रावणदोषानुसंधानाद्भेदकानेव भिन्द्युरिति भावः । 'अलब्धवेतनो लुब्धो मानी चाप्यवमानितः । क्रुद्धश्च कोपितोऽकस्मादभीतश्चापि भीषितः ॥ यथाभिलषितैः कामैर्भिन्द्यादेनांश्चतुर्विधान् ॥' इत्युक्तप्रकारो हि भेदोपायः । तत्र विभीषणस्य स्थूललक्ष्यत्वलक्षणाभिगामिकगुणसंपन्नत्वादत्र नालब्धवेतनः कश्चित्संभवति । अक्षुद्रपरिवारत्वाच्च नास्य परिवारो लुब्धः संभवति । विनीतत्वाच्चास्य नावमानितोऽनेन कश्चित्संभवति । दाक्षिण्यसंपन्नत्वाच्चास्य न कोपितोऽनेन कश्चिदस्ति । धार्मिकत्वाच्चास्य नास्माद्भीतः कश्चिदपि परिवारोऽस्तीति तत्रोपजापो दुर्घट इति । किंतु तत्पक्षीयैः प्रत्युपजाप एव संभावित इति हृदयम् । **तदिदमिति** । तत्तस्माद्धेतोरन्तर्भेदेन स्वजनैर्मिथो वैमत्येन जर्जरमन्तः शिथिलं राजकुलं रावणगृहं रामेणाभियुक्तमात्रं युद्धायाभियातमेव सत् । न तूपजापितमित्यर्थः । भिद्यते स्वयमेव भिन्नं भविष्यति । कर्मकर्तरि प्रयोगः । विस्पष्टवैमत्यतत्पूर्वपृथग्भावादियुक्तं भवेदिति भावः । अस्मिन्नर्थे नीतिशास्त्रसंवादमाह—**यथोक्तमित्यादिना** । लघ्वपि स्वल्पमपि व्यसनपदं भ्रंशस्थानं कामक्रोधप्रभवदोषस्थानं वा । 'व्यसनं विपदि भ्रंशे दोषे कामजकोपजे' इत्यमरः । व्यसनस्थानमित्यन्तर्भेदोऽभिप्रेतः । अभियुक्तस्य परेणाभियातस्य । इदं पूर्वोत्तरान्वयि । अभियुक्तस्य व्यसनपदमभियुक्तस्य कृच्छ्रसाध्यं भवति दुःखेन प्रतिकार्यं भवति । 'साधनमनुगमगत्योः शेफसि सिद्धौ निवृत्तिदापनयोः । मृतसंस्कारे हेतौ धनहिंसायातनासु सेनाङ्गे ॥' इति रत्नमाला । साधयतिरत्र निर्वृतौ च वर्तते । तत्र भेदे सति विभीषणावग्रहस्य विभीषणपृथग्भावस्य पदच्छेदवाचिनोऽवग्रहशब्दस्यात्र पृथग्भावमात्रपरत्वम् । प्रतिविधानं प्रतीकारः । तत्र न तावज्ज्येष्ठेन कनिष्ठे सामप्रयोग उचितः । नापि दानं संसृष्टित्वात् । भेदस्तु न घटत इति पूर्वमेवोक्तमित्यभिप्रायेणाह—**स तु प्रकाशदण्ड इति** । विधेयप्राधान्यात्पुंलिङ्गता । सः । प्रतिविधानमित्यर्थः । प्रतिविधानशब्दाभिप्रायेण वा स इति पुंस्त्वम् । 'उद्देश्यप्रतिनिर्देश्ययोरेकत्वमापादयन्ति सर्वनामानि तत्तल्लिङ्गमुपपादयन्ति कामचारे' इति शाब्दिकोक्तेः संरोधनान्वयित्वेऽपि पुंलिङ्गत्वम् । प्रकाशदण्डस्तूष्णींदण्डश्च पूर्वमेव व्याख्यातौ । संरोधनं कारागृहबन्धनम् । अपसारणं नगरान्निर्वासनम् । तत्र तेषु प्रकाशदण्डादिषु चतुर्षु प्रकाशं प्रकाशदण्डमभिन्नसंबन्धाः समानस्वस्वामितादिसंबन्धाः कथं तितिक्षेरन्कथं सहेरन् । 'तिजेः क्षमायाम्' इति सन् ।

संरोधने त्वभिभवाद्विहिते तदैक-
मत्यात्खरप्रभृतयश्च तथा विकुर्युः ।
निर्वास्यमानमपि तं परिवारयेयु-
स्तस्मात्खरप्रभृतयः पुर एव चिन्त्याः ॥ ८ ॥

**शूर्पणखा**—अहो अनुजीवित्तणस्स गुरुअदा, जं रावणस्स खर-प्पमुहाणं अ तुल्ले अण्णोण्णसंबन्धे एव्वं मादामहो चिन्तेदि ।

---

१. अहो अनुजीवित्वस्य गुरुकता, यद्रावणस्य खरप्रमुखानां च तुल्येऽन्योन्यसंबन्ध एवं मातामहश्चिन्तयति ।

---

तूष्णींदण्डोऽपि प्राज्ञैरूहापोहकुशलैरनुमीयमानो लिङ्गेन ज्ञायमानः सन्प्रकृतीनाममात्यादीनां कोपको मनःप्रज्वलनहेतुः । 'तत्प्रयोजकः–' इति भाष्यसूत्रयोः प्रयोगात् 'तृजकाभ्यां कर्तरि' इति समासनिषेधस्यानित्यत्वात्प्रकृतिकोपक इति षष्ठीसमासः साधुः । शेषषष्ठ्या वा समासः । रामेऽभियोक्तरि सति सेनयाभियाते सति दुरन्तः स्यादप्रतिविधेयः स्यात् । 'अन्तोऽस्त्री निश्चये नाशे सुरूपेऽग्रेऽन्तिकेऽन्तरे' इति रत्नमाला । अत्र लिङ्गाद्यूहनोक्तेऽनुमानं नाम संध्यङ्गमुक्तम् । यथोक्तम्—'लिङ्गाभ्यूहनमनुमानम्' इति । **संरोधन इति** । संरोधने विहिते सति त्वभिभवाद्धेतोरिदं विकुर्युरित्यत्रान्वेति । तत्र हेतुः—यदैकमत्यादिति । तेन विभीषणेन सहाभिन्नमतत्वात्खरप्रभृतयोऽपि विकुर्युः क्रोधादिरूपां विकृतिं प्राप्नुयुः । अतस्तन्न युक्तमिति भावः । किंच खरप्रभृतयो निर्वास्यमानं नगरान्निष्कास्यमानं तं विभीषणं परिवारयेयुर्मध्ये कुर्युः । अतस्तन्निर्वासनमपि न युक्तमिति भावः । अतः खरादीनां प्रकाशदण्डादिचतुष्टयपरिपन्थित्वात्तत एव पुरतश्चिन्त्या इत्याह—तस्मादिति । पुर एव पूर्वमेव चिन्त्याः । भयस्थानत्वेन शङ्कनीया इत्यर्थः ॥ ८ ॥ तत्र खरादिविषये रामस्योपयोगः । चिकीर्षितकार्यहेतुत्वं स्यादिति शेषः । केनचिदपदेशेन खरादिषु रामेण व्यापादितेषु विभीषणस्यापसारणादिकं सुशङ्कमिति प्रथममस्माभिरुपायतो रामेण खरप्रभृतयो घातयितव्या इति रामस्यास्मचिकीर्षितोपयोग इति भावः । अत्र खरप्रभृतीष्टजनातिसंधानादतिबलं नाम संध्यङ्गमुक्तम् । यथोक्तम्—'इष्टजनातिसंधानमतिबलम्' इति ॥ अनुजीवित्वस्यामात्यभावेन रावणापेक्षजीविकायाः । गुर्वेव गुरुकम् । यद्वा कुत्सितं गुरुकम् । 'कुत्सिते' इति कन् । बन्धुषु वैषम्यप्रयोजकत्वात्कुत्सितत्वम् । गुरुकस्य भावो गुरुकता । अहो । विस्मयनीयेत्यर्थः । तुल्येऽन्योन्यसंबन्धे । त्वयेति शेषः । मातामहदौहित्रादिसंबन्धे समाने सतीत्यर्थः । एवं छद्मना खरादिवधं मातामहश्चिन्तयति । त्वं चिन्तयसीत्यर्थः ॥ कुलपुत्रकाणां सद्वंशजातानामत्यन्तबालानामप्याचारोऽनुष्ठानमीदृशः खलु । स्वामिकार्यैकतत्पर इति प्रसिद्धमित्यर्थः ॥ खरप्रमुखैर्विना । तेषामभावे विभीषणस्य कः कर्तव्याध्यवसाय इत्यर्थः ॥ प्राज्ञः खलूहापोहकुशलः किलासौ विभीषणः स्वयमेवावेक्षितविकारोऽनुमितास्मद्विरुद्धाभिप्रायः सन्नपसर्पेत् ।

**माल्यवान्**—ईदृशः खलु कुलपुत्रकाचारः ।

**शूर्पणखा**—विणा खरप्पमुहेहिं विभीसणस्स का पडिवत्ती ।

**माल्यवान्**—प्राज्ञः खल्वसाववेक्षितविकारः स्वयमेवापसर्पेत्, उपेक्षणीयस्त्वमस्माभिः । न चैवं मन्तव्यमौरसाद्भयमिति । यतः ।

बाल्यात्प्रभृत्येव निरूढसख्यं
सुग्रीवमेष ध्रुवमाश्रयेत ।
वालिप्रसादीकृतभूमिभागे
कुमारभुक्तौ स्थितमृष्यमूके ॥ ९ ॥

तत्रस्थो वालिना घानिष्यते । रामोपाश्रयेण वा रामोपश्लेषेण वा नोपेक्षेत वाली ।

---

१. विना खरप्रमुखैर्विभीषणस्य का प्रतिपत्तिः ।

---

नगरादिति शेषः । उपेक्षणीयस्त्वस्माभिः । तुशब्दः पक्षान्तरद्योतकः । अथवास्माभिरुपेक्षणीयः । नानुग्राह्यो न निग्राह्यश्चेत्यर्थः । न चैवं मन्तव्यमौरसाद्भयमिति । स्वयमवेक्षितास्मद्विकारतयापसर्पतोऽप्यस्मादौरसाद्बन्धुभूतादेकाकिनो विभीषणाद्भयमकिंचित्करमिति च मन्तव्यमेवेत्यर्थः । तत्र हेतुमाह—**यत इति** । **बाल्यादिति** । एष विभीषणो बाल्यात्प्रभृति बाल्यादारभ्य निरूढसख्यं प्रवृद्धमैत्रीकं वालिना प्रसादीकृतेऽनुग्रहत्वेन दत्ते भूमिभागे भूमेरेकदेशे । कुमारैर्भुज्यत इति कुमारभुक्तिः । भुजेः कर्मणि क्तिन् । कुमारभुक्तिर्नाम कुमाराणां राजभिः कल्पिता वृत्तिः सुग्रीवस्य वालिनं प्रत्यनुजत्वात् 'ज्येष्ठभ्राता पितृसमः' इति न्यायेन सुग्रीवस्य तं प्रति कुमारत्वात्तद्दत्तभूभागस्य कुमारभुक्तित्वोक्तिः । धावनं व्याजमात्रं प्रसादेनैव वाली सुग्रीवस्यर्ष्यमूकमनुमन्यत इति हृदयम् । ऋष्यमूके स्थितं सुग्रीवमाश्रयेत । संभावनायां लिङ् । ध्रुवमित्यपि संभावनायाम् । ज्येष्ठभ्रात्रा विरोधस्योभयोरविशिष्टत्वाच्च सुग्रीवाश्रयणं संभावितमित्यर्थः ॥ ९ ॥ एवमपि नास्माकं क्षतिरित्याह—तत्रस्थो वालिना घानिष्यते । चिण्वद्भावाद्वृद्धिः । दुर्बलमिमं सुग्रीवमिवोपेक्षेत वालीत्यत्राह—**रामेति** । रामो हृतभार्यः कदाचिदेकाकी मैत्र्या तत्रागच्छेत्, तं च सुग्रीवः समाश्रयेत्, विभीषणो वा साक्षादाश्रयेत् । ततश्च प्रबलं रामं प्रति संधाय प्रागेव वाली विभीषणं सुग्रीवेण सह हन्यात्स्वमित्ररावणारित्वात्, स्वशत्रुसुग्रीवमित्रत्वात्, स्वमित्ररावणशत्रुराममित्रत्वाच्चेति भावः । रामोपाश्रयेण साक्षादेव रामाश्रयणेन रामोपश्लेषेण सुग्रीवद्वारा तदाश्रयणेन हेतुना नोपेक्षेत । उपेक्षितुं नार्हति । तमिति शेषः ॥ एवं माल्यवता स्वपक्षप्रभवं भयमाशङ्क्य परिहृतम् । तत्र शूर्पणखा प्रकारान्तरेण शङ्कते—अथेति पक्षान्तरप्रस्तावे । व्यापादयति हन्ति । 'व्यापादो द्रोहचिन्तनम्' इत्यमरः । 'द्रुह जिघांसायाम्' इति धातुपाठः । परशुराममिवेत्यनेन शङ्काबीजमुप-

**शूर्पणखा**—अह परसुरामं विअ राहवो जणिअविरोहं वालिणं वावादेदि, तदो रामविभीसणसंओओ अणत्थो त्ति संभावेमि ।

**माल्यवान्**—ननु वत्से,

> यो वालिनं हन्ति हता वयं च
>
> तेन ध्रुवं तत्र तु सर्वनाशे ।
>
> एकः स जीव्यात्कुलतन्तुरस्मै
>
> रामः श्रियं धर्ममयो ददातु ॥ १० ॥

**शूर्पणखा**—(सास्रम् ।) एव्वं वि दाव होदु ।

**माल्यवान्**—गम्यतामिदानीं यत्र प्रेषितासि । सुकरं चैतत्प्रयोजनं यदि जनकदशरथान्तिके वसिष्ठविश्वामित्रौ न स्याताम् । अहमपि लङ्कामेव गच्छामि ।

---

१. अथ परशुराममिव राघवो जनितविरोधं वालिनं व्यापादयति तदा रामविभीषणसंयोगोऽनर्थ इति संभावयामि ।

२. एवमपि तावद्भवतु ।

---

न्यस्तम् । रामो वालिनं जेष्यति । वालिनोऽधिकपरशुरामजिष्णुत्वादिति च तद्बीजम् । एवं परशुरामो वालिनोऽधिको रावणजेतृतया वालितुल्यकार्तवीर्यजेतृत्वादिति च शङ्काङ्गशङ्कान्तरमित्यभिप्रेतम् । राघव इति स्वाभिप्रायशरणागतरक्षणव्रततया प्रसिद्धरघुवंशप्रभवो रामः शरणागतौ विभीषणसुग्रीवावपेक्ष्य वालिनं हनिष्यतीत्यभिप्रायेण राघव इत्युक्तम् । अत्राप्यनुमानं नाम संध्यङ्गमुक्तम् ॥ य इति । यो वालिनं हन्ति तेन वयं च हताः । भवाम इति शेषः । ध्रुवमिति संभावनायाम् । अत्र यो हन्ति तेन हता इति सामान्योक्त्या रामो रावणादीनस्मान्हनिष्यति रावणजेतृवालिहन्तृत्वादित्यनुमानं विवक्षितम् । तेन रामेण सर्वनाशे सर्वेषां रावणादीनां वधे सति सर्वेषां नाश इति शेषषष्ठ्या समासः । 'कर्मणि च' इत्युभयप्राप्तौ षष्ठ्याः समासनिषेधात् । कुलतन्तुर्नष्टस्य वृद्धिहेतुः सूक्ष्मांश एकः स विभीषणो जीव्यात्सप्राणो भूयात् । आशिषि लिङ् । अस्मै विभीषणाय धर्ममयो धर्मप्रचुरो रामः श्रियं लङ्कैश्वर्यं ददातु । आशिषि लोट् । अत्र तत्त्वार्थानुकीर्तनान्मार्गो नाम संध्यङ्गमुक्तम् । यथोक्तम्—'तत्त्वार्थानुकीर्तनं मार्गः' इति ॥ १० ॥ एवमपि तावद्भवतु । अपिशब्दोऽनुकल्पत्वद्योतकः । रावणमृतिर्मुख्यः कल्पः तदलाभेऽपि विभीषणामृतिरनुकल्पोऽप्याशास्यत इत्यर्थः ॥ यत्र प्रेषितासि । मिथिलायामिति शेषः । सुकरं सुखेन कर्तुं शक्यमेतत्प्रयोजनं मन्थराशरीरावेशादिकम् । यदि जनकेत्यादि । यदि न स्यातां तदा सुकरमिति संबन्धः । अनेन चोत्तराङ्के प्रवेशतां जनकादीनां चतुर्णां मध्ये वसिष्ठविश्वामित्रयोर्नि-

**शूर्पणखा**—हा अम्ब, तुएवि दुक्खं पेक्खिदव्वम् ।

**माल्यवान्**—

हा वत्साः खरदूषणत्रिशिरसो वध्याः स्थ पापस्य मे
हा हा वत्सविभीषण त्वमपि मे कार्येण हेयः स्थितेः ।
हा मद्वत्सल वत्स रावण महत्पश्यामि ते संकटं
वत्से केकसि हा हतासि नचिरात्रीन्पुत्रकान्द्रक्ष्यसि ॥ ११ ॥

(इति निष्क्रान्तौ)

**मिश्रविष्कम्भः ।**

(ततः प्रविशतो वसिष्ठविश्वामित्राभ्यां सह दशरथजनकौ ।)

(राजानावन्योन्यं परिष्वज्य ।)

**जनकः**—राजन्, दिष्ट्या वर्धसे यदीदृशस्ते वत्सो रामभद्रः ।

---

१. हा अम्ब, त्वयापि दुःखं प्रेक्षितव्यम् ।

---

र्गमः सूचितः । अत्राङ्कास्यमुक्तमिति द्रष्टव्यम् ॥ **हा अम्बेति** । दुःखं प्रेक्षितव्यम् । विभीषणमात्रपरिशेषस्य भावित्वादिति भावः ॥ **हा वत्सा इति** । हे वत्साः खरदूषणप्रभृतयः । यूयमित्यध्याहारः । पापस्य बन्धुवधप्रयोजककुटिलनयनिष्णाततताहेतुदुरितप्रचुरस्य मे मया । 'कृत्यानां कर्तरि वा' इति षष्ठी । वध्या हन्तव्याः स्थ भवथ । अस्तेर्मध्यमपुरुषबहुवचनम् । हा दुःख्यते । 'हा विषादशुगर्तिषु' इत्यमरः । वत्स विभीषण, त्वमपि कार्येण रावणकार्येण मे पापेन मया स्थितेः स्थानात् । 'स्थानमर्यादयोः स्थितिः' इति रत्नमाला । हेयस्त्याज्यः । भवसीति शेषः । हा हा इति द्विरुक्तिर्विषादातिशये । मयि वत्सल प्रीतिमन् । 'वत्सांसाभ्यां कामबले' इति वृत्तिविषये प्रीतिवाचकाद्वत्सशब्दान्मत्वर्थीयो लच्प्रत्ययः । वत्स । दौहित्रत्वाद्वत्सशब्दः । ते महत्संकटं दुःखसंबाधम् । 'संकटं ना तु संबाधः' इत्यमरः । पश्यामि न्यायदृष्ट्या निश्चिनोमि । वत्से, ज्येष्ठभ्रातुः पुत्रि । केकसीति रावणमातुर्नाम । हतासि । 'पुत्रोत्पत्तिविपत्तिभ्यां न परं सुखदुःखयोः' इति प्रसिद्धिरिति भावः । हा दुःख्यसे नचिराच्छीघ्रमेव त्रीन्पुत्रकान्खरकुम्भकर्णरावणान् । खरः केकस्याः स्वसृपुत्रः । अनुकम्पायां कन् । द्रक्ष्यसि । रामेण हतान्प्रेत्य त्वत्समीपगमनादिति भावः ॥ ११ ॥ **मिश्रविष्कम्भः** । संस्कृतप्राकृतात्मकविष्कम्भः ॥ अथाङ्कः प्रस्तूयते—**ततः प्रविशत इत्यादिना** । राजानौ जनकदशरथौ । परिष्वज्यालिङ्ग्य । दिष्ट्येत्यानन्दे । वर्धसे श्रेयस्वी भवसि । पुत्रविषयाज्जामातृविषयाच्च श्रेयस्त्वितम् । ईदृशः परशुरामस्यापि विनेता ते वत्सः । जामातुरपि पुत्रप्रायत्वाज्जनकं प्रति वत्सलम् । जामाता हि श्वशुरस्य शिष्यत्वात्पुत्रस्थानीयः । तदाह भागवते दक्षः—'एष मे शिष्यतां प्राप्तो यन्मे दुहितुरग्रहीत् । पाणिं विप्राग्निमु-

अप्राकृतानि च गुणैश्च निरन्तराणि
लोकोत्तराणि च फलैश्च महोदयानि ।
वीरस्य तस्य महतश्चरिताद्भुतानि
नास्माकमेव जगतामपि मङ्गलानि ॥ १२ ॥

**वसिष्ठः**—(विश्वामित्रं परिष्वज्य ।) सखे कुशिकनन्दन,
अस्माभिरप्यनाशास्यो रामस्य महिमान्वयः ।
यत्कृतास्तेन कृतिनो वयं च भुवनानि च ॥ १३ ॥

**विश्वामित्रः**—प्रकृष्टपुण्यपरिपाकोपादान एष महिमा । के वयमेतावतः प्रकृष्टस्य ।

**दशरथः**—भगवन् कुशिकनन्दन, मा मैवम् ।
आदित्याः कुलदेवतामिव नृपाः पूर्वे दिलीपादय-
स्तेजोराशिमरुन्धतीपतिमृषिं भक्त्या यदाराधयन् ।

---

स्वतः साविश्या इव साधुवत् ॥' इति । **अप्राकृतानीति** । अप्राकृतानि दिव्यानि गुणैर्ज्ञानादिभिः शौर्यादिभिर्विनयादिभिः सौन्दर्यादिभिश्च निरन्तराणि निबिडानि लोकोत्तराणि सर्वाभ्यर्हितानि फलैश्च महोदयानि महाफलजनकानि संप्रत्यसंनिकर्षात्तस्येत्युक्तम् । चरिताद्भुतानि चरितरूपाण्याश्चर्याण्यस्माकमेवावयोरेव मङ्गलानि भवन्तीति न । किंतु जगतामपि मङ्गलानि भवन्तीत्यर्थः । अगर्हितेष्टार्थसिद्धिर्मङ्गलम् ॥ १२ ॥ **अस्माभिरिति** । अस्माभिः । आवाभ्यामित्यर्थः । रामस्य महिमान्वयो महिम्नो विभूतिगुणाद्यतिशयस्यान्वयः संबन्धोऽनाशास्यः । कुत इत्यत्राह—यदिति । तेन रामेण वयं कृतिनः कृताः कृतार्थाः कृताः, गुरुत्वलक्षणेन स्वसंबन्धेन परमपुरुषार्थभागिनः कृताः, भुवनानि च कृतार्थानि कृतानि । कृतिन इत्यादेरनुषक्तस्य लिङ्गविपरिणामः । तदधीनाभ्युदयाभ्यामावाभ्यां न तदभ्युदय आशासनीयः, एवमन्येषामपि तदधीनाभ्युदयत्वेन तदभ्युदयकारकत्वं न संभवतीत्यर्थः ॥ १३ ॥ एष महिमा रामस्य महिमा प्रकृष्टोऽतिशयितः पुण्यपरिपाकः पुण्यस्य फलप्रदानोन्मुखीभाव उपादानं कारणं यस्य स तथोक्तः । भवतीति शेषः । 'पुण्यानामपि पुण्योऽसौ' इत्युक्तेः स्वयमेव रामः प्रकृष्टपुण्यात्मकः । ततोऽनन्याधीनोऽयं रामस्य महिमेति भावः । एतावतः परशुरामविजयपर्यन्तस्य प्रकृष्टस्यातिशयस्य के वयम् । आशासनेन निष्पादयितुमशक्ता इत्यर्थः ॥ मा मैवम् । के वयमिति वक्तुं नोचितमित्यर्थः । **आदित्या इति** । मङ्गलानां निधिर्भवान्नः प्रसन्न इति यदस्मासु कृतानुग्रह इति यत्, अयमेव पाक इति योजना । आदित्याः सूर्यवंश्याः । 'दित्यदित्यादित्य–' इत्यादिनादित्यशब्दादपत्यार्थे ण्यप्रत्यये 'हलो यमां यमि–' इति यकारलोपः । पूर्वे मत्तः प्राचीना दिलीपादयो नृपाः । कुलदेवतामिव श्रीरङ्गनाथमिव

पाकस्तस्य च याश्च भूरितपसां सत्याशिषामाशिष-
स्तासामप्ययमेव मङ्गलनिधिर्यन्नः प्रसन्नो भवान् ॥ १४ ॥

वसिष्ठः—सत्यमीदृशो विश्वामित्रः ।

यद्वाचां विषयमतीत्य चेतसां वा
पर्यायात्परमतिशायनस्य वा यत् ।
ब्रह्मर्षौ तदिह दुरासदे समिद्धं
तेजोभिर्ज्वलति महत्त्वमप्रमेयम् ॥ १५ ॥

विश्वामित्रः—भगवन् मैत्रावरुण,

---

तेजोराशिं प्रभावनिधिमृषिं सत्यवचसम् । 'मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः' इति न्यायेन मुख्यमृषिभूतमरुन्धतीपतिम् 'निधिरपि पवित्रस्य महसः' इत्युक्ताया अरुन्धत्याः पतिं वसिष्ठं भक्त्याराध्यत्वज्ञानेनाराधयन्नपूजयन् । अत्र 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ' इति श्रुतिरनुसंहिता । इति यत्तस्य च भूरितपसां प्रचुरतपसां सत्याशिषाममोघाशासनानां या आशिषः सन्ति तासामपि पाकः फलप्रदानोन्मुखीभावः । भवतीति शेषः । विधेयप्राधान्यादयमित्युद्देश्यवाचकस्य पुंलिङ्गत्वम् ॥ १४ ॥ ईदृशः । दशरथोक्तमाहात्म्ययुक्त इत्यर्थः । **यद्वाचामित्यादि** । यन्महत्त्वं वाचां चेतसां वा गिरां मनसश्च । 'वा स्याद्विकल्पोपमयोरिवार्थेऽपि समुच्चये' इत्यमरः । विषयं देशम् । 'देशविषयौ' इति चामरः । अतीत्यातिक्रम्य । 'परावरयोगे च' इति क्त्वाप्रत्ययः । 'समासे नञ्पूर्वे क्त्वो ल्यप्' इति ल्यबादेशः । वाङ्मनसागोचर इत्यर्थः । यन्महत्त्वमतिशायनस्य विश्वाधिकस्य प्रकर्षस्य । अतिपूर्वाच्छेतेर्भावे ल्युट् । 'अतिशायने तमबिष्ठनौ' इति सूत्रेऽतिशायन इति निपातनाद्दीर्घः । पर्यायादतिशयात् । 'पर्यायोऽवसरे क्रमे' इत्यमरः । क्रमवाचिना पर्यायशब्देनातिशायनार्थशब्दान्तरवाच्योऽतिशयो गृह्यते । तथा च विश्वावधिकप्रकर्षावधिकप्रकर्षादित्यर्थः । परम् । अतिशयितमित्यर्थः । विश्वावधिकप्रकर्षो यस्तदवधिकोऽपि यः प्रकर्षस्तदवधिकप्रकर्षयुक्तं च यद्भवतीति भावः । 'यद्वाचाम्' इत्यादिना प्रमाणाधिकत्वमुक्तम् । तत्र वाङ्मनसयोः संकुचितत्वविषयत्वस्वाभाव्यात्प्राप्तस्य संकोचस्य व्युदासेऽपि प्रमेयस्य स्वतः संकोचः संभाव्येत । अतः प्रमेयस्वाभाव्यादपि संकोचो नास्तीति बोधनाय पर्यायात्परमित्यादि प्रकर्षस्यात्यन्तनिरवधिकत्वविवक्षया चोत्तरोत्तरावधिनिर्देशः । तत्तेजोभिः प्रभावैः । 'तेजः प्रभावे दीप्तौ च' इत्यमरः । समिद्धं सम्यग्दीप्तम् । 'इन्धी दीप्तौ' इत्यस्मात् 'गत्यर्थ–' इत्यादिना कर्तरि क्तो नकारलोपश्च । अप्रमेयमपरिच्छेद्यम् । अत्र पर्यायात्परमित्यन्वयोक्तिः । अप्रमेयमिति व्यतिरेकोक्तिः । अतो न पुनरुक्तिः । अनेन च महत्त्वस्य प्रायिकत्वव्युदासो दुरासदो माहात्म्यातिशयात् । अस्माभिरपि समीपमासादयितुमशक्ये ब्रह्मर्षौ स्वतपसा प्राप्तमहर्षित्वयुक्ते विश्वामित्रे महत्त्वमुत्कर्षो ज्वलति दीप्यते । 'ज्वल दीप्तौ' ॥१५॥ मित्रावरुणयोरयं मैत्रावरुणः । 'तस्येदम्' इति संबन्धसामान्येऽण्प्रत्ययः । वसिष्ठस्य

सनत्कुमाराङ्गिरसोर्गुरुर्विद्यातपोमयः ।
स्तौषि चेत्तुल्य एवास्मि सत्यशुद्धा हि ते गिरः ॥ १६ ॥

रामभद्रे तु नाश्चर्यमेतत् । महाराजदशरथो हि तस्य जनयिता ।

साक्षात्पुण्यसमुच्छ्रया इव मनोर्वैवस्वतस्यान्वये
राजानस्त्वदपेक्षितेन विधिना गोपायितारः प्रजाः ।
ये भूताः प्रथमे पवित्रचरितास्तेषामयं धूर्धरो
वीरः क्षत्रियपुंगवो गुणनिधिः श्लाघ्यो धरित्र्याः पतिः ॥ १७ ॥

---

संबुद्धिः । **सनत्कुमारेति** । सनत्कुमाराङ्गिरसोः स्वज्येष्ठभ्रात्रोरपि सनत्कुमाराङ्गिरसोर्गुरुराचार्यो विद्ययाध्यात्मविद्यया तपसा कायशोषणनियमेन ब्रह्मभावनानिष्ठस्य सनत्कुमारस्य विद्योपदेष्टा । कर्मभावनानिष्ठस्याङ्गिरसस्तपसामुपदेष्टेति भावः । त्वमिति शेषः । एवंविधस्त्वं मां स्तौषि चेद्गुणवन्तं कथयसि चेत्तुल्य एवास्म्यभिधेयगुणवानेवास्मि । हि यस्मात्ते गिरः सत्या अमोघाः स्वविषयसद्भावौपयिकाः शुद्धाः पूता ज्ञातांशेष्वयाथार्थ्यरहिताः । खञ्जकुब्जादिवत्समासः । भवन्तीति शेषः । गुणिनिष्ठगुणाभिधानं हि स्तुतिः । सा यद्यपि गुणशून्ये मयि न घटते, तथापि स्तावकस्य तव सूक्तेरमोघतया मम ब्रह्मर्षित्ववन्माहात्म्यरूपेणाप्यतएव निष्पद्यत इति स्तुत्यत्वमुपपद्यत इति भावः । अत्र च देवहूतेः प्रचेतसां च स्वस्वपुत्रं कपिलादिकं प्रतीव सनत्कुमाराङ्गिरसोरपि स्वानुजं वसिष्ठं प्रत्युपपन्नं शिष्यत्वम् । तदिदं पुराणेष्वनुसंधेयम् । अतएव 'न च हि वयो जातिः प्रकृष्टानाम्' इत्येतदन्यविषयं व्यवस्थाप्यम् ॥ १६ ॥ रामभद्रमाहात्म्यं न मत्प्रयुक्तं भवद्वचनेनेदानीमेव माहात्म्यनिष्पत्तेः, किंतु पितुर्दशरथस्य संबन्धप्रयुक्तमित्याह—**रामभद्रे त्विति** । एतन्माहात्म्यं नाश्चर्यं नापूर्वम् । 'आश्चर्यमनित्ये' इति सूत्रेणापूर्ववस्तुन्याश्चर्यशब्दो निपातितः । हि यस्माद्दशरथोऽस्य जनयिता पिता । भवतीति शेषः । अतः पितृप्रभावादिदं राममाहात्म्यं नापूर्वमित्यर्थः । **साक्षादिति** । साक्षात्पुण्यसमुच्छ्रया इव प्रत्यक्षतापन्नसुकृतराशय इति संभावनार्थः । इवशब्दः संभावनायाम् । तदुक्तम्—'यदायमुपक्रमांशो लोकतोऽसिद्धिमृच्छति । तदोत्प्रेक्षैव येनेवशब्दसंभावनापरः ॥' इति । उपमानपुण्यसमुच्छ्रयाणां स्वरूपेण लोकप्रसिद्धानामपि प्रत्यक्षतापन्नत्वेन लोकेष्वसिद्धत्वादुत्प्रेक्षालंकारः । 'कर्तरि क्रियातादात्म्यसंभावनोत्प्रेक्षा' इति केचिदालंकारिकाः प्राहुः । अत्र पुण्यकर्तृषु पुण्यतादात्म्योत्प्रेक्षेयम् । त्वदपेक्षितेन त्वदिष्टेन । 'अवेक्षितेन' इति पाठे त्वया दृष्टेनेत्यर्थः । विधिना शास्त्रोक्तविधानेन प्रजा जनान्गोपायितारो रक्षितारः । प्रजारक्षणशीला इत्यर्थः । 'गुपू रक्षणे' इत्यस्मात्ताच्छीलिकस्तृन्प्रत्ययः । अत एव 'न लोक–' इत्यादिना षष्ठीनिषेधात्प्रजा इति कर्मणि द्वितीया । पवित्राणि स्मरणादिना लोकपावनानि चरितान्यनुष्ठानानि येषां ते तथोक्ताः । प्रथमे पूर्वे । 'प्रथमचरम–' इत्यादिना प्रथमशब्दस्य सर्वनामसंज्ञायां जसः शीभावात्प्रथमाबहुवचनान्तमिदम् । ये राजानो वैवस्वतस्य विवस्वदपत्यस्य मनो-

अपि च ।

अरिष्टस्त्वाष्ट्रस्य प्रशमनविधौ जम्भदमनः
स विश्वेषामीशः पतिरपि निकायस्य मरुताम् ।
विनेतारं सेनां सततमपहन्तारमसुरा-
नमुं वीरं वव्रे बहुषु समनीकेषु मघवा ॥ १८ ॥

सोऽयमीदृशः कथमनीदृशं प्रसूते । कथमत्राश्चर्यं नाम ।

मरुत्वन्तं देवं य इह भगवन्तं विजयते
विजिग्ये तं राजा युधि दशमुखं हैहयपतिः ।

---

रन्वये वंशे भूता जाताः अभवन्निति शेषः । तेषां धूर्धरस्तद्वाह्यभारवोढा तेषां श्रेष्ठो वा वीरः क्षत्रियपुंगवः । क्षत्रियश्रेष्ठ इत्यर्थः । 'स्युरुत्तरपदे व्याघ्रपुंगवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ।' इत्यमरः । धरिण्या अयं श्लाघ्यः पतिर्दशरथो गुणानां राममाहात्म्यहेतुगुणानां निधिरक्षयस्थानविशेषः । भवतीति शेषः॥१७॥ **अरिष्ट इति** । स प्रसिद्धो मघवेन्द्रः । 'श्वन्नुक्षन्–' इत्यादिना मघवच्छब्दो निपातितः । जम्भदमनः सन्नपि जम्भासुरहन्ता सन्नपि, त्वाष्ट्रस्य देवशिल्पिनः पुत्रस्य प्रशमनविधौ हननक्रियायामरिष्टः सन्नप्यशुभरहितः सन्नपि । 'रिष्टं क्षेमाऽशुभाभावे' इत्यमरः । विश्वेषामीशोऽपि त्रैलोक्याधिपतिः सन्नपि, मरुतां देवानां सप्तमरुतां वा । 'मरुतौ पवनामरौ' इत्यमरः । निकायस्य समूहस्य । 'स्यान्निकायः पुञ्जराशी' इत्यमरः । पतिः सन्नपि । मध्यमणिन्यायेनायमप्युभयत्रान्वेति । सेनां विनेतारं व्यूहादिक्रियासु सेनाशिक्षणशीलमसुरानपहन्तारमसुरवधशीलम् । सततमित्युभयान्वयि । तृन्नन्तयोगात्सेनासुरशब्दाभ्यां द्वितीया । वीरममुं दशरथं बहुषु समनीकेषु युद्धेषु वव्रे वृतवान् । 'वृञ् वरणे' इत्यस्मात्कर्तरि लिट् । 'स्वरितञितः–' इत्यादिनात्मनेपदम् । सहायत्वेनेति शेषः ॥ १८ ॥ **स इति** । ईदृश इन्द्रेण वरणीयो दशरथोऽनीदृशं रामं विसदृशं कथं प्रसूते जनयति । ईदृशशब्दोऽयं परशुरामविजयिनं रामं परामृशति । 'पितुः शतगुणः पुत्रः' इति न्यायेनायं दशरथो महेन्द्रसहायात्स्वस्माच्छतगुणं पुत्रमजनयदिवेति भावः । कथमत्राश्चर्यं नामेति । अत्र रामे कथं नामाश्चर्यम् । तादृशात्पितुः शतगुणस्य न्याय्यत्वान्नेदमपूर्वमिति भावः । यत एवं ततः सर्वमनेन जितमिति निगमयति—**मरुत्वन्तमित्यादिना** । यो दशमुख इह भुवने भगवन्तं माहात्म्यवन्तं वीर्यातिशयवन्तं वा । 'भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु' इत्यमरः । देवं विजिगीषुं दीप्तिमन्तं वा मरुत्वन्तमिन्द्रम् । 'इन्द्रो मरुत्वान्मघवा' इत्यमरः । विजयते । अभिभवतीत्यर्थः । 'जि अभिभवे' अभिभवो न्यूनीकरणम् । 'विपराभ्यां–' इत्यात्मनेपदम् । अद्यापि रावणेनेन्द्राभिभवनस्य वर्तमानत्वाल्लटः प्रयोगः । तं दशमुखं हैहयानां हैहयदेशराजानां पतिः स्वामी राजा कार्तवीर्योऽर्जुनो युधि युद्धे । 'समित्याजिसमि-

निहन्तारं तस्य प्रथितमहिमानं त्रिभुवने
महावीरं जित्वा किमिव तव वत्सेन न जितम् ॥ १९ ॥

दशरथः—तत्किमित्यद्य द्विधा विभज्यते लोकः ।

विश्वामित्रः—एष वत्सो रामभद्रः सजामदग्न्य इत एवाभिवर्तते । य एषः

वीरश्रिया च विनयेन च शोभमानो
मान्ये मुनाववनतश्च गुणोन्नतश्च ।
लज्जां वहन्भृगुपतौ हृतवीरदर्पे
शिष्यो गुराविव कृतप्रथमापचारः ॥ २० ॥

(ततः प्रविशतो रामजामदग्न्यौ ।)

रामः—

यद्ब्रह्मवादिभिरुपासितवन्द्यपादे
विद्यातपोव्रतनिधौ तपतां वरिष्ठे ।

---

द्युधः' इत्यमरः । विजिग्ये ऽभिभूतवान् । 'सन्लिटोर्जेः' इति कुत्वम् । कार्तवीर्यस्यातीतत्वाल्लिटः प्रयोगः । तस्य कार्तवीर्यस्य निहन्तारं प्रथितमहिमानमेकविंशतिकृत्वः सर्वक्षत्रियविध्वंसनेन प्रख्यातमाहात्म्यम् । त्रयाणां भुवनानां समाहारस्त्रिभुवनम् । पात्रादित्वात्स्त्रीत्वाभावः । तस्मिन् । निर्धारणे सप्तमी । महावीरं त्रिभुवनान्तर्गतत्वेऽपि त्रिभुवनोत्तीर्णवीर्यातिशययुक्तम् । यद्वाधिकरणे सप्तमी । त्रिभुवने प्रथितमहिमानमित्यन्वयः । परशुराममित्यर्थः । जित्वा । स्थितेनेति शेषः । तव वत्सेन । रामेणेत्यर्थः । किमिव न जितम् । किमिति क्षेपे । सर्वमेव जेतव्यं जितमित्यर्थः । सामान्ये क्लीबम् । व्यतिरेकोक्तिः प्रामादिकत्वनिवृत्त्यर्था । इवशब्दो वाक्यालंकारे । अत्राप्यनुमानं नाम संध्यङ्गमुक्तम् ॥ १९ ॥ **तत्किमित्यादि** । अद्य लोको जनः । समष्टावेकवचनम् । द्विधा विभज्यते द्वेधा भिद्यत इति यत्, तत्किम् । केन हेतुनेत्यर्थः ॥ **एष इति** । अभिवर्तत आगच्छति । अतस्तयोर्मार्गप्रदानाय जनसंघातो द्विधा भिद्यत इत्यर्थः । य एषः । योऽयं राम इत्यर्थः । **वीरश्रियेति** । वीरश्रिया वीरपुरुषधर्मशौर्यादिसमृद्ध्या विनयेनानौद्धत्यावहस्वोत्कर्षाननुसंधानेन शोभमानो मान्ये पूज्ये मुनौ परशुरामेऽवनतः प्रह्वो गुणैः सौहार्दादिभिरुन्नत उत्कृष्टः । चकारचतुष्टयं तत्तद्गुणसमुच्चयार्थम् । गुरौ कृतप्रथमापचारः कृतपूर्वानुचितव्यापारः शिष्यो गुराविव हृतवीरदर्पे नाशितशौर्यादिप्रयुक्तगर्वे भृगुपतौ लज्जां वहन्नकृत्यानुष्ठानबुद्धिप्रयुक्तहृदयसंकोचं वहन्सन्नभिवर्तत इत्यनुषङ्गः ॥ २० ॥ **यदित्यादि** । भगवन्माहात्म्यनिधे, ब्रह्मवादिभिर्वेदान्तवेद्यपरमात्मापदेशशीलैः । ब्रह्मवादिनो हि सर्वोत्कृष्टास्तथाविधैरुपासिताः केचित्तैरपि वन्द्यौ पादौ

दैवात्कृतस्त्वयि मया विनयापचार-
स्तत्र प्रसीद भगवन्नयमञ्जलिस्ते ॥ २१ ॥

जामदग्न्यः—अपराद्धं किं त्वया जामदग्न्यस्य । ननूपकृतम् ।

पुण्या ब्राह्मणजातिरन्वयगुणः श्लाघ्यं चरित्रं च मे
येनैकेन हृतान्यमूनि हरता चैतन्यमात्रामपि ।
एकः सन्नपि भूरिदोषगहनः सोऽयं त्वया प्रेयसा
वत्स ब्राह्मणवत्सलेन शमितः क्षेमाय दर्पामयः ॥ २२ ॥

---

यस्य स तथोक्तस्तस्मिन्विद्यानां ज्ञानानां तपसां नियमानां व्रतानां च निधावक्ष-याधारे । यद्यपि नियमव्रतयोरनतिरेकस्तथापि विद्यार्थत्वमोक्षार्थत्वाभ्यामिह भेदो विवक्षितः । तपतां दोषानभिषङ्गेण दीप्यमानानां वरिष्ठे श्रेष्ठे त्वयि विषये मया विनयापचारोऽविनयप्रयुक्तानुचितवृत्तिर्दैवाद्विधिवशात्कृत इति यत्तत्र नि-मित्ते ते तुभ्यमयमञ्जलिः । बद्ध इति शेषः । 'अञ्जलिः परमा मुद्रा क्षिप्रं देवप्रसा-दनी' इत्युक्तम् । तदाह—**प्रसीदेति** । प्रसीद । कालुष्यं जहीत्यर्थः ॥ २१ ॥

किमपराद्धम् । कोऽपराधः कृत इत्यर्थः । ननूपकृतम् । उपकार एव कृत इत्यर्थः । तदेवाह—**पुण्येति** । हे वत्स राम, चैतन्यस्य समीचीनज्ञानस्य मात्रामपि लेश-मपि । 'अथ मात्रं स्यादवधारणकार्त्स्न्ययोः । मात्रा परिच्छदे वर्णमाने कर्णादिभू-षणे ॥ सैवाल्पपरिमाणे च' इति रत्नमाला । हरता नाशयतैकेनासहायेन दर्पामयेन पुण्या धर्मिष्ठा । 'पुण्यं धर्मवति त्रिषु' इति रत्नमाला । ब्राह्मणजातिर्ब्राह्मणाः । 'जातिश्छन्दो जन्म गोत्रं स्वव्याहृतिकरोत्तरः । सामान्यं मालती च' इति रत्न-माला । अन्वयस्य भृगुवंशस्य गुणोऽमानित्वाद्यात्मगुणवर्गः । ब्राह्मणवंशेषु हि भृगुवंशः प्रशस्तः । अतएव प्रवराध्याये 'भृगूणामेवाग्रे व्याख्यास्यामः' इत्युपक्रा-न्तम् । श्लाघ्यं मे चरित्रं मयानुष्ठेयं वृत्तजात्यन्वयानुरूपं चेत्यमूनि जातिगुणच-रित्राणि । असौ चासौ चादश्चेति सहोक्तौ 'त्यदादीनि सर्वैर्नित्यम्' इत्येकशेषे 'त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि' इति शास्त्रेण परत्वान्नपुंसकशेषः । हृतानि नाशितानि । अभवन्निति शेषः । हृता च हृतश्च हृतं चेति सहोक्तौ 'नपुं-सकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इति नपुंसकैकशेषः । एकवद्भावस्य वैकल्पि-कत्वाद्बहुवचनम् । प्रसिद्धस्य हि राजयक्ष्मादेरामयस्य वातपित्तश्लेष्मात्मकधातुत्रयना-शकत्वमिति दर्पामयस्यापि जात्यादित्रयनाशकत्वमुक्तम् । सोऽयं तथाविधोऽयमेकः सन्नप्यसहायः सन्नपि भूरिदोषैः क्रोधमात्सर्यादिभिर्हेयस्वभावविशेषैः स्वप्रयुक्तैर्गह-नो दुरासदः । न केवलं गुणहानिकरः, किंतु दोषावहश्चेत्यर्थः । दर्प एव शौर्या-द्यतिशयप्रयुक्ताहंकार एवामयो व्याधिः । 'रोगव्याधिगदामयाः' इत्यमरः । ब्राह्मणेषु वत्सलेन प्रीतिमता प्रेयसा विशिष्यैव मयि प्रीतिमता त्वया क्षेमाय मङ्गलाय लब्ध-रक्षणाय । 'क्षेममस्त्री स्यान्मङ्गले लब्धरक्षणे' इति रत्नमाला । क्षेमशब्दोऽत्र मोक्ष-रूपक्षेमवाची । तथा चापस्तम्बः—'प्रायश्चित्तबुद्धेः क्षेमप्रापणम्' इति । शमितो

**रामः**—कथं नापराद्धं मया, यदायुधपरिग्रहं यावदारूढो दुर्योगः ।

**जामदग्न्यः**—एष एव न्याय्यः ।

असाध्यमन्यथादोषं परिच्छिद्य शरीरिणः ।
यथा वैद्यस्तथा राजा शस्त्रपाणिर्भविष्यति ॥ २३ ॥

**रामः**—कोऽहमुक्तिप्रत्युक्तिकायां भगवता । तस्मादित इतो भगवन् ।

**जामदग्न्यः**—क्व पुनर्मया वत्स, गन्तव्यम् ।

**रामः**—यत्र तातश्च तातजनकश्च । अथवा शान्तम् । यत्र भगवन्तौ मैत्रावरुणकौशिकौ ।

---

नाशितः । इतःपरं जातिगुणचरित्रवृद्धिर्निर्विघातेति भावः । भूरिदोषगहन इत्यनेन राजयक्ष्मणो बहुरोगसमूहात्मकत्ववदृपस्य बहुदोषसमूहात्मकत्वमिति सूच्यते । चैतन्यमात्रां हरतेति चैतन्यनाशकत्वादप्यस्य व्याधेश्च तुल्यत्वम् । उक्तं च—'राजयक्ष्मेव रोगाणां समूहः' इति । 'स्वस्थे चित्ते बुद्धयः संभवन्ति' इति च । ब्राह्मणवत्सलेनेत्यत्र 'गुरुविप्रतपस्विदुर्गतान्प्रतिकुर्वीत भिषक्स्वभेषजैः' इत्येतदनुसंधेयम् ॥ २२ ॥ कथं नापराद्धम् । अपराधः कथं न कृत इत्यर्थः । आयुधपरिग्रहं यावदायुधपरिग्रहपर्यन्तम् । महाभाष्यकारप्रयोगाद्यावच्छब्दयोगे द्वितीया । 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः । दुर्योगः । युज्यतेऽनेन शुभाशुभरूपं फलमिति योगो दैवम् । दुर्योगो दुष्टदैवम् । दुर्भाग्यमिति यावत् । आरूढः प्रयोजितवान् ॥ एष आयुधपरिग्रहो न्याय्यः । उचित इत्यर्थः । 'परिन्योर्नीणोर्द्यूताभ्रेषयोः' इति निपूर्वादिणो घञ्प्रत्ययः । एवकारो दुर्योगप्रयुक्तानि व्यवच्छिनत्ति । तदाह—**असाध्यमिति** । वैद्यो भिषक् । 'भिषग्वैद्यश्चिकित्सके' इत्यमरः । शरीरिणो देहिनो दोषं व्रणरूपं कर्मान्यथा शस्त्रग्रहणादन्येनोपायेनासाध्यमनिवर्त्यं निश्चित्य । 'साधनमनुगमगत्योः शेफसि सिद्धौ निवृत्तिदापनयोः' इति रत्नमाला । यथा शस्त्रपाणिः शस्त्रं पाणौ यस्य स तथोक्तः । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ' इति पाणिशब्दस्य परनिपातः । व्रणरूपदोषनिवर्तनार्थमिति शेषः । भविष्यति तथा राजा दुर्दमनाधिकृतो राजा शरीरिणः शास्त्रवश्यत्वार्हस्य दोषमकृत्यकरणकृत्याकरणरूपम् । अन्यथा शस्त्रग्रहणातिरिक्तगुणोपदेशाद्युपायेनासाध्यमनिवर्त्यं परिच्छिद्य निश्चित्य शस्त्रपाणिर्दुष्टदमनार्थं गृहीतायुधो भविष्यति । परिच्छेदक्रियापेक्षया भविष्यत्त्वम् । दोषस्य प्रकारान्तरेणानिवर्त्यत्वनिश्चयोत्तरक्षणप्रभृतिशस्त्रमादत्त इत्यर्थः । 'शस्त्रक्षुराग्निकर्माणि प्रकरोति यथा पिता' इत्यादिकमत्रानुसंधेयम् ॥ २३ ॥ **क्व इति** । उक्तिश्च प्रत्युक्तिश्च यस्यां क्रियायां सोक्तिप्रत्युक्तिका । मयूरव्यंसकादित्वात्समासः ॥ तातजनकश्च । भार्यां प्रति पितृत्वाज्जनकस्य तातत्वम् । क्षत्रिययोर्ब्रह्मर्षिणानुपसर्तव्यतामभिसंधायाह—**अथवा शान्तमिति** । एवं मदुक्तिनिमित्तकं दुरितमिति शेषः । शान्तम् । शाम्यत्वित्यर्थः । 'आशंसायां भूतवच्च' इति निष्ठा ।

**जामदग्न्यः**—इदमिदानीमशक्यम् । अनतिक्रमणीयो रामनिदेशः । (परिक्रम्य ।)

स एष रामः सौम्यत्वादचण्डश्चण्डशासनः ।
यस्य प्रतिष्ठितं जैत्रं जामदग्न्येऽपि शासनम् ॥ २४ ॥

**राजानौ**—अतिगम्भीरः सौजन्योद्गारः ।

**रामः**—एष वो रामशिरसा प्रणामपर्यायः ।

**सर्वे**—एह्येहि वत्स । (इति परिष्वजन्ते ।)

**जामदग्न्यः**—भगवन् मैत्रावरुण, एष जमदग्निपुत्रः प्रणम्य कौशिकेन सार्धमत्रभवतो विज्ञापयति ।

वृद्धातिक्रमसंभृतस्य महतो निर्णिक्तये पाप्मनः
प्रायश्चेतनमादिशन्तु गुरवो रामेण दान्तस्य मे ।

---

मैत्रावरुणकौशिकौ वसिष्ठविश्वामित्रौ स्तः । आवयोर्विद्यातपोभिराधिक्यात्तेन तयोरुपगन्तव्यत्वं न्याय्यमिति भावः ॥ इदं पूर्वं मया क्षिप्तयोर्दशरथजनकयोर्वसिष्ठविश्वामित्रयोर्वा समीपगमनमिदानीं मम परिभवकालेऽशक्यम् । लज्जावशाद्दुष्करमित्यर्थः । अनतिक्रमणीयो रामनिदेशः । तथापि रामाज्ञा दुरतिक्रमेत्यर्थः । 'निदेशः शासनं च सः । शिष्टिश्चाज्ञा च' इत्यमरः । **स एष इति** । जैत्रं जयशीलं यस्य रामस्य शासनमाज्ञा जामदग्न्ये क्षत्रियान्तके परशुरामेऽपि प्रतिष्ठितं संजातगौरवं कार्यनिर्वाहसामर्थ्ययुक्तं वा । जातमिति शेषः । 'प्रतिष्ठा तु समाप्तौ गौरवेऽपि च । कार्यनिर्वाहसामर्थ्ये चतुर्थे छन्दसि स्थितौ ॥' इति रत्नमाला । सौम्यत्वात्सोमवदाह्लादकरत्वादचण्डोऽतीक्ष्णः स एष रामश्चण्डशासनस्तीक्ष्णाज्ञः । आज्ञायास्तीक्ष्णत्वमतिवर्तिनामात्महानिपर्यन्तं दुर्गतिप्रयोजकत्वम् ॥ २४ ॥ **अतीति** । सौजन्यस्य सुजनभावस्योद्गार आविष्करणम् । अतिगम्भीरः । अक्षोभ्यसौहार्दमूलक इत्यर्थः । 'निम्नं गभीरं गम्भीरम्' इत्यमरः । निम्नपर्यायोऽयं गम्भीरशब्दो गौण्या वृत्त्या त्वक्षोभ्यपरः शासनीयत्वमभ्युपगच्छतो मित्रत्वमविचाल्यमिति हि लभ्यते ॥ प्रणामस्य नमस्कारस्य पर्यायः । क्रमप्राप्तस्यानतिपात इत्यर्थः । 'पर्यायोऽवसरे क्रमे' इत्यमरः । 'परावनुपात्यय इणः' इति घञ् । गुरुविषये प्रणामस्य विहितत्वादिदानीं तदनुष्ठानात्तस्यानतिपात इति भावः ॥ परिष्वजन्त आलिङ्गन्ति ॥ कौशिकेन सार्धमत्रभवतो विश्वामित्रसहितान्युष्माञ्जमदग्निपुत्र इति विशेषणेन मयि दुष्टेऽपि मत्पिता भवद्भिरवेक्षणीय इति व्यज्यते । विज्ञापनप्रकारमेवाह—**वृद्धेति** । गुरवो भवन्तः कर्तारः । रामेण दान्तस्य दमितस्य । शिक्षितस्येति यावत् । 'वा दान्तशान्त–' इत्यादिना णिचि निष्ठान्तो दान्तशब्दो निष्पादितः । मे मम वृद्धानां भवतामतिक्रमेणातिलङ्घनेन संभृतस्य संपादितस्य महतः पाप्मनो

प्राग्धर्मस्य भवन्त एव हि परं द्रष्टार आसन्गुरो
लब्ध्वा ज्ञानमनेकधा प्रवचनैर्मन्वादयः प्राणयन् ॥ २५ ॥

वसिष्ठः—वत्स, अद्य नः श्रोत्रियाणां कुले जातोऽसि ।

दुर्विनीते त्वयि वयं दुःखिताः सुखिनोऽन्यथा ।
निसर्गो ह्येष वृद्धानां यत्तु श्रेयस्तथैव तत् ॥ २६ ॥

तत्परिपूत एवासि ।

---

ब्रह्महत्यासाम्यान्महापातकस्य निर्णिक्तये निर्णजनाय । 'णिजिर् शौचे' इत्यस्माद्भावे स्त्रियां क्तिन् । शुद्धये प्रायश्चेतनं प्रायश्चित्तं तपोनिर्णयं पापनाशकं कर्म वादिशन्तू-पदिशन्त्वाज्ञापयन्तु वा । यद्यपि तपोवाचिनः पापवाचिनो नाशवाचिनो वा प्राय-शब्दस्याकारान्तस्य निर्णयशोधनसंधानान्यतमवाचिनि चित्तिशब्दे चित्तशब्दे वा परे 'प्रायस्य चित्तिचित्तयोः' इति सुडागमो विहितः, तथापि पारस्करादेराकृतिगण-त्वाच्चित्तिचित्तशब्दसमानार्थकचेतनशब्देऽपि परतः प्रायशब्दस्य सुडागमः साधुः । एवम् 'प्रायश्चेतयांचक्रे' इति मुरारिप्रयोगोऽपि पारस्करादेराकृतिगणत्वादेव साधुः । 'प्रायो नाम तपः प्रोक्तं चित्तिर्निर्णय उच्यते । तपोनिश्चयसंयोगं प्रायश्चित्तं विदु-र्बुधाः ॥ प्रायः पापं विजानीयाच्चित्तं तस्य विशोधनम् ॥' इति चोक्तम् । 'चिती संज्ञाने' चौरादिकः । अनुष्ठेयानिर्णयस्यानर्थपर्यवसाननियमादनुष्ठानमर्थसिद्धम् । चेत-यतेर्विशोधनसंधानार्थकत्वं तु धातूनामनेकार्थत्वात्प्रायशब्दस्य नाशवाचित्वे तु नष्टस्य ब्राह्मण्यादेः संधायकं कर्म प्रायश्चित्तादिशब्देनोच्यत इत्याहुः । प्रायःशब्दस्याव्यय-त्वादव्ययानामनेकार्थत्वात्तपःपापार्थकत्वम् । ततश्च प्रायश्चेतनं प्रायश्चेतयांचक्रे इत्य-नयोः साधुत्वम् । एवं प्रायश्चित्तिशब्दश्च साधुरेव । 'प्रायस्य चित्तिचित्तयोः' इत्येतत्तु प्रायश्चित्त्यादेः सुडागमरहितस्य वारणार्थमित्यपि द्रष्टव्यम् । हे गुरो वसिष्ठ, भवन्त एव धर्मस्यालौकिकश्रेयःसाधनस्य वेदैकसमधिगम्यस्य वार्थस्य प्राग्द्रष्टार आसन्प्रथमदर्शिनोऽभवन्, मन्वादयः परं मन्वादयस्तु प्रवचनैर्भवत्कृतोपदेशैर्ज्ञानं धर्मप्रमितिं लब्ध्वा धर्ममनेकधा प्राणयन्ग्रन्थैः प्रतिपादितवन्तः । यद्वा मन्वादयो भवद्भ्यो धर्मप्रमितिं लब्ध्वानेकधा प्रवचनैरुपदेशरूपैर्ग्रन्थैर्धर्मं प्राणयन्नबोधयन् । प्रपूर्वो नयतिः प्रतिपादने वर्तते । हि यस्मात्प्राणयंस्तस्माद्भवन्त आदिशन्त्विति संबन्धः ॥ २५ ॥ **वत्सेति** । अद्यानुतापेन प्रायश्चित्तान्वेषणकाले । **दुर्विनीत इति** । हे वत्स जामदग्न्य, त्वयि दुर्विनीते सति सज्जनोचिताचारातिचरणेन समुद्धते सति वयं कुलवृद्धाः दुःखिताः संजातदुःखाः । अभूमेति शेषः । अन्यथा त्वयि विनीते सति सुखिनः संजातसुखाः । भवामेति शेषः । एष स्ववंश्येषु दुर्विनीतेषु दुःखितत्वं विनीतेषु सुखित्वं चेत्ययम् । विधेयप्राधान्यात्पुंस्त्वमेकत्वम् । वृद्धानां ज्ञानवयःशीलैः प्रकृष्टानां पुरुषाणां निसर्गः स्वभावः । हिशब्दः प्रसिद्धौ । यच्छ्रेयस्तत्तथैव त्वदुक्तरीत्या सानुतापस्य तव प्रायश्चित्तं साध्यमेवास्ति ॥ २६ ॥

**विश्वामित्रः**—वत्स, अपहृतं ते विद्मः पाप्मानं रामभद्रेण । यतः प्रायश्चित्त इव राजदण्डेऽप्येनसो निष्क्रयमामनन्ति धर्माचार्याः, किं पुनरत्रभवान्वसिष्ठः प्रजापालनसंनिधौ प्रशास्ति ।

**रामः**—एतानि भगवतां साक्षात्कृतब्रह्मणामृषीणां प्रसन्नगम्भीरपावनानि वचनानि ।

**दशरथः**—भगवञ्जामदग्न्य,

निसर्गतः पवित्रस्य किमन्यत्पावनं तव ।
तीर्थोदकं च वह्निश्च नान्यतः शुद्धिमर्हतः ॥ २७ ॥

---

**वत्सेति** । हे वत्स जामदग्न्य, ते पाप्मानं शस्त्रग्रहणादिप्रयुक्तं त्वत्पापं रामभद्रेणापहृतं विनाशितं विद्मो जानीमः । यतो यस्माद्धर्माचार्या धर्मोपदेष्टारः । 'मन्त्रव्याख्याकृदाचार्यः' इत्यमरः । प्रायश्चित्त इव कृच्छ्रचान्द्रायणादिपापनाशककर्मणीव राजदण्डेऽपि राज्ञां शिक्षणेऽप्येनसः पापस्य निष्क्रयं शुद्धिमामनन्ति बहुशो वदन्ति । 'म्ना अभ्यासे' इति पठितस्याङ्पूर्वकस्य 'पाघ्रा—' इत्यादिना मनादेशः । 'राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः । निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥' इति मनुवचनम्, 'दण्डये यः पातयेद्दण्डं दण्ड्यो यश्चापि दण्ड्यते । कार्यकारणसिद्धार्थौ तावुभौ नावसीदतः ॥' इति श्रीरामायणवचनं च द्रष्टव्यम् । **किं पुनरिति** । अत्रभवान्पूज्यः । अत्रभवत्तत्रभवच्छब्दौ पूजार्थाविति वैयाकरणाः । वसिष्ठः प्रजापालनसंनिधौ प्रशास्ति परिपूत एवासीति निर्दिशति । 'प्रशासनं तु निर्देशः' इति कोशः । इति यत्, ततो हेतोस्ते पाप्मानमपहृतं विद्म इति किं पुनर्वक्तव्यमित्यर्थः । प्रजापालनसंनिधावित्यत्र 'ऋग्वेदविद्यजुर्वेदविच्च सामविदेव वा । त्र्यवरा परिषज्ज्ञेया धर्मसंशयनिर्णये ॥' इति वचनमनुसंधेयम् । अत्रभवानित्यत्र 'प्रब्रूते यं स धर्मः स्यादेको वाध्यात्मवित्तमः' इत्येतदनुसंधेयम् ॥ **एतानीति** । एतानि परिपूत एवेत्यादीनि प्रशास्तीत्यन्तानि । भगवताम् । 'उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥' इत्युक्तभगवच्छब्दप्रवृत्तिनिमित्तवतां साक्षात्कृतब्रह्मणां प्रत्यक्षीकृतपरमात्मनां प्रत्यक्षितविप्रकीर्णवेदानां वा ऋषीणां सत्यवचसां वचनानि वाक्यानि प्रसन्नानि संशयच्छेदकानि गम्भीराण्यक्षोभ्याणि पावनानि श्रवणमात्रेणापि पापहराणि च । भवन्तीति शेषः । निम्नोन्नतादिवद्विशेषणसमासः । भगवतामित्यादिविशेषणद्वयेन यथार्थदृष्टित्वमुक्तम् । ऋषीणामित्यनेन यथार्थवक्तृत्वमुक्तम् । अनेनाप्तत्वमुक्तं भवति प्रसन्नपदेन संदेहनिर्णयार्थं मीमांसापेक्षश्रुतिवचनेभ्यो व्यावृत्तिरुच्यते । गम्भीरपदेन विप्रकीर्णवेदमूलत्वोक्त्या विप्रलम्भकस्मृतिभ्यो व्यावृत्तिरुच्यते । पावनपदेन च मन्दानामपि तत्त्वार्थप्रमितिप्रबन्धकपापनिवर्तकत्वमुच्यते ॥ **भगवन्निति** । **निसर्गत इति** । भगवञ्जामदग्न्य, निसर्गतः स्वभावतः पवित्रस्य स्वयं पूतस्य सतो-

**जामदग्न्यः**—भगवति वसुंधरे, प्रसीद रन्ध्रदानेन ।

**जनकः**—भगवन्, यदि प्रसन्नोऽसि तद्विस्रब्धोपवेशनात्परिपुनीहि नो गृहान् । एतत्पूतमासनं भगवतः ।

**जामदग्न्यः**—यदभिरुचितं सूर्यशिष्यान्तेवासिने राजन्यश्रोत्रियाय ।

(सर्वे उपविशन्ति ।)

**दशरथः**—

जनपदबहिर्निष्ठा यूयं गृहस्य परिग्रहा-
द्वयमपि निजैर्व्यग्राः कार्यैस्ततो न बभूव यः ।
स इह भवतामद्यास्माभिर्मनोरथवाञ्छितः
सुचरितपरीपाकात्प्राप्तश्चिरस्य समागमः ॥ २८ ॥

---

ऽन्येषामपि पावयितुस्तवान्यत्पावनं पावनान्तरं किम् । किमर्थमित्यर्थः । तीर्थोदकं च ऋषिजुष्टोदकं च । ऋषिजुष्टाम्भोवाचिनस्तीर्थशब्दस्योदकशब्दसमभिव्याहाराहृषिजुष्टत्वरूपविशेषणमात्रपरत्वम् । वह्निश्च पावकश्चान्यतः शुद्धिं स्वव्यतिरिक्तवस्तुहेतुकां शुद्धिं नार्हतः । न क्षमेते इत्यर्थः । अतः प्रायश्चेतनामादिशन्त्विति भवदुक्तिर्न युक्तेति भावः । दृष्टान्तालंकारः । 'चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलंकृतिः' इति लक्षणात् । 'तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा' इति वचनाभिप्रायेण वह्नेः काष्ठानिर्देशः ॥ २७ ॥ **भगवतीति** । रन्ध्रदानेन प्रायश्चित्तादिना पराजितपापस्याप्यसंव्यवहितकार्यस्य मम विविक्तदेशवासार्थं स्वस्मिन्विवरप्रदानेन विवरप्रदानार्थम् । 'अध्ययनेन वसति' इतिवत्प्रयोजने तृतीया । प्रसीद प्रसादं कुरु ॥ **भगवन्नित्यादि** । यदि प्रसन्नोऽसि त्वमस्मासु कृतप्रसादश्चेत्तदा विस्रब्धं यथा तथा इमेऽस्माकमनतिरिक्ता इति विश्वासयुक्तं यथा तथा । 'समौ विस्रम्भविश्वासौ' इत्यमरः । उपवेशनादासनान्नो गृहानस्मद्गृहान्परिपुनीहि परितः पावय । एतदित्यङ्गुल्यासनं निर्दिशति—**यदिति** । सूर्यशिष्यस्य याज्ञवल्क्यस्यान्तेवासिने शिष्याय राजन्यश्रोत्रियाय क्षत्रियाय छन्दोऽध्येत्रे । 'श्रोत्रियाध्यापकधूर्तैर्जातिः' इति समासः । 'रुच्यर्थानां प्रीयमाणः' इति चतुर्थी । यदभिरुचितं यत्प्रीयमाणम् । तदस्त्विति शेषः ॥ सर्वे उपविशन्ति । उपवेशं नाटयन्तीत्यर्थः ॥ **जनपदेति** । अत्र जामदग्न्येत्यादि । हे जामदग्न्य, यूयम् । पूजायां बहुवचनम् । जनपदेभ्यः कोसलादिभ्यो बहिर्भूते वने नितरां तिष्ठन्तीति जनपदबहिर्निष्ठाः । भवथेति शेषः । यूयमरण्यैकनिष्ठा भवथेत्यर्थः । वयमप्यहमपि । 'अस्मदो द्वयोश्च' इत्येकत्वे बहुवचनम् । गृहस्य परिपालनाद्गृहोपलक्षितगृहस्थाश्रमस्वीकारान्निजैः कार्यै राज्यपरिपालनादिभिरवश्यकर्तव्यैर्व्यापारैर्व्यग्रा व्यासक्ताः । भवाम इति शेषः । 'व्यग्रो व्यासक्त आकुले' इत्यमरः । इति यत्, ततो हेतोर्यः समागमो न बभूव न जातः सोऽस्माभिर्मनोरथैरुत्कण्ठाविशेषैर्वाञ्छितो विषयीकृतः । पाकं पचन्तीतिवन्निर्देशः ।

अत्र च ।

का ते स्तुतिः स्तुतिपथादतिवृत्तधाम्नः
किं दीयतामविकलक्षितिदायिनस्ते ।
शान्तस्य किं परिजनेन मुनेस्तथापि
पुत्रैः समं दशरथोऽद्य वशंवदस्ते ॥ २९ ॥

जामदग्न्यः—यूयमीदृशा इति किमाश्चर्यम् ।

प्रेद्धं धाम यमामनन्ति मुनयः सोऽयं निधिर्ज्योतिषां
देवो वः सविता कुलस्य किमतो भूत्यै प्रशंसापदम् ।

---

यद्वा मनांस्येव रथा मनोरथास्तैरस्खलितगमनसाधनत्वेन सादृश्याद्रूपणम् । वाञ्छितः प्रेप्सितो भवतामस्माभिः सह समागमः । अस्माभिरित्यप्रधाने तृतीया स्वनैच्यं द्योतयति । अस्माभिरित्युभयान्वयि । सुचरितपरीपाकात्सुकर्मणां फलप्रदानौन्मुख्याद्धेतोः चिरस्य प्राप्तोऽस्माभिश्चिरेण लब्धः । अभूदिति शेषः ॥ २८ ॥ **अत्र चेति ।** अस्मिन्समागमे त्वित्यर्थः । **का त इति ।** स्तुतिपथात्स्तुतिमार्गादतिवृत्तमतिक्रान्तं धाम प्रभावो यस्य स तथोक्तस्तस्य । अतिवृत्तिं प्रत्यपादानत्वविवक्षया स्तुतिपथादिति पञ्चमी । 'ऋक्पूरब्धूः' इत्यादिना पथिन्शब्दादकारप्रत्ययः । 'धाम जन्मप्रभास्थानप्रभावसुखसद्मसु' इति रत्नमाला । ते का स्तुतिः । भवेदिति शेषः । वाचामगोचरगुणातिशये त्वयि गुणाभिधानात्मिका स्तुतिर्नोचितेत्यर्थः । 'प्रत्यक्षे गुरवः स्तुत्याः' इत्येतत्तु शक्यस्तुतिकगुरुविषयमिति भावः । अविकलक्षितिदायिनः सद्वीपामित्यादिपूर्वोक्तरीत्या संपूर्णभूमिप्रदस्य ते किं दीयताम् । किं वस्तु दानार्हमित्यर्थः । 'पुष्कलेन धनेन वा' इत्येतत्त्वनीदृशविषयमिति भावः । शान्तस्य वैषयिकसुखेभ्यो नियमितमनस्कस्य मुनेः परमात्मनि मननशीलस्य तव परिजनेन किम् । परिजनसाध्या शुश्रूषाप्यनपेक्षितेत्यर्थः । 'शुश्रूषया वा परया' इत्येतदप्यन्यविषयमिति भावः । वसिष्ठसनाभित्वाज्जामदग्न्यस्य गुरुत्वाभिसंधिनेयमुक्तिः । तथापि स्तुतिदानपरिजनानपेक्षितत्वेऽपि दशरथः पुत्रैः समं रामादिभिः सहितः सन्नद्य ते वशंवदः । त्वदधीन इत्यर्थः । भवतीति शेषः । 'प्रियवशे वदः खच्' इति खच्प्रत्ययः । जामदग्न्यस्य स्तुत्याद्यनपेक्षितत्वेऽपि सपुत्रो दशरथो जामदग्न्याधीन इति तटस्थैरनुसंधानाज्जामदग्न्यः कृतातिशयो भवति । तदुक्तं नीतिविद्भिः—मनागुपकारिता च सर्वस्यास्ति तत्परिकरत्वेन ज्ञायमानत्वादिति भावः ॥ २९ ॥ यूयमीदृशा इति किमाश्चर्यम् । रामादयस्त्वं च ब्राह्मणाधीना इत्येतन्नापूर्वमित्यर्थः । **प्रेद्धमिति ।** मुनयस्तत्त्वमननशीला यं सूर्यं प्रेद्धं प्रकर्षेण दीप्तं धाम तेज आमनन्त्यधीयते (१) । अग्नीषोमतेजोमूलकत्वरूपः प्रकर्षः प्रशब्देन विवक्षितः सोऽयं ज्योतिषां निधिः सर्वतेजसामक्षयस्थानभूतो देवः । स्वामी सूर्यो वः कुलस्य युष्मद्वंशस्य सविता जनयिता । 'षु प्रसवैश्वर्ययोः'

---

१. अत्र ग्रन्थः पतित इति ज्ञायते ।

यज्वानः परमार्थराजऋषयस्ते यूयमिक्ष्वाकवो
येषां वेद इवाप्रमेयमहिमा धर्मे वसिष्ठो गुरुः ॥ ३० ॥

अपि च ।

सङ्ग्रामेष्वभयप्रदं दिविषदां भर्तुर्धनुः शासनं
सप्तद्वीपनिविष्टयूपयजनश्रेण्यङ्किता भूमयः ।
शश्वत्कीर्तिनिबन्धनं भगवती भागीरथी सागरः
प्रख्यातानि च तानि तानि भवतां भूमानमाचक्षते ॥ ३१ ॥

---

इत्यस्मात्कर्तरि तृच् । भवतीति शेषः । इति यदतोऽस्मादन्यद्भूत्यै संपत्तये 'भूतिर्भस्मनि संपदि' इत्यमरः । ... इति रत्नमाला । प्रशंसापदं प्रकृष्टस्तुतिस्थानं किम् । न किमपीत्यर्थः । सूर्यो वः कुलस्य जनयितेत्येतदेव युष्माकं संपदे परमप्रशंसास्थानमित्यर्थः । येषां युष्माकमप्रमेयमहिमानवधिकमाहात्म्यो वसिष्ठो वेद इव नित्यापौरुषेयनिर्दोषश्रुतिरिव धर्मे नित्यनैमित्तिकादिरूपेष्वलौकिकश्रेयःसाधनेषु गुरुः संशयादिनिवर्तकः । भवतीति शेषः । ते तथाविधा यजनशीला इक्ष्वाकव इक्ष्वाकुदेशाधिपतेर्वंश्याः । तद्राजत्वादपत्यप्रत्ययस्य लुक् । यद्वा राजविशेषनामधेयमिक्ष्वाकुपदं तदपत्येषु लाक्षणिकमिति बहुवचनोपपत्तिः। यूयं परमार्थराजऋषयो वस्तुभूतराजर्षित्वयुक्ताः भवथेति । अन्यत्र तु राजर्षिपदमौपचारिकमित्यर्थः । सूर्यो युष्माकं जन्मना गुरुः, वसिष्ठस्तु विद्यागुरुरित्युभयविधशुद्धियुक्तानां युष्माकं ब्राह्मणवशंवदत्वं नापूर्वमिति भावः ॥ ३० ॥

**सङ्ग्रामेष्विति** । दिविषदां भर्तुरिन्द्रस्य सङ्ग्रामेषु देवासुरयुद्धेष्वभयप्रदमसुरभयनिवृत्तिप्राप्तिप्रदं धनुः कार्मुकं शासनमाज्ञा । 'निदेशः शासनं च सः' इत्यमरः । सप्तानां द्वीपानां समाहारः सप्तद्वीपम् । पात्रादित्वात्क्लीबत्वम् । तस्मिन्निविष्टानि स्थितानि यूपाः पशुनियोजनार्थदारूणि यजनानि 'समे यजेत । प्राचीनप्रवणे वैश्वदेवेन यजेत' इत्याद्युक्तयागानुष्ठानस्थलानि तेषां श्रेणीभिः पङ्क्तिभिरङ्किताश्चिह्निता भूमयस्तास्ता द्वीपभूमयः शश्वत्कीर्तेः सदातनकीर्तेः । 'पुनःसदार्थयोः शश्वत्' इत्यर्थः । निबन्धनं हेतुभूतम् । निबन्धनशब्दो नित्यनपुंसकलिङ्गः । कीर्तिर्गुणवत्ताप्रथा । यद्वा औदार्यगुणनिमित्ता प्रसिद्धिः । अथवा 'कृतिर्या रमयत्येव विश्वं सा कीर्तिरुच्यते । कुलमप्यागता सा चेद्यश इत्यभिधीयते ॥ यतो विश्वस्य शमिति तस्माद्यश इतीरितम् ॥' इत्युक्तलक्षणलक्षिता वा कीर्तिर्विवक्षिता । भगवती परमपूज्या भागीरथी भगीरथसंबन्धिनी गङ्गा सागरः सागरैः खातः समुद्रश्च । प्रख्यातानि प्रसिद्धानि तानि तानि नानाविधान्याश्चर्यकर्माणि च भवतामिक्ष्वाकुवंश्यानां युष्माकं भूमानं वैपुल्यम् । माहात्म्यमिति यावत् । आचक्षते प्रकाशयन्ति । अत्र माहात्म्यबोधने धनुरादीनां खलेकपोतन्यायेन कारणत्वोक्तेः समुच्चयविशेषोऽलंकारः । तदुक्तम्—'खलेकपोतन्यायेन बहूनां कार्यसाधने । कारणानां समुद्योगः स द्वितीयः समुच्चयः ॥' इति । वैपुल्यवाचिनो बहुशब्दाद्भाव इमनिच्प्रत्यये भूमशब्दो निष्पन्नः ॥ ३१ ॥

**वसिष्ठविश्वामित्रौ**—(अपवार्य ।) एतद्धि शिक्षितं वत्सेन ।

**जामदग्न्यः**—रामभद्र, अनुमोदस्व मामरण्यगमनाय ।

**विश्वामित्रः**—मामप्यधुना भवन्तोऽनुजानन्तु ।

रघुजनकगृहेषु गर्भरूप-
व्यतिकरमङ्गलवृद्धयोऽनुभूताः ।
भृगुपतिविजयोन्नतं च वत्सं
प्रियमभिनन्द्य सुखी गृहानुपेयाम् ॥ ३२ ॥

**दशरथः**—वत्स रामभद्र, प्रस्थितस्ते भगवान्कौशिकः ।

**विश्वामित्रः**—(सास्रं राममालिङ्ग्य ।) अहमेव सौम्य, न त्वां मोक्तुमुत्सहे ।

किं त्वनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षति ।
संकटा ह्याहिताग्नीनां प्रत्यवायैर्गृहस्थता ॥ ३३ ॥

---

**अपवार्येति** । रामजामदग्न्यौ प्रत्येवेत्यर्थः । एतत्क्षत्रियान्तकस्य क्षत्रियगुणश्लाघनं वत्सेन रामेण शिक्षितम् । जामदग्न्यस्य व्युत्पादितमित्यर्थः ॥ अरण्यगमनाय वनगमनार्थमनुमोदस्वानुज्ञापूर्वकं प्रीयस्व ॥ भवन्तो वसिष्ठदशरथजनकादयोऽनुजानन्त्वनुज्ञां कुर्वन्तु । अनुज्ञेयमर्थमाह—**रघुजनकेति** । अत्र मयेत्यादिः । मया रघूणां जनकानां च गृहेषु भवनेषु । 'गृहं गृहाश्च भूम्नि स्याद्गाविमौ गेहभार्ययोः' इति रत्नमाला । गर्भस्येव रूपः स्वभावो ययोस्तौ तथोक्तौ । तयोः । सीतारामयोरित्यर्थः । 'गर्भोऽर्भके नाट्यसंधौ कुक्षौ पनसकण्टके । भ्रूणेऽपवरके च' इति रत्नमाला । 'रूपं स्वभावे शुक्लादौ' इति च रत्नमाला । तत्र रामस्य गर्भरूपत्वमपहतपाप्मनोऽपि स्वेच्छामूलकम् । सीतायास्तु तथाविधानौरसत्वेऽपि प्रेमातिशयेनाविभागाद्गर्भरूपत्वम् । व्यतिकरो विवाहरूपोऽन्यसंबन्धः स एव मङ्गलं कल्याणं तस्य वृद्धयो लक्ष्मणोर्मिलादीनां विवाहा अनुभूताः सुखजनकसाक्षात्कारविषयीकृताः । किं च भृगुपतेः परशुरामस्य विजयेनोन्नतं वालिरावणयोरपि जितप्रायत्वेनात्यन्तविजयशालिनं प्रियं परमप्रेमास्पदं वत्सं राममभिनन्द्य सुखी सन्निरतिशयसुखयुक्तः सन् । भूमनि मत्वर्थीय इनिप्रत्ययः । गृहानुपेयां प्राप्नुयाम् । अस्मिन्नर्थे भवन्तोऽनुजानन्त्विति पूर्वेण संबन्धः । उपेयामिति प्रार्थनायां लिङ् । पुष्पिताग्रा वृत्तम् । तदुक्तम्—'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति ॥३२॥ **वत्सेति** । ते कौशिकस्त्वदेकप्रियः कौशिकः प्रस्थितः । गन्तुमुपचक्रम इत्यर्थः ॥ **अहमिति** । सौम्य सोमवत्प्रियदर्शन, अहमेव केवलोऽहम् । वक्ष्यमाणानुष्ठाननित्यत्वविरहितोऽहमिति यावत् । त्वां मोक्तुं त्यक्तुं नोत्सहे न व्यवस्यामि । 'उत्साहोध्यवसायः स्यात्' इत्यमरः । **किं त्विति** । अनुष्ठाननित्यत्वं नित्यानुष्ठानकत्वमनुष्ठाननैयत्यं वा । तच्च प्रत्यवायप्रयोजकीभूताभावप्रतियोगित्वमनुष्ठानस्य विवक्षितम् ।

**वसिष्ठः**—स्वगृहात्स्वगृहं गन्तुमागन्तुं च कामचारः ।

**विश्वामित्रः**—भगवन्, यद्यनुरुध्यसे तदेहि सिद्धाश्रमपदमुभौ गच्छावः । त्वां पुरस्कृत्य गच्छन्मधुच्छन्दसो मातुः सत्कार्यो भविष्यामि ।

**वसिष्ठः**—किमेतावत्यपि भवानस्मासु न प्रभवति ।

**राजानौ**—रमणीयः पावनो ब्रह्मर्षिसंगमः ।

अन्योन्यमाहात्म्यविदोरन्यैरविदितात्मनोः ।
विभ्राजते विरोधोऽपि नाम स्नेहे तु का कथा ॥ ३४ ॥

(नेपथ्ये)

एषा रामवधूर्गुरून्वन्दते ।

---

स्वातन्त्र्यं स्वैरावस्थितिमपकर्षति नाशयति । कदाचिदङ्गीकृतामपि स्वैरावस्थितिं प्रायश्चित्तानुष्ठापनेन द्विगुणायासजननेन निष्फलतीत्यर्थः । तद्विवृणोति—संकटेत्यादिना । आहिताग्नीनाम् । 'अग्नीनादधीत' इत्युक्ताधानसंस्कृताग्नियुक्तानां पुरुषाणाम् । इदं च 'यावज्जीवमग्निहोत्रं जुहुयात्', 'वसन्ते ज्योतिषा यजेत' इत्याद्युक्तनित्यक्रतूनामुपलक्षणम् । गृहस्थता गृहस्थाश्रमः प्रत्यवायैः स्वैरावस्थितिमूलकाननुष्ठानप्रयुक्तदोषैः संकटा निषिद्धा । भवतीति शेषः । हि यस्मादेवं तस्मादनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षतीति संबन्धः ॥३३॥ **स्वगृहादिति** । स्वगृहतुल्यान्मिथिलानगरात्स्वगृहं सिद्धाश्रमं गन्तुमागन्तुं च कामचारः । भवतीति शेषः । गमनागमनार्था कामचारक्रिया भवतीत्यर्थः । कामेनेच्छया चारो व्यापारः कामचारः ॥ **भगवन्निति** । भगवन्, यद्यनुरुध्यसे यदि कामयसे । 'अनो रुध कामे' इति धातुपाठः । सिद्धाश्रमपदं सिद्धाश्रमरूपं स्थानम् । **त्वामिति** । अहमिति शेषः । अहं त्वां ब्रह्मर्षिश्रेष्ठं पुरस्कृत्य गच्छन्सन्मधुच्छन्दसो मातुर्मधुच्छन्दा विश्वामित्रपुत्रस्तस्य माता विश्वामित्रपत्नी तस्याः सत्कार्य आदरणीयो भविष्यामि । गुणवत्पुत्रप्रसूत्वप्रयुक्तगौरवातिशयख्यापनाय मधुच्छन्दसो मातुरित्युक्तम् । पूर्वं बहुशो विप्रकृतस्यानन्तरं मित्रीभवतः स्वस्यापि ब्रह्मर्षित्वप्रदस्य परमपूज्यस्य वसिष्ठस्यातिथेर्लाभात्तस्याः प्रीत्यतिशयो भवतीति भावः ॥ **किमिति** । एतावत्यप्यत्यल्पेऽपि सिद्धाश्रमागमननियोगे भवान्पूज्यस्त्वमस्मासु मां प्रति न प्रभवति किम् । प्रभुर्न भवसि किमित्यर्थः ॥ राजानौ दशरथजनकौ । रमणीयो हृद्यः । पावनो दर्शनश्रवणादिना जनानां पापहरो ब्रह्मर्ष्योर्वसिष्ठविश्वामित्रयोः संगमः समागमः । **अन्योन्येति** । अन्योन्यमाहात्म्यविदोरितरेतरप्रभावाभिज्ञयोरन्यैः स्वान्यैरविदितात्मनोर्दुर्ज्ञेयस्वरूपयोः । ब्रह्मर्ष्योरिति शेषः । विरोधोऽपि विद्वेषोऽपि विभ्राजते नाम परोपकारहेतुतया विशेषेण दीप्यत इति प्रसिद्धमेव । परोपकारहेतुत्वं च त्रिशङ्कुहरिश्चन्द्रादिविषये व्यक्तम् । स्नेहे तु वसिष्ठविश्वामित्रयोः परस्परसौहार्दे तु विषये का कथा । विभ्राजत इति किमु वक्तव्यमित्यर्थः । विश्वोपकारहेतुत्वादिति भावः ॥ ३४ ॥ **एषेति** । रामवधूः सीता गुरून्वसिष्ठादीन्वन्दतेऽभिवादयते ॥

**ऋषयः**—वत्से जानकि,

वीरेण ते विजयमाङ्गलिकेन पत्या
वृत्रद्रुहः प्रशमितेषु महाहवेषु ।
क्षत्रप्रकाण्डगृहिणीबहुमानपूजा-
मूर्जस्वलामपि शची मनसा करोतु ॥ ३५ ॥

**रामः**—(स्वगतम् ।) अचिरात्समूलकाषं कषितेषु राक्षसेष्वेवं स्यात् ।

**ऋषयः**—स्वस्त्येवमेवासतां भगवन्तः । (इत्युत्तिष्ठन्ति ।)

**इतरे**—(उत्थाय ।) नमो नमो वः ।

**जामदग्न्यः**—भगवन्तौ, जामदग्न्योऽभिवादयते ।

**वसिष्ठविश्वामित्रौ**—

स्थिरस्ते प्रशमो भूयात्प्रत्यग्ज्योतिः प्रकाशताम् ।
अभिन्नशिवसंकल्पमन्तःकरणमस्तु ते ॥ ३६ ॥

(इति निष्क्रान्तौ ।)

---

ऋषयो वसिष्ठादयः । **वीरेणेति** । हे वत्से जानकि, वीरेण जगति मुख्येन वीरेण । 'मुख्यस्य निर्विशेषशब्दोऽन्येषां विशेषतः' इत्युक्त्या मुख्यत्वलाभः । मङ्गलं प्रयोजनमस्य माङ्गलिकः । विजये सति माङ्गलिको विजयमाङ्गलिकः । 'सप्तमी' इति योगविभागात्समासः । आनुषङ्गिकेण परशुरामविजयेन सह त्वत्प्राप्तिरूपमङ्गलं लब्धवतेत्यर्थः । ते पत्या । 'अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा' इत्युक्तरीत्या त्वदधीनसर्वोत्कर्षवता रामेण कर्त्रा वृत्रद्रुह इन्द्रस्य महाहवेषु महायुद्धेषु प्रशमितेषु सत्सु निवर्तितेषु सत्सु शच्यपीन्द्राण्यप्यूर्जस्वलां प्रबलाम् । 'ज्योत्स्नातमिस्रा-' इत्यादिनोर्जस्वलशब्दो निपातितः । क्षत्रप्रकाण्डगृहिणीनां क्षत्रियश्रेष्ठपत्नीनां या बहुमानपूजा गौरवातिशयप्रयुक्तपूजा तां मनसा वञ्चनया विना मानसपूर्वकं करोतु । यद्वा क्षत्रप्रकाण्डगृहिणी इति पृथक्पदं शचीविशेषणम् । क्षत्रप्रकाण्डं क्षत्रियश्रेष्ठ इन्द्रः । 'ब्रह्म बृहस्पतिः क्षत्रमिन्द्रः मरुतो वै देवानां विशः' इति श्रुत्येन्द्रस्य क्षत्रत्वमुक्तम् । तस्य गृहिणी पत्नी शच्यप्यूर्जस्वलां बहुमानपूजां करोत्विति पूर्ववदर्थः ॥ ३५ ॥ **अचिरादिति** । राक्षसेषु रावणादिषु समूलकाषं कषितेषु मूलेन सह नाशितेषु सत्स्वेवं स्यात् । शचीकर्तृका बहुमानपूजा स्यादित्यर्थः । 'निमूलसमूलयोः कषः' इति समूलशब्द उपपदे कषतेः 'कषादिषु यथाविध्यनुप्रयोगः' इति णमुल् । प्रकृतेः कषतेरनुप्रयोगः । अत्र स्वगतत्वोक्तेः प्रकाशानुक्तिः प्रौढ्येति वदन्ति ॥ **स्वस्तीति** । भगवन्तो वसिष्ठविश्वामित्रावेवमेव परस्परसौहार्देनैव स्वस्त्यासतां मङ्गलं यथा तथा तिष्ठन्तु ॥ **स्थिर इति** । स्थिरः प्रशमो बलवतापि कारणेनाप्रकम्प्या प्रकृष्टा शान्तिरन्तरिन्द्रियनिग्रहस्ते भूयात् । आशिषि लिङ् । प्रत्यग्ज्योतिः स्वसे स्वयंप्रकाशमानमात्मरूपं ज्योतिस्ते प्रकाशताम् । योगदृष्ट्येति शेषः । अत्र 'आत्म-

**जामदग्न्यः**—(किंचित्परिक्रम्य स्थित्वा च ।) वत्स रामभद्र, इतस्तावत् ।

**रामः**—(उपसृत्य ।) आज्ञापय ।

**जामदग्न्यः**—

यन्मदा क्षत्रविच्छेदविश्रान्तेनापि धारितम् ।
तदेतदधुना धत्ते धनुः करणशून्यताम् ॥ ३७ ॥

इध्मादिव्रश्चनप्रयोजनस्तु परशुः ।

पुण्यानामृषयस्तटेषु सरितां ये दण्डकायां वने
भूयांसो निवसन्ति तेषु सततं लङ्कासदो राक्षसाः ।
विध्वंसाय चरन्ति तत्प्रमथने त्वस्योपयोगो भवे-
त्संप्रत्येष सहामुनैव धनुषा वत्सेऽधिकारः स्थितः ॥ ३८ ॥

(इति धनुरर्पयति ।)

**रामः**—(प्रणम्य ।) गृहीतेयमाज्ञा ।

---

ज्योतिः सम्राद् प्राणेषु हृद्यं तज्ज्योतिः' इत्यादिकं द्रष्टव्यम् । ज्योतिःशब्देन स्वयंप्रकाशकत्वं विवक्षितम् । तच्च धर्मभूतज्ञानेऽप्यस्तीति प्रत्यगित्युक्तम् । प्रत्यञ्चतीति प्रत्यक् । भाववाचिना प्रतिशब्देन प्रकाशशेषित्वमुक्तं तदेव स्वस्मै भासमानत्वं नैयायिकाभिमतजडात्मवादव्युदासाय ज्योतिरित्युक्तम् । अत्र प्रशमोक्तिर्दमादीनामुपलक्षणार्थम् । अनेन 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यति' इति श्रुत्यर्थो दर्शितः । अभिन्नोऽविनष्टः शिवः मङ्गलकरः संकल्पो मानसं कर्म यस्य तत्तथोक्तमन्तःकरणं मनस्तेऽस्तु । पूर्वत्रात्र चाशिषि लोट् ॥ ३६ ॥ **वत्सेति** । इतस्तावत् । आगन्तव्यमिति शेषः ॥ **आज्ञापयेति** । किमितिकर्तव्यमिति शेषः ॥ **यदिति** । क्षत्रविच्छेदात्क्षत्रध्वंसनाद्विश्रान्तेनापि विरतेनापि मया यद्धनुर्धारितं धृतं तदेतद्धनुरधुना त्वया मद्दमनानन्तरकाले करणशून्यतां युद्धात्मकव्यापारशून्यतां धत्ते ॥ ३७ ॥ परशुस्त्विध्मादीनामिध्मसमित्काष्ठानां व्रश्चनं च्छेदनं प्रयोजनं यस्य स तथोक्तः सन्मय्येव तिष्ठत्विति शेषः । धनुःपरश्वधयोर्मध्ये परश्वधस्य सप्रयोजनत्वात्स मयि तिष्ठतु । धनुषस्तु मयि निष्प्रयोजनत्वात्त्वयि च सप्रयोजनत्वात्तवेदमस्त्वित्याह—**पुण्यानामित्यादिना** । दण्डकायां वने पुण्यानां सरितां पावनीनां गोदावर्यादिनदीनां तटेषु तीरेषु भूयांसो बहुतरा ये ऋषयो निवसन्ति तेषु विषये । लङ्कायां सीदन्ति तिष्ठन्तीति लङ्कासदः । 'सत्सूद्विष-' इत्यादिना क्विप् । विध्वंसाय विध्वंसं कर्तुम् । ऋषीणां हानिं कर्तुमित्यर्थः । चरन्ति संचरन्ति तेषां राक्षसानां वधे त्वस्य धनुष उपयोग उपकारकता भवेत् । संप्रत्यमुना धनुषा सह एषोऽधिकारो राक्षसवधे कर्तृभावो वत्स एव स्थितस्त्वय्येव तिष्ठति ॥ ३८ ॥ इति धनुरर्पयति । इत्युक्त्वा धनुर्ददातीत्यर्थः ॥ **प्रणम्येति** । इयमाज्ञा परशुरा-

**जामदग्न्यः**—(सास्रं परिक्रम्य ।) आयुष्मन्, प्रतिनिवर्तस्व ।
(इति निष्क्रान्तः ।)

**रामः**—(सबाष्पम् ।) गतो भगवान्भार्गवः । (विचिन्त्य ।) अपि नामान्येन केनचिदुपायेन दण्डकारण्यं प्रतिष्ठेयम् । कथं च रामप्रिया-द्गुरुजनादेवं स्यात् ।

न्यस्तशस्त्रे भृगुपतौ परतन्त्रे तथा मयि ।
कष्टमुत्सारिताः क्रूरैर्यातुधानैस्तपोधनाः ॥ ३९ ॥

(नेपथ्ये ।)

आर्य,

मध्यमायाः प्रियसखी मातुर्नो मन्थरेति या ।
सा प्राप्तेयमयोध्यायास्तव राम दिदृक्षया ॥ ४० ॥

**रामः**—साधु यदीदमस्यां प्रवृत्त्यां शिशुप्रवासदौर्मनस्यं विच्छिद्येत । तद्वत्स लक्ष्मण, समुपसर्पय ।

---

मेण कृता राक्षसवधाज्ञा गृहीता । मयेति शेषः । एष संचितार्थप्राप्तिरूपः क्रम उक्तः ॥ **आयुष्मन्निति** । आयुःशब्दाद्भूम्नि मतुप्प्रत्ययः । प्रतिनिवर्तस्व । अलं मामनुगम्य, निवृत्तो भवेत्यर्थः । इत्युक्त्वा निष्क्रान्त इत्यर्थः ॥ **अपि नामेति** । अन्येन भार्गवानुगमनादन्येनापि प्रतिष्ठेयं किम् । प्रस्थितः स्यामित्यर्थः । अत्र वितर्कप्रतिपादकवाक्यात्मकं रूपं नाम संध्यङ्गमुक्तम् । **कथं चेति** । प्रियो रामो यस्य स रामप्रियः । 'वा प्रियस्य' इति प्रियशब्दस्य परनिपातः । गुरुजनाद्धेतोरेवं दण्डकारण्यगमनं कथं स्यात् । गुरुजनो मम दण्डकारण्यगमनहेतुर्न भवति रामप्रियत्वादित्यनुमानमत्र विवक्षितम् । अतोऽत्र लिङ्गादभ्यूहनात्मकमनुमानं नाम संध्यङ्गमुक्तम् । **न्यस्तेति** । भृगुपतौ परशुरामे न्यस्तानि त्यक्तानि शस्त्राण्यायुधानि येन स तथोक्तस्तथाविधे सति । 'शस्त्रमायुधलोहयोः' इति रत्नमाला । तथा मयि परतन्त्रे सति गुरुजनाधीने सति । यातुधानावकाशहेतुत्वेन सादृश्ये तथाशब्दः । क्रूरैर्हिंसकैर्यातुधानै राक्षसैः कर्तृभिः । तप एव धनं प्राणेभ्योऽपि रक्षणीयं येषां ते तथोक्ता ऋषयः ततो भङ्गभिया शमुमसमर्था इत्यर्थः । उत्सारिता निष्कासिताः । भवन्तीति शेषः । कष्टं दुःखं स्यात् । 'स्यात्कष्टं कृच्छ्रमाभीलम्' इत्यमरः ॥ ३९ ॥ **मध्यमाया इति** । हे राम, नोऽस्माकं मध्यमाया मातुः । कैकेय्या इत्यर्थः । प्रियसखी मन्थरेति मन्थरानाम्नी । यास्तीति शेषः । सेयं मन्थरा तव दिदृक्षया त्वद्दर्शनेच्छयायोध्यायाः । अपादाने पञ्चम्यन्तमिदम् । प्राप्ता । आगतेत्यर्थः ॥ ४० ॥ **साध्विति** । अस्यां प्रवृत्त्यां मन्थराहृतायां वार्तायाम् । 'वार्ता प्रवृत्तिर्वृत्तान्तः' इत्यमरः । इदमस्मदपेक्षितं शिश्वोरावयोः प्रवासेन देशान्तरस्थित्या दौर्मनस्यं दुःखितमनस्कत्वं यदि विच्छिद्येत नास्तीत्युपलभ्येत यदि साधु समीचीनम् । तत्तस्मा-

(ततः प्रविशति लक्ष्मणः शूर्पणखा च ।)

**शूर्पणखा**—(स्वगतम् ।) आविट्ठम्हि मन्थरासरीरे सुप्पणहा । वसिट्ठविस्सामित्तगमणेण सुसमाहिदम् । अह्मो एसो परसुरामविअई खत्तिअकुमारो रामो । (निर्वर्ण्य ।) अह्मो समग्गसोभग्गलच्छीपरिग्गहेण लोअणरसाअणं सोम्मं से सरीरणिम्माणम्, जं दाणिं चिरआलवेहव्वदुक्खप्पमुसिदसंसारसोक्खस्स वि जणस्स चारित्तं हिअए समक्खिवेदि ।

**रामः**—(उपसृत्य ।) अयि मन्थरे, अपि कुशलमम्बायाः ।

**शूर्पणखा**—[२]कुसळं सुहं अ । वच्छ, सा सदा पण्णुदत्थणी मज्झमा

---

१. आविष्टास्मि मन्थराशरीरे शूर्पणखा । वसिष्ठविश्वामित्रगमनेन सुसमाहितम् । अहो एष परशुरामविजयी क्षत्रियकुमारो रामः । अहो समग्रसौभाग्यलक्ष्मीपरिग्रहेण लोचनरसायनं सौम्यमस्य शरीरनिर्माणम्, यदिदानीं चिरकालवैधव्यदुःखप्रमुषितसंसारसौख्यस्यापि जनस्य चारित्रं हृदये समाक्षिपति ।

२. कुशलं सुखं च । वत्स, सा सदा प्रस्नुतस्तनी मध्यमा ते माता परि-

---

त्समुपसर्पय समीपं प्रापय । मन्थरामिति शेषः ॥ **सुसमाहितमिति** । कार्यमिति शेषः । निर्व्याक्षेपमस्मत्कार्यमित्यर्थः । निर्वर्ण्यालोक्य । 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः । समग्रस्य संपूर्णस्य सौभाग्यस्य सौन्दर्यस्य लक्ष्म्याः समृद्धेः परिग्रहेण स्वीकारेण हेतुना लोचनानां जगन्नयनानां रसायनं रसायनाख्यौषधविशेषम् । 'यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम्' इति वाग्भटः । 'द्रष्टॄणां रामसौन्दर्यं जरादोषमपोहति' इत्यर्थः । उक्तं च दशरथेनापि—'नन्दामि पश्यन्नपि दर्शनेन भवामि दृष्ट्वा च पुनर्युवेव' इति । अनेन शूर्पणखया स्वकीयजरादोषचोद्यं प्रत्युक्तं भवति । सौम्यं सोमसंबन्धि । 'सोमाट्ट्यण्' इति ट्यण्प्रत्ययः । 'सौम्यः पुमान्बुधे विप्रे त्रिषु स्यात्सोमदैवते । रम्येऽनुग्रे च' इति रत्नमाला । शरीरनिर्माणं शरीरसंसृष्टिः । **यदित्यादि** । यद्रामस्य शरीरनिर्माणमिदानीमत्यन्तजरायामपि चिरकालवैधव्यदुःखेन बहुकालानुवृत्तभर्तृमरणदुःखेन । आदिकाले रावण एवास्याः पतिं जघानेत्युत्तरश्रीरामायणे स्पष्टम् । प्रमुषितं प्रणाशितं संसारसौख्यमात्मनां देहपरिग्रहप्रयोजनीभूतयोषित्पुरुषसंसर्गसुखं यस्य स तथोक्तस्तथाविधस्यापि जनस्य । ममेत्यर्थः । चारित्रं पातिव्रत्यात्मकं वृत्तम् । द्वितीयान्तमिदम् । 'भूवादिगृभ्यो णित्रन्' इति प्रक्रम्य 'चरेर्वृत्ते' इत्यनेन चरधातोर्णित्रन्प्रत्ययेन चारित्रशब्दो निष्पन्नः । 'चारित्रं शीलम्' इति वैयाकरणाः । हृदये मनसि समाक्षिपति चालयति । 'क्षिपु निरसने' ॥ अपि कुशलम् । कुशलं पृच्छयत इत्यर्थः । 'गर्हा समुच्चयप्रश्नशङ्कासंभावनास्वपि' इत्यमरः ॥ **कुशलं सुखं चेति** । कुशलं मनःप्रियम्, सुखमात्मसुखम् । धनधान्यरत्नवस्त्रादिना कुशलम्, अन्नपानादिभिरारोग्येण च सुखमिति भेदः । 'कुशलं क्षेममस्त्रियाम्', 'शर्मसातसुखानि च' इत्यमरः । सदा प्रस्नुतस्तनी । प्रस्नुतौ पुत्रस्ने-

दे मादा परिसज्जीअ आणवेदि—'पुत्तअ, पुरा पडिण्णादे दुवे वरे महाराअं जाणावेमि। तत्थ मे विण्णत्तिहारओ होहि'। एसो दे तादस्स कज्जलेहो। (इति लेखमर्पयति।)

**लक्ष्मणः**—(गृहीत्वा वाचयति।)

'अस्त्वेकेन वरेण वत्सभरतो भोक्ताधिराज्यस्य ते
यात्वन्येन विहाय कालहरणं रामो वनं दण्डकाम्।
तस्यां चीरधरश्चतुर्दशसमास्तिष्ठत्वसौ तं पुनः
सीतालक्ष्मणमात्रकात्परिजनादन्यो न चानुव्रजेत्॥ ४१॥

---

ष्वज्याज्ञापयति—'पुत्रक, पुरा प्रतिज्ञातौ द्वौ वरौ महाराजं ज्ञापयामि। तत्र मे विज्ञप्तिहारको भव'। एष ते तातस्य कार्यलेखः।

---

हेन क्षीरप्रस्रवयुक्तौ स्तनौ यस्याः सेति विग्रहे बहुव्रीहिः। 'स्वाङ्गाच्च' इत्यादिना ङीष्। परिष्वज्यालिङ्ग्य। प्रतिज्ञातौ दास्यामीति सशपथमुक्तौ वरौ प्रसादौ। गुणादयः शब्दाः पुंसि क्लीबे च स्युरित्यर्थकेन 'गुणे गा' इति प्राकृतव्याकरणसूत्रेण वरशब्दस्य प्राकृते क्लीबत्वम्। संस्कृते पुंस्त्वम्। यद्वा वरशब्दोऽयमिष्टवाची सन्संस्कृतेऽपि नपुंसकलिङ्गो भवति। 'देवप्रसादे वरणे जामातरि वरः पुमान्। क्लीबे तु कुङ्कुमे श्रेष्ठे त्रिष्विष्टे त्वव्ययं वरम्॥' इति रत्नमाला। तत्रेति। वरद्वयज्ञापन इत्यर्थः। विज्ञप्तिहारको महाराजं प्रति विज्ञापनाप्रापकः। भवेत्यनन्तरमितिशब्दोऽध्याहर्तव्यः। भवेत्याज्ञापयतीति पूर्वेण संबन्धः। कार्यज्ञापको लेखः कार्यलेखः। इत्युक्त्वा ददातीत्यर्थः॥ वाचयति पठति। चौरादिकोऽयं वचिः स्वार्थणिजन्तः। लेखार्थमाह—**अस्त्वित्यादिना**। एकेन वरेण पुरा त्वद्दत्तवरद्वये प्रथमेन प्रदानेन वत्सभरतः पुत्रभरतस्तेऽधिराज्यस्य त्वदीयस्य राजकर्मभूतपरिपालनविषयस्य सर्वभूमण्डलस्य। अधिराजस्य कर्माधिराज्यमित्यर्थे संज्ञापूर्वकविधेरनित्यत्वादधिशब्दे वृद्ध्यभावः। यद्वाधिकं राज्यमधिराज्यमिति वा विग्रहः। अथवा आधिराज्यमित्येव पदच्छेदः कार्यः। भोक्तास्तु। प्रार्थनायां लोट्। अन्येनेति वरेणेत्यनुषङ्गः। अन्येन वरेण हेतुना कालहरणं विहाय कालक्षेपं विहाय। क्षिप्रमिति यावत्। रामो दण्डकां वनं यातु। अत्रापि प्रार्थनायां लोट्। असौ रामस्तस्यां दण्डकायाम्। 'बुद्धेरात्मा महान्परः। महतः परमव्यक्तम्' इत्यत्रेव विशेषणस्य तच्छब्देन परामर्शः। चीरधरः सन्वल्कलधरः सन्। 'सुशुसिचिमीनां दीर्घश्च' इति चिनोतेरप्रत्यये चीरशब्दो निष्पन्नो वल्कलवाची। 'चीरं नपुंसकम्। गोस्तने वस्त्रभेदे च' इति मेदिनी। चतुर्दशसमाश्चतुर्दशवर्षाणि। 'समाः स्त्री वत्सरे साधु सर्वतुल्येषु तु त्रिषु' इति रत्नमाला। तिष्ठतु। वसत्वित्यर्थः। तं पुना रामं पुनः। सीता च लक्ष्मणश्च सीतालक्ष्मणम्। समाहारे द्वन्द्वः। सीतालक्ष्मणमेव सीतालक्ष्मणमात्रम्। मयूरव्यंसकादित्वात्समासः। सीतालक्ष्मणमात्रमेव सीतालक्ष्मणमात्रकः। स्वार्थिकः कन्प्रत्ययः।

**रामः**—अहो प्रसादोत्कर्षः ।

तत्रैव गमनादेशो यत्र पर्युत्सुकं मनः ।
न चेष्टविरहो जातः स च वत्सोऽनुजोऽनुगः ॥ ४२ ॥

**लक्ष्मणः**—दिष्ट्यानुमोदितोऽहमार्येण ।

**रामः**—आर्ये मन्थरे, प्रस्थितोऽस्मि ।

**शूर्पणखा**—ँणमो दाणिं भअवदो संसारस्स जस्सिं ईदिसा वि कप्पहुमा परोहन्दि ।

(इति निष्क्रान्ता ।)

**लक्ष्मणः**—आर्य, मातुलो युधाजिदार्यभरतसहचरस्तातमुपसर्पति ।

**रामः**—दिष्ट्या । कष्टं च ।

अपरिष्वज्य भरतं नास्ति मे गच्छतो धृतिः ।
अस्मत्प्रवासदुःखार्तं न त्वेनं द्रष्टुमुत्सहे ॥ ४३ ॥

---

१. नम इदानीं भगवते संसाराय, यस्मिन्नीदृशा अपि कल्पद्रुमाः प्ररोहन्ति ।

---

तस्मात्परिजनात् । 'अन्यारादितरर्ते–' इत्यादिना पञ्चमी । अन्यः परिजनो नानुव्रजेन्नानुगच्छेत् । अत्रापीतिशब्दोऽध्याहर्तव्यः । इति वाचयतीति पूर्वेण संबन्धः ॥ ४ ॥ प्रसादोत्कर्षोऽनुग्रहातिशयः । अहो । विस्मयनीय इत्यर्थः । **तत्रेति** । मनो यत्र दण्डकायां पर्युत्सुकं राक्षसकृतमुनिजनपीडानुसंधानेन गन्तुं सोत्कण्ठम् । स्थितमिति शेषः । तत्रैव दण्डकायामेव गमनादेशो गमनाज्ञा । कृत इति शेषः । 'आङ्पूर्वो दिशिर्नियोक्तृप्रयोजनवचनः' इति न्यासकारः । किं चेष्टस्य प्रियस्य विरहो न जातः । कथमित्यत्राह—स चेति । अनुजो वत्सः स लक्ष्मणोऽनुगश्चानुगन्ता च । आदिष्ट इति शेषः ॥ ४२ ॥ **दिष्ट्येति** । आर्येण रामेणानुमोदितोऽहं मध्यमाम्बयादिष्टवनानुगमने प्रीतिविषयीकृतोऽहम् ॥ **आर्ये इति** । मातुः प्रियसखीत्वादार्यशब्दप्रयोगः ॥ **नम इति** । प्राकृते चतुर्थ्यभावात्संसारस्येति षष्ठी । संसारः प्राणिनां प्रपञ्चस्तस्य स्ववञ्चनासाफल्यहेतुत्वाद्भगवत इति पूजानिर्देशः । ईदृशाः पितृवाक्यपरिपालनादिरूपश्रद्धातिशययुक्तरामलक्ष्मणादिरूपाः कल्पद्रुमाः । वनगमनाभ्युपगमेन स्वाभीष्टसंपादनात्कल्पवृक्षत्वोक्तिरूपणम् । प्ररोहन्ति । जायन्त इत्यर्थः । 'रुह बीजजन्मनि प्रादुर्भावे च' इति धातुपाठः ॥ **मातुल इति** । मातुलः कैकेय्या भ्राता । लक्ष्मणं प्रति भरतस्य ज्येष्ठत्वादार्यत्वम् । तातं दशरथम् ॥ दिष्ट्या । कष्टं च । आनन्दो दुःखं च युगपद्भवत इत्यर्थः । कुत इत्यत्राह—**अपरिष्वज्येति** । भरतमपरिष्वज्य भरतमनालिङ्ग्य गच्छतो मे दण्डकावनं गच्छतो मम धृतिर्नास्ति । सत्ता न भविष्यतीत्यर्थः । 'धृतिर्धारणधैर्ययोः' इत्यमरः । अस्माकं लक्ष्मणस्य मम च प्रवासेन देशान्तरगमनेन दुःखार्तं दुःखपीडितमेनं भरतं द्रष्टुम् । न तूत्सहे नैव व्यवस्यामि । परिष्वङ्गे कर्मतयोपात्तस्य दर्शने कर्मतयोपादानेनान्वादेशादेनादेशः ।

(प्रविश्य ।)

**युधाजिद्भरतौ**—(दशरथमुपसृत्य) देव, श्रूयताम् । यदेकायनीभूय सर्वाः प्रकृतयस्त्वां विज्ञापयन्ति—

'त्रय्यास्त्राता यस्तवायं तनूज-
स्तेनाद्यैव स्वामिनस्ते प्रसादात् ।
राजन्वन्तो रामभद्रेण राज्ञा
लोकाः सर्वे पूर्णकामाश्च सन्तु ॥ ४४ ॥'

**दशरथः**—सखे जनक,

प्रियं कल्याणकामाभिः प्रजाभिश्चोदिता वयम् ।
किंतु रामप्रियौ नेह मैत्रावरुणकौशिकौ ॥ ४५ ॥

**जनकः**—

परोक्षे सुकृतं कर्म तयोः प्रीतिं करिष्यति ।
मन्त्रज्ञो वामदेवस्तु भगवानास्त एव हि ॥ ४६ ॥

---

प्रयाणकाले भरतपरिष्वङ्गादानन्दः, प्रयाणहेतुकभरतदुःखदर्शनाद्दुःखं चेति सुखदुःखयोर्यौगपद्यमिति भावः ॥ ४३ ॥ एकायनीभूय रामाभिषेकात्मकाभीष्टरूपैकाधिकरणस्थिता भूत्वा । 'अयनं निलये मार्गे दक्षिणोदग्गतौ रवेः' इति रत्नमाला । सर्वाः प्रकृतयः समस्ताः पौराणां श्रेणयः । 'राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च' इत्यमरः । **त्रय्या इति** । त्रय्या वेदस्य त्राता रक्षको योऽयं तव तनूजः । भवतीति शेषः । तेन तथाविधेन । त्रयीरक्षकत्वादेर्भरतादिसाधारण्यं मत्वाह—रामभद्रेणेति । भद्रश्चासौ रामश्च रामभद्रः । 'शुभमङ्गलयोर्भद्रं स्याद्रम्यश्रेष्ठयोस्त्रिषु' इति रत्नमाला । बहुलग्रहणाद्भद्रशब्दस्य परनिपातः । यद्वा भद्र इव रामो रामभद्रः । 'उपमितं व्याघ्रादिभिः–' इत्यादिना समासः । 'भद्रश्चापि गजान्तरे' इति रत्नमाला । राज्ञा मुख्यराजत्ववता सर्वे लोका राजन्वतः शोभनराजयुक्ताः पूर्णकामाश्च विषयसिद्धिभिः परिपूर्णाभिलाषाश्च । विधेयविशेषणमिदं द्वयम् । स्वामिनस्ते प्रसादात्परमेश्वरस्य तवानुग्रहात्सन्तु भवन्तु । प्रार्थनायां लोट् । इति विज्ञापयन्तीति पूर्वेण संबन्धः ॥ ४४ ॥ **प्रियमिति** । कल्याणः शुभकरः कामोऽभिलाषो यासां तास्तथोक्तास्ताभिः प्रजाभिः कर्त्रीभिः । स्वानुकूलत्वमानन्दत्वं स्वस्यान्येषां चाविशेषेणानुकूलत्वं कल्याणत्वमित्यभियुक्ताः । वयमहं प्रियं सर्वप्रियं रामाभिषेकं चोदिताः । अनुशिष्टा इत्यर्थः । चोदयतेर्द्विकर्मकत्वात्प्रियमित्यस्यापि कर्मसमर्पकत्वम् । किंतु तथात्वेऽपि रामप्रियौ प्रियरामौ, मैत्रावरुणकौशिकौ वसिष्ठविश्वामित्राविहास्मिन्देशे न स्त इत्यर्थः । तयोः संनिधानमेव विलम्बहेतुरिति भावः ॥ ४५ ॥ **परोक्ष इति** । वसिष्ठविश्वामित्रयोरसंनिधौ । अक्ष्णः परमिति विग्रहे 'प्रतिपर–' इत्यादिना समा-

**दशरथः**—यद्येवं तदयं जामदग्न्यविजयोत्सवः प्रसज्यतामभिषेकमहोत्सवेन । यो यदर्थी महोत्सवेऽस्मिंस्तत्तस्मै दीयताम् ।

**रामः**—(उपसृत्य प्रणम्य च ।) अहं तावदर्थी ।

**दशरथः**—वत्स, केन ।

**राजा**—

योऽसौ वरद्वयन्यासस्तं माता मेऽद्य मध्यमा ।
यथेष्टं नाथते तात तत्प्रसादार्थिनो वयम् ॥ ४७ ॥

**दशरथः**—

सत्यसंधा हि रघवः किं वत्स विचिकित्ससि ।
त्वयि दूतेऽपि कस्तस्याः प्राणानपि धनायति ॥ ४८ ॥

---

सान्तविधानसामर्थ्यादव्ययीभावः ।'परोक्षे लिट्' इति निपातनात्परस्यादेरुकारादेशश्च । सुकृतं सुष्ठु कृतं कर्म रामाभिषेकात्मकं कर्म तयोर्वसिष्ठविश्वामित्रयोः प्रीतिमानन्दं करिष्यत्युत्पादयिष्यति । अतस्तयोरसंनिधानेऽपि न दोष इति भावः । ननु पौरोहित्यादिकं कः कुर्यादित्यत्राह—मन्त्रज्ञ इति । मन्त्रज्ञोऽभिषेकरूपानुष्ठेयार्थप्रकाशकवेदभागज्ञोऽभिषेकार्थगुप्तवादज्ञश्च । 'वेदभेदे गुप्तवादे मन्त्रः' इत्यमरः । भगवान्वामदेव आस्त एव हि । अतः पौरोहित्यादिकं सुलभमित्यर्थः ॥ ४६ ॥ **यद्येवमिति** । एवं यदि पूर्वोक्तप्रकारो यदि तत्तस्मादयम् । 'प्रवर्त्यन्तां मङ्गलानि' इति पूर्वोपक्रान्त इत्यर्थः । जामदग्न्यविजयोत्सवः परशुरामविजयप्रयुक्त उत्सवोऽभिषेकमहोत्सवेन चिन्तितमेव तन्मध्योपनिपतितेन रामाभिषेकात्मकमहोत्सवेन कर्त्रा प्रसज्यतामुपजीवनीयाङ्गो भवेत् । परशुरामविजयोत्सवाङ्गान्येव रामाभिषेकाङ्गानि भवन्त्विति भावः । तदुक्तं तार्किकैः—'अन्यार्थानुष्ठिताङ्गजन्योपकारस्यान्येनोपजीवनं प्रसङ्गः' इति । **य इति** । अस्मिन्महोत्सवे रामाभिषेकरूपमहोत्सवे यः प्राणी यदर्थी येन वस्तुना सापेक्षो भवति । 'तृतीया तत्कृत–' इत्यादिना समासः । तद्वस्तु तस्मै दीयताम् । विध्यर्थे लोट् । इदं च रामाभिषेकस्य वैशेषिकाङ्गम् । यद्यपि परशुरामविजयोत्सवेऽपि वस्त्रान्नाभरणादिकं दीयते, तथापि तत्र दातुरिच्छया दानम्, अत्र त्वर्थिनामनुरोधेन दानमिति भवतीदं वैशेषिकाङ्गम् । **अहमिति** । तावच्छब्दः क्रमार्थकः । तिष्ठन्त्वन्ये, अर्थिनामहमेव प्रथमोऽर्थी भवामीत्यर्थः ॥ **केनेति** । केन । वस्तुनेति शेषः ॥ **योऽसाविति** । असावदूरविप्रकृष्टो यो वरद्वयरूपो न्यासो भूयोऽपि स्वीकार्यत्वेन निक्षिप्तोऽर्थः । 'पुमानुपनिधिर्न्यासः' इत्यमरः । तं वरद्वयं न्यासं मे मध्यमा माता कैकेयी यथेष्टमिष्टविशेषमनतिक्रम्य नाथते याचते । 'नाथृ नाधृ याञ्चोपतापैश्वर्याशीःषु' । भवता सामान्येन दत्तं वरद्वयं स्वामीष्टविशेषे व्यवस्थाप्य याचत इति भावः । हे तात, वयमहं लक्ष्मणादयश्च तस्याः प्रसादेन भवतोऽनुग्रहेणार्थिनः सापेक्षाः । भवाम इति शेषः ॥ ४७ ॥ **सत्यसंधा**

**रामः**—वत्स, वाच्यताम् ।

(लक्ष्मणः 'अस्त्वेकेन' (४।४१) इत्यादि वाचयति ।)

**सर्वे**—कथमन्यदेव किमपि । हा हताः स्मः ।

(राजा मूर्च्छति ।)

**रामलक्ष्मणौ**—तात, समाश्वसिहि समाश्वसिहि ।

**जनकः**—

इक्ष्वाकुवंशतिलकस्य नृपस्य पत्नी
तस्मिन्विशुद्धिमति राजकुले प्रसूता ।
अत्याहितं किमपि राक्षसकर्म कुर्या-
दार्या सती कथमहो महदद्भुतं नः ॥ ४९ ॥

**रामः**—तातपादाः,

सत्यसंधाः स्थ यदि वा रामो वा यदि वः प्रियः ।
तत्प्रसीदत मे माता पूर्णकामास्तु मध्यमा ॥ ५० ॥

---

**इति** । रघवो रघुवंशजाः सत्यसंधा यथार्थप्रतिज्ञाः । 'संधावधौ प्रतिज्ञायाम्-' इति रत्नमाला । भवन्तीति शेषः । हिः प्रसिद्धौ । उक्तं च पुराणरत्ने—'न ह्यर्थिनः कार्यवशाभ्युपेताः ककुत्स्थवंशे विमुखाः प्रयान्ति । किंत्वर्थिनामर्थि' तदानदीक्षाकृतव्रतं श्लाघ्यमिदं कुलं ते ॥' इति । किं विचिकित्सस्यस्मिन्नर्थे किं संशयवानसि । 'विचिकित्सा तु संशयः' इत्यमरः । हे वत्स, त्वयि तस्या दूतेऽपि मम प्राणभूते त्वयि तस्या कैकेय्याः संदेशहरेऽपि कः प्राणानपि सर्वापेक्षितान्प्राणानपि धनायत्यभिकाङ्क्षति । 'अशनायोदन्यधनायाबुभुक्षापिपासागर्धेषु' इति गर्धशब्दिताभिकाङ्क्षायां धनायेति निपातिताल्लट् । मत्प्राणेक्षितेष्वपि तत्राभिकाङ्क्षया प्राणा अपि मया दीयन्त इत्यर्थः । अप्रकरणेऽपीष्टजनातिसंधानात्मकमधिबलमुक्तम् ॥ ४८ ॥ **कथमिति** । अन्यदेव किमपि प्रकृतरामाभिषेकादन्यदेव वनगमनं मनसापि चिन्तयितुमनर्हम् । अत्रापतितमिति शेषः । हताः स्मः । दैवेनेति शेषः । हाशब्दो विषादे ॥ **इक्ष्वाकिति** । इक्ष्वाकुवंशतिलकस्येक्ष्वाकुवंशश्रेष्ठस्य । मुखालंकृतिवाचिनस्तिलकशब्दस्य गौण्या श्रेष्ठपरत्वम् । नृपस्य दशरथस्य पत्नी तत्कर्तृककर्मफलभोक्त्री । 'पत्युर्नो यज्ञसंयोगे' इति ङीप्, नकारश्च । विशुद्धिमति तस्मिन्राजकुले केकयकुले प्रसूता जनिता । कैकेयीति शेषः । आर्या सती साध्वी सती । 'गौर्यामार्या त्रिषु त्वेष कुलीनन्यायसाध्विषु' इति रत्नमाला । किमपि मनसा चिन्तयितुमनर्हमत्याहितं लोकभयंकरम् । 'अत्याहितं महाभीतिः कर्म जीवानपेक्षि च' इत्यमरः । राक्षसकर्म रक्षसामसाधारणं कर्म । रक्षःशब्दात् 'तस्येदम्' इत्यण् । कथं कुर्यात् । कर्तुं नार्हेत्यर्थः । इदं नोऽस्माकं महदद्भुतं महाश्चर्यम् । भवतीति शेषः ॥ ४९ ॥ **सत्येति** । तातपादा इत्यादि । यूयं

**दशरथः**—एवमस्तु । का गतिः ।

**जनकः**—हा वत्स रामभद्र, हा लक्ष्मण,

पुत्रसंक्रान्तलक्ष्मीकैर्यद्वृद्धेक्ष्वाकुभिर्धृतम् ।
त्वया तत्क्षीरकण्ठेन प्राप्तमारण्यकव्रतम् ॥ ५१ ॥

वत्से धन्यासि यस्यास्ते गुरुनियोगत एव भर्तुरनुगमनं जातम् ।

**दशरथः**—हा वत्से जानकि, कङ्कणधरैव रक्षसामुपहारीकृतासि ।

(इत्युभौ मूर्च्छतः ।)

**रामः**—वत्स लक्ष्मण, अत्यापन्नो गुरुजनः । कथं नामैतत् ।

---

सत्यप्रतिज्ञा भवथ चेत् । स्थेत्यस्तेर्लटि मध्यमपुरुषबहुवचनम् । 'सत्यसंधा हि रघवः' इत्यनुपदमेवोक्तं न विस्मर्यते चेदित्यर्थः । ननु त्वं प्राणेभ्योऽपि प्रियतमः । त्वद्वियोगे मम च प्राणात्ययो भवेत् । अतः प्राणात्ययेऽनृतवदनं न दोष इति शास्त्रमर्यादेत्यत्राह—राम इति । रामो युष्माकं प्रियो यदि । इष्टश्चेदित्यर्थः । 'त्वयि दूतेऽपि' इत्यादिकमप्यनुपदमेवोक्तं न विस्मर्यते चेदित्यर्थः । युष्माभिर्मम वनगमनानभ्यनुज्ञाने राम एव युष्माकं दुर्लभो भवेदिति हृदयम् । वाशब्दद्वयमपि विकल्पे । तत्तदा मे प्रसीदत मम प्रसादं कुरुत । किमर्थमित्यत्राह—मातेति । मे इत्यनुषङ्गः । मे मध्यमा माता पूर्णकामा विषयसिद्ध्या परिपूर्णमनोरथास्तु । प्रार्थनायां लोट् । मेशब्दस्य प्रसीदतेति पूर्ववाक्यावयवत्वान्न वाक्यादित्वम् ॥ ५० ॥ **एवमस्त्विति** । अस्त्वेकेनेत्यादिनोक्तप्रकारोऽस्त्वित्यर्थः । का गतिः । एतेन विना नान्यो रामलाभोपायोऽस्तीत्यर्थः । एवं हि सति कालान्तरे वास्माकं रामलाभः संभाव्यते । अन्यथा तु न तथेति हृदयम् ॥ **पुत्रेति** । पुत्रसंक्रान्ता आश्रयशैथिल्यात्स्वयमेवागता । न तु तैर्मनःपूर्वकं निहितेत्यर्थः । तथाविधा लक्ष्मीर्येषां ते तथोक्तास्तैरित्यर्थः । उरःप्रभृतित्वात्कप् । 'लक्ष्मीः संपद्रमा शोभा' इति रत्नमाला । वृद्धेक्ष्वाकुभिर्यदारण्यकव्रतं धृतम् । अभूदिति शेषः । तदारण्यकानामरण्यसदां व्रतम् । 'अरण्यान्मनुष्ये' इति वुञ् । क्षीरं कण्ठे यस्य स तथोक्तस्तेन बालेनेत्यर्थः । त्वया प्राप्तं लब्धम् । अभूदिति शेषः । पूर्वेषां हि पुत्रवत्त्वमुपभुक्तराज्यकत्वं च यावच्छरीरशैथिल्यं वार्धकं चेत्येतेषां समुदितत्व एवारण्यकव्रतधारणं जातम् । तव तु तेषु कस्यचिदप्यभावेऽप्यारण्यकव्रतधारणं जातमिति तेभ्यस्तव महद्वैलक्षण्यं जातम् । व्रतमित्यसमञ्जसवृत्तान्तव्यावृत्तिः ॥ ५१ ॥ **वत्स इति** । गुरुनियोगत एव श्वशुराज्ञयैव ॥ **हा वत्से इति** । 'अस्माकं तु जनकसुता दुहितैव' इत्युक्तरीत्या दुहितृत्वाभिसंधिना वत्से इति संबुद्धिः । कङ्कणधरैव वैवाहिककङ्कणयुक्तैव । 'निर्वृत्ते त्वथ कल्याणे' इत्यादिस्मृत्या कल्याणनिर्वर्तनानन्तरं हि कङ्कणमोचनं विहितम् । कङ्कणसत्त्वे तु कल्याणनिर्वर्तनानवगमात्कल्याणमध्य एव रक्षसामुपहारीकृतासीति दुःखातिशयो हाशब्देन द्योत्यते । यद्यपि द्वितीयाङ्कान्ते 'देव्यः कङ्कणमोचनाय मिलिताः' इत्युक्तं तथापि

**लक्ष्मणः**—ईदृशोऽयमापातकरुणस्नेहसंवेगः । किमत्र क्रियते । प्रतिषिद्धं च नः कालहरणमम्बया । तदलमतिस्नेहकातर्येण ।

**रामः**—साध्वाचारनिष्ठ, साधु । अमनुष्यसदृशस्ते चित्तसारः । तद्वत्स, वैदेहीमानय ।

(लक्ष्मणो निष्क्रान्तः ।)

**भरतः**—मातुल मातुल, युक्तं सदृशमेतद्वो गृहस्य ।

**युधाजित्**—उद्भ्रान्तः संप्रमुग्धोऽस्मि वत्स ।

---

कल्याणकालातिशये तात्पर्यम् । 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः ॥ अत्यापन्नोऽतिशयेनापदं प्राप्तः । एतदापन्नत्वं कथं नाम केन प्रकारेण परिणंस्यत इति संभाव्यते । 'नामप्राकाश्यसंभाव्यक्रोधोपगमकुत्सने' इत्यमरः । क्षिप्रमेव गुरुजनस्य प्राणात्ययान्मम वनगमनविघ्नः संभाव्यत इति भावः ॥ **ईदृश इति ।** आपाते तदात्वे । 'भवेत्तदात्वेऽप्यापातः' इति रत्नमाला । भवितव्यतानुसंधानादर्वागित्यर्थः । करुणस्येष्टजनवियोगजन्यदुःखस्य स्नेहस्य तद्धेतुभूतप्रेम्णश्च संवेगः संभ्रमः । अतिशय इति यावत् । 'समौ संवेगसंभ्रमौ' इत्यमरः । ईदृशो मूर्च्छादिहेतुरित्यर्थः । किमत्र क्रियतेऽत्र मूर्च्छायां किं क्रियते । किंशब्दः क्षेपे । वनगमनविलम्बो न कार्य इति भावः । कुत इत्याह—**प्रतिषिद्धमिति ।** अम्बया कैकेय्या कालहरणं वनगमने कालविलम्बः प्रतिषिद्धम् । निषिद्धमित्यर्थः । 'यालन्येन विहाय कालहरणं रामो वनं दण्डकाम्' इति हि लेखे स्थितमिति भावः । पितृमूर्च्छामातृनियोगयोर्बलाबलविचारे मातृनियोगो बलीयान् । 'पितुर्दशगुणं माता गौरवेणातिरिच्यते' इति शास्त्रात् । अत एवास्मिन्प्रकरणे रामायणे रामवचनम्—'न नूनं मम कैकेयि किंचिदाशंससे गुणम् । यद्राजानमवोचस्त्वं ममेश्वरतरा सती ॥' इति । राजा हीश्वरमात्रम् । कैकेयी त्वीश्वरतरेति तदभिप्रायः । तदिदमभिसंधायाह—**तदलमिति ।** तत्तस्मात् । अम्बानियोगस्य बलीयस्त्वादित्यर्थः । स्नेहकातर्येणालम् । पितृस्नेहप्रयुक्ताधीरतया साध्यं नास्तीत्यर्थः ॥ **साध्विति ।** संमतौ द्विरुक्तिः । आचारे मातृनियोगानुष्ठाने निष्ठा तात्पर्यं यस्य स तथोक्तस्तस्य संबुद्धिः । 'निष्ठा तु नाशे निष्पत्तावन्ते तात्पर्ययाञ्चयोः' इति रत्नमाला । साधु साधु । सम्यगुक्तं त्वयेत्यर्थः । **अमनुष्येति ।** ते चित्तसारस्तव कार्याकार्यविषयबलाबलानुसंधानमूलको दुस्त्यजगुरुजनत्यागहेतुर्मनोबलममनुष्यसदृशो मनुष्यविसदृशः । लोकोत्तर इति यावत् । 'सारो बले स्थिरांशे च' इत्यमरः ॥ मातुल मातुलेति कुत्सने द्विरुक्तिः । एतत्कैकेय्यभिमतं वः कुलस्य युक्तं सदृशमनुरूपमिति क्षेपोक्तिरियम् । नानुरूपमित्यर्थः । युक्तं सदृशमिति पदद्वयमेकस्यानुरूपशब्दस्यार्थे वर्तते । तदुक्तमभियुक्तैः—'योग्यत्वे सति प्रकृष्टत्वं सादृश्ययुक्तमनुरूपत्वम्' इति ॥ उद्भ्रान्त उच्चलितः । 'भ्रमु चलने' इत्यस्मात् 'गत्यर्थाकर्मक–' इत्यादिना कर्तरि क्तः । संप्रमुग्धोऽस्मि संमूर्च्छितोऽस्मि । पूर्ववत्क-

पतिर्मृत्योर्वक्त्रं व्रजति वनमेतत्सुतयुगं
वधूटी रक्षोभ्यो बलिरिव वराकी प्रणिहिता ।
निरालम्बो लोकः कुलमयशसा नः परिवृतं
स्वसुर्मे दौरात्म्यं जगदविकलं विक्लवयति ॥ ५२ ॥

(ततः प्रविशति लक्ष्मणः सीता च ।)

**सीता**—दिट्ठिआ[1] अणुमोदिदं ह्मि अज्जेण ।

**लक्ष्मणः**—इयमार्या ।

**रामः**—इत इतः । (सीतालक्ष्मणाभ्यां सह गुरुं प्रदक्षिणीकृत्य ।) मातुल,

---

१. दिष्टयानुमोदितास्म्यार्येण ।

---

प्रत्ययः । वत्सेति भरतं प्रति संबुद्धिः । **पतिरिति** । स्वसुरित्यादि । स्वसुरनेन वरद्वयाभिसंधिना पतिः स्वभर्ता दशरथो मृत्योर्वक्त्रं व्रजति मरणं प्राप्स्यति । वर्तमानसामीप्ये लट् । एतत्सुतयुगं रामलक्ष्मणात्मकपुत्रद्वयं कर्तृ । वनं व्रजतीत्यनुषङ्गः । गमिष्यतीत्यर्थः । 'रामे वा भरते वापि विशेषं नोपलक्षये' इति कैकेय्याः पूर्वाभिप्रायापेक्षया सुतयुगमित्युक्तम् । किंच वधूटी यौवनप्रारम्भवती । तदुक्तं शाब्दिकैः 'वधूटीच्चिरण्टीशब्दौ यौवनवाचिनौ' इति । 'जीवभर्त्री कुलस्था या वधूटी सा रूयपांसुला' इति त्रिकाण्डशेषः । वराकी दयनीया । 'जल्पभिक्ष-' इत्यादिना वृङः षाकन्प्रत्ययः । षित्त्वान्ङीषि रूपम् । सीतेत्यर्थः । रक्षोभ्यो राक्षसेभ्यः । 'चतुर्थी तदर्थ-' इत्यादिना बलिशब्देन चतुर्थ्याः समासविधानाद्बलिशब्दयोगे चतुर्थी । बलिरिवोपहार इव । 'करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम्' इत्यमरः । प्रणिहिता संकल्पिता । प्रक्षिप्ता भवतीति शेषः । 'सीतालक्ष्मणमात्रकात्' इति रामानुव्रजनप्रत्यषेधे सीतायास्तया पर्युदासादिति भावः । किंच लोको जनो निरालम्बो निराश्रयः । कृत इति शेषः । 'राज्यं चाहं च रामस्य' इत्युक्तभरतस्वभावसमीक्षया निरालम्ब इत्युक्तम् । किंच नः कुलमयशसा कुलक्रमागतकीर्तिविपरीतप्रथया । 'कुलक्रमागता सा चेद्यश इत्यभिधीयते' इत्युक्तेः । 'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥' इत्युक्तत्वान्नञो विपरीतार्थकत्वम् । परिवृतम् । व्याप्तमभूदिति शेषः । 'अश्वपतिर्वै भगवन्तो यं केकयः संप्रति ममात्मानं वैश्वानरमध्ये' इति वेदान्तप्रसिद्धस्यास्मत्कुलस्यायशो जातमिति भावः । यत एवं ततो मे स्वसुः सहजाया दौरात्म्यं दुर्बुद्धिरविकलं जगत्सकलमपि लोकं विक्लवयति विह्वलयति । 'विक्लवो विह्वलः स्यात्तु' इत्यमरः । स्वदोषख्यापनाय ते मातुरित्यनुक्त्वा मे स्वसुरित्युक्तम् ॥ ५२ ॥ **दिष्ट्येति** । आर्येण श्वशुरेण । 'आर्यया' इति च पाठः । श्वश्र्वा कैकेय्येत्यर्थः ॥ इयमार्या । ज्येष्ठभ्रातुः पत्नीत्वादार्याशब्दः ॥ सीता-

एष तातश्च तातश्च प्रियापत्याश्च मातरः ।
आश्वासनीयाः शोकेऽस्मिन्भवतैव गता वयम् ॥ ५३ ॥

(इति परिक्रामति ।)

**युधाजित्**—(सावेगम् ।) कथं वोऽरण्ये त्यजामि । (उत्थायानुगच्छति ।)

**भरतः**—(अनुगच्छन् ।) मातुल मातुल, ब्रूहि किमिदानीं करोमि ।

**युधाजित्**—रामभद्र, अवेक्षस्व पादपरिचारकमरण्यानुगतं भरतम् ।

**रामः**—नन्वस्यापि वर्णाश्रमरक्षणे गुरुनियोगः ।

**भरतः**—लक्ष्मणस्य वा शत्रुघ्नस्य वा तद्भवतु ।

**रामः**—किमत्र कस्यचित्स्वरुचिः ।

**भरतः**—एतावत्येव मे स्वरुचिः ।

**रामः**—शक्यं नाम मयि तिष्ठति त्वयान्येन वा पितृनियुक्तमुल्लङ्घयितुम् ।

---

लक्ष्मणाभ्यां सह सहितः सन् । **एष इति** । अस्मिञ्शोकेऽस्मद्वियोगदुःखे एष तातो दशरथश्च तातश्च जनकश्च प्रियाणीष्टान्यपत्यान्यहं लक्ष्मणः सीता च यासां तास्तथोक्ताः । सीताया अप्यपत्यत्वं पूर्वोक्तदिशा द्रष्टव्यम् । मातरः कौसल्यादयः कैकेय्या अप्यनुशयदुःखमवर्जनीयमिति मातर इति बहुवचनम् । अवशिष्टाः परःशतदशरथपत्न्यो वा विवक्षिताः । भवतैवाश्वासनीयाः । लघूकृतशोकाः कर्तव्या इत्यर्थः । ननु किमर्थमाश्वासनं त्वया तु न प्रयातव्यमित्यत्राह—गता वयमिति । न निवर्तामह इत्यर्थः । यद्वा ननु भरतशत्रुघ्नावाश्वासयतामित्यत्राह—गता वयमिति । वयं पुत्राश्चत्वारोऽपि । अत्र भरतशत्रुघ्नयोरकार्यक्षमत्वाद्गतप्रायत्वम् ॥ ५३ ॥ वो युष्मान् ॥ **किमिदानीं करोमीति** । किमनुगच्छाम्युतान्यदेव किमपि करोमीत्यस्मिन्संदेहे निर्णयं ब्रूहीत्यर्थः ॥ **रामभद्रेति** । पादपरिचारकमरण्यानुगतं त्वत्पादं परिचरितुमरण्ये त्वामनुगतमित्यर्थः । 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति ण्वुल् । अवेक्षस्व । मनागपाङ्गवीक्षणेनानुमन्यस्वेत्यर्थः ॥ **नन्विति** । नन्वित्यामन्त्रणेऽवधारणे वा । 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' इत्यमरः । अस्य भरतस्य वर्णानां ब्राह्मणादीनामाश्रमाणां ब्रह्मचर्यादीनां च रक्षणे गुरुनियोगः पितुरादेशः । यथा मम वनगमने गुरुनियोगस्तथा भरतस्य वर्णाश्रमरक्षणे गुरुनियोग इति समुच्चयस्यार्थः ॥ **लक्ष्मणस्येति** । तद्वर्णाश्रमरक्षणम् ॥ **किमत्रेति** । अत्र पितृनियुक्तेऽर्थे कस्यचित्स्वरुचिः किम् । स्वेच्छा का व्यवस्थापिकेत्यर्थः । किंशब्दः क्षेपे ॥ **एतावत्येवेति** । एतावति त्वदनुगमनमात्रे । अन्यत्र तु मम स्वरुचिर्न प्रयोजिकेति भावः । **शक्यमिति** । मयि तिष्ठति सप्राणे सति त्वयान्येन लक्ष्मणादिना पितृनियुक्तं समाज्ञप्तं वस्तु पितृनियोगो वा । भावे क्तः । पितृनियुक्तमिति द्वितीयान्तं प्रथमान्तं वा ।

**भरतः**—हा हा, कथं परित्यक्तोऽस्मि मन्दभाग्यः । (इति मूर्च्छति ।)

**युधाजित्**—वत्स, समाश्वसिहि समाश्वसिहि ।

**भरतः**—(आश्वस्य ।) मातुल, उद्धर माम् ।

**युधाजित्**—वत्स, एवं तावत् । (इति भरतस्य कर्णे कथयित्वा ।) रामभद्र, एवमयं विज्ञापयति—'यदेतद्भगवता शरभङ्गेण प्रेषितं तपनीयोपानद्युगं तदार्यः प्रसादीकरोतु' इति ।

**रामः**—(तदुन्मुच्य ।) गृहाणैतद्वत्स ।

**भरतः**—(शिरस्यारोप्य ।) हा आर्य ।

**रामः**—(परिष्वज्य ।) वत्स, मत्पादस्पृष्टिकया प्रतिनिवर्तस्व । सपदि संभावय चिरप्रमूढौ तातौ ।

**भरतः**—अयमिदानीमहम् ।

---

आद्ये पितृनियुक्तकर्मकमुल्लङ्घनं शक्यमित्यर्थः । द्वितीये पितृनियुक्तं वस्तु तन्नियोगो वा । उल्लङ्घनगोचरशक्तिविषय इत्यर्थः । शक्यमित्यत्र काक्वा नञर्थोऽन्तर्गतः । तथा च तवापि मदनुगमनं दुःशकम्, लक्ष्मणादेरपि त्वद्बुद्ध्या वर्णाश्रमरक्षणं दुःशकम् । पितृनियोगोल्लङ्घिषु त्रिषु मम दण्डधरत्वादित्युक्तं भवति ॥ **हेति** । परित्यक्तोऽस्मि । अनुगमनप्रतिषेधादिति भावः । मन्दभाग्यः स्वल्पपुण्यफलः कैकेय्या राज्यगर्द्धिकालम्बनत्वादहं स्वल्पभाग्य इत्यर्थः ॥ **वत्सेति** । एवं तावदिति । अयं च सामान्यतो वाच्यनिर्देशः । कर्णे कथयित्वा कर्णे कथनमभिनीय । पश्चादस्य प्रकाशो भविष्यति । **रामभद्रेति** । अयं भरत एवं वक्ष्यमाणप्रकारेण । भगवता 'उत्पत्तिं प्रलयं चैव' इत्याद्युक्तज्ञानातिशययुक्तेन शरभङ्गेण शरभङ्गनाम्ना महर्षिणा प्रेषितं तपनीयोपानहो- र्हैममयपादुकयोर्युगम् । 'तपनीयं शातकुम्भम्' इत्यमरः । 'पादुका । पादूरुपानत्स्त्री' इति चामरः । तदुपानद्युगमार्यो मम ज्येष्ठभ्राता रामः प्रसादीकरोतु प्रसादेन दत्तं करोत्विति प्रार्थनायां लोट् । इति विज्ञापयतीति पूर्वेण संबन्धः ॥ **तदिति** । तदुन्मुच्य पादुकायुगं पादाभ्यां वियोज्य । गृहाण स्वीकुरु ॥ **हा आर्येति** । पादुका प्रदानमात्रेण कथं मां विसर्जयसीति दुःख्यामीत्यर्थः ॥ **वत्सेति** । मत्पादस्पृष्टिकया । स्पृष्टिं करोतीति धात्वर्थोद्देशे ण्वुल् । स्पृष्टिका स्पर्शः । मत्पादयोः स्पृष्टिका मत्पादस्पृष्टिका तया निमित्तेन । यदि मामनुगमनाय निर्बध्नासि तर्हि मह्यं द्रुह्यसीति मत्कृतेन मत्पादस्पर्शेन निमित्तेन प्रतिनिवर्तस्वेत्यर्थः । यद्वा स्पृष्टौ मत्पादौ यस्यां शपथक्रियायां सा मत्पादस्पृष्टिका । आहिताग्न्यादेराकृतिगणत्वान्निष्ठान्तस्य परनिपातः संज्ञायां कन् । मत्पादस्पृष्टिका । 'प्रत्ययस्थात्-' इतीत्वम् । मत्पादस्पृष्टिकया शपथक्रियया निमित्तेनेत्यर्थः । सपद्यस्मिन्क्षणे । 'सद्यः सपदि तत्क्षणे' इत्यमरः । संभा-

नन्दिग्रामे जटां बिभ्रदभिषिच्यार्यपादुके ।
पालयिष्यामि पृथिवीं यावदार्यो निवर्तते ॥ ५४ ॥

(इति सीतारामौ प्रदक्षिणीकरोति ।)

**लक्ष्मणः**—आर्य भरत, लक्ष्मणः प्रणमति ।

(भरतः परिष्वज्य बाष्पस्तम्भं नाटयति ।)

**रामः**—वत्स, तातौ संभावय ।

**भरतः**—कष्टम् । अद्यापि नोच्छ्वसितः । (इति वीजयति ।)

**जनकः**— (समुच्छ्वस्य । सर्वतोऽवलोक्य च ।) हा हा, मुषितोऽस्मि ।

**दशरथः**—(उच्छ्वस्य ।) वत्स रामभद्र, न गन्तव्यं न गन्तव्यम् ।

प्राणाः प्रयान्ति परितस्तमसावृतोऽस्मि
मर्मच्छिदो मम रुजः प्रसरन्त्यपूर्वाः ।
अक्ष्णोर्मुखेन्दुमुपधेहि गिरं च देहि
हा पुत्र मय्यकरुणः सहसैव मा भूः ॥ ५५ ॥

(सोन्मादमिव ।) भोः, क्व विशामीदानीं मन्दभागधेयः । (इति विक्लवो भरतजनकाभ्यां नीयमानो निष्क्रान्तः ।)

**युधाजित्**—वत्स रामभद्र, पश्य ।

---

वय संभवन्तौ कुरु । तयोरसंभवं परिहरेत्यर्थः । चिरात्प्रमूढौ मूर्च्छितौ ॥ **नन्दिग्राम इति** । आर्यो रामो यावन्निवर्तते तावत्पर्यन्तं जटां बिभ्रत्सन्नहमार्यपादुके नन्दिग्रामेऽभिषिच्य पृथिवीं पालयिष्यामीत्यर्थः ॥ ५४ ॥ बाष्पस्तम्भमश्रुणः स्तब्धत्वकारणतां नाटयत्यनुकरोति ॥ नोच्छ्वसित उच्छ्वासं न कुरुतः । श्वसित इत्यत्र 'रुदादिभ्यः सार्वधातुके' इति लडादेशस्य तस इडागमः । वीजयति । तथाभिनयतीत्यर्थः ॥ **हा हेति** । मुषितोऽस्म्यपहृतप्रयोजनोऽस्मि ॥ **प्राणा इति** । मम प्राणाः प्रयान्ति गन्तुमारभन्ते । किंच तमसाऽज्ञानेनावृतोऽस्मि व्याप्तोऽस्मि । किंच मर्मच्छिदः प्राणस्थानभेदिन्योऽपूर्वा नवा रुजो व्याधयः । 'स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः' इत्यमरः । प्रसरन्त्यविच्छेदेनोत्पद्यन्ते । यत एवं ततः पुत्रमुखेन्दुं तव मुखचन्द्रमक्ष्णोरुपधेहि मम नेत्रसमीपं प्रापय । किं च गिरं देह्यहं वनगमनान्निवृत्तोऽस्मीति वाचं वद । किं च त्वं सहसैवातर्कितमेव मयि त्वद्वियोगदुःखिते मय्यकरुणः करुणाशून्यो माभूर्न भवेः । 'माङि लुङ्' इति लिङर्थे लुङ् ॥ ५५ ॥ सोन्मादम् । उन्मादश्चित्तविभ्रमस्तमभिनीयेत्यर्थः । क्व विशामि कुत्र प्रविशामि । मन्दभागधेयोऽल्पभाग्यः । 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः' इत्यमरः । विक्लवो

एकीभूय शनैरनेकरसमप्युत्सन्नमेकक्रियो-
न्मुक्ताक्रन्दमितस्ततः किमिदमित्युद्भ्रान्तनारीनरम् ।
एतत्त्वत्पुरमन्यथैव सहसा संजातमापद्यते
यस्मिन्कर्दमितेषु वर्त्मसु घनैर्बाष्पाम्बुभिर्दुर्दिनम् ॥ ५६ ॥

**रामः**—मातुल मातुल, प्रतिनिवर्तस्व । अयं च वो हस्ते भरतः ।

**युधाजित्**—वत्स, अनुरुध्यस्व मामनुगच्छन्तम् ।

**रामः**—शान्तं पापम्, शान्तं पापम् । गुरवो यूयमनुगन्तव्या नानुगन्तारः । आत्मनातृतीयेन गन्तव्यमित्यम्बादेशः ।

**युधाजित्**—किमहमेकोऽनुगच्छामि । अपि तु सबालवृद्धाः प्रकृतयः किं न पश्यसि ।

---

विह्वलः सन् ॥ **एकीभूयेति** । हे वत्स रामभद्र, अनेकरसमपि भिन्नरुच्यपि । 'रसो रागे द्रवे हर्षे' इति विश्वः । एकीभूयैकरुचिर्भूत्वा त्वयैकाभिलाषं भूत्वोत्सन्नम् । दुःखितमिति यावत् । एकक्रिययैकव्यापारेणोन्मुक्त उच्चारित आक्रन्दो रोदनध्वनिर्येन तत्तथोक्तम् । किमिदमित्युद्भ्रान्ता निश्चयशून्या नारीनराः स्त्रीपुरुषा यस्मिंस्तत्तथोक्तम् । नार्यश्च नराश्चेति विग्रहे इतरेतरयोगद्वन्द्वः । 'नृनरयोर्वृद्धिश्च' इति शार्ङ्गरवादिगणसूत्रेण नृशब्दान्ङीनि वृद्धौ च सत्यां नारीशब्दो निष्पन्नः । अतो नारीनरशब्दयोः प्रकृतिभेदात् 'पुमान्स्त्रिया' इत्येकशेषो न भवति । 'यत्रोर्ध्वं प्रकृतेर्विशेषः' इति महाभाष्योक्तेः । अत एव 'नरनारीमयो हरिः' इति प्रयोगोऽपि साधुः । एतत्त्वत्पुरं तव पुरं सर्वमेवात्मैश्वर्यं जामातुरिति जनकाभिप्रायेण मिथिलानगरं त्वत्पुरमित्युक्तम् । यद्वा । त्वदिति भिन्नं पदं पञ्चम्यन्तम् । एतत्पुरं मिथिलानगरं त्वत्त्वन्निमित्तं सहसा शीघ्रमन्यथैव संजातं सत्प्रस्तुतोत्सवप्रयुक्तानन्दरूपप्रकारातिरिक्तशोकरूपप्रकारविशिष्टं जातं सदापद्यत आपन्नं भवति । 'पद्लृ गतौ' उपसर्गवशादुक्तार्थे वृत्तिः । यस्मिन्पुरे घनैः सान्द्रैर्बाष्पाम्बुभिर्नेत्रजलैः । 'बाष्पो नेत्रजलोष्मणोः' इति रत्नमाला । विशिष्टवाचिनोऽपि बाष्पशब्दस्याम्बुशब्दसमभिव्याहाराद्विशेषणमात्रपरत्वम् । कर्दमितेषु संजातपङ्केषु । 'पङ्कोऽस्त्री शादकर्दमौ' इत्यमरः । वर्त्मसु मार्गेषु यद्दुर्दिनम् । भवतीति शेषः । 'मेघच्छन्नेऽह्नि दुर्दिनम्' इत्यमरः ॥ ५६ ॥ **वत्सेति** । अनुरुध्यस्व । कामयस्वेत्यर्थः ॥ **शान्तं पापमिति** । पूज्यस्य तव मदनुगमनोक्त्या त्वदीयं पापं शम्यतादित्यर्थः । 'आशंसायां भूतवच्च' इति शम्यतेर्निष्ठा । कुत इत्यत्राह—**गुरव इति** । अनुगन्तव्या मयानुगमनार्हा नानुगन्तारः । मामनुगन्तुं नार्हा इत्यर्थः । हेत्वन्तरमप्याह—**आत्मनातृतीयेनेति** । मयेति शेषः । द्वावन्यावहं च तृतीयः । तथाविधेन मया गन्तव्यमिति मातुर्निर्देश इत्यर्थः । 'सीतालक्ष्मणमात्रकात्परिजनादन्यो न चानुव्रजेत्' इत्युक्तेरिति भावः । 'आत्मनश्च' 'पूरण इति वक्तव्यम्' इति सूत्रवार्तिकाभ्यां तृतीयाया अलुक् ॥ **किमहमिति** । किंशब्दः क्षेपे । नाहं

स्कन्धारोपितयज्ञपात्रनिचयाः स्वैर्वाजपेयार्जितै-
श्छत्रैर्वारयितुं तवार्ककिरणांस्ते ते महाब्राह्मणाः।
साकेताः सह मैथिलैरनुपतत्पत्नीगृहीताग्नयः
प्राक्प्रस्थापितहोमधेनव इमे धावन्ति वृद्धा अपि ॥ ५७ ॥

**रामः**—मातुल मातुल, गुरुभिरेव शिशवो धर्मलोपात्पालयितव्याः। तत्प्रसीद नः। प्रतिनिवर्त्यतामयं महाजनः। (इति प्रणमति।)

**युधाजित्**—वत्स, उत्तिष्ठोत्तिष्ठ। बोधयित्वा प्रजाः क्वापि मन्द-भाग्यो गच्छामि।

---

केवलोऽनुगच्छामीत्यर्थः। 'एके मुख्यान्यकेवलाः' इत्यमरः। सबालवृद्धा बालवृद्धसहिताः। 'वोपसर्जनस्य' इति सहशब्दस्य सभावः। प्रकृतयः पौरजनाः। **स्कन्धेति**। हे वत्स, ते ते साकेता अयोध्यावासिनः। इमे महाब्राह्मणाः परमपूज्याः षट्कर्मचरिताश्च विप्राः। 'विप्रश्च ब्राह्मणोऽसौ षट्कर्मा यागादिभिर्युतः' इत्यमरः। वृद्धाः सन्तोऽपि। 'ते द्विजास्त्रिविधं वृद्धा ज्ञानेन वयसौजसा' इत्युक्तत्रिविधवृद्धत्वयुक्ताः सन्तोऽपीत्यर्थः। स्कन्धेषु भुजशिरःस्वारोपिता यज्ञपात्राणां स्रुक्चमसादीनां निचयाः समूहा येषां ते तथोक्ताः सन्तः, अनुपतन्तीभिरनुधावन्तीभिः पत्नीभिर्भार्याभिर्गृहीतो ध्रियमाणोऽग्निर्गार्हपत्यादिर्येषां ते तथोक्ताश्च सन्तः, प्राक्पूर्वमेव प्रस्थापिता होमधेनवो होमार्थदधिपयोघृतामिक्षादिहेतुभूता गावो येषां ते तथोक्ताश्च सन्तः। धेनूनां धावनाशक्त्या पूर्वमेव प्रस्थापनं मैथिलैः सह मिथिलाभिजनैर्ब्राह्मणैः सार्धम्। 'सोऽस्याभिजनः' इति साकेतमिथिलाशब्दाभ्यामण्। साकेतानां सीताकल्याणायागमनात् 'साकेताः सह मैथिलैः' इत्युक्तम्। वाजपेयार्जितैर्वाजपेययागसंपादितैः। स्वैरात्मीयैश्छत्रैः करणैः। वाजपेययाजिनां छत्रधारणं शास्त्रसिद्धम्। अर्ककिरणांस्तव वारयितुं त्वयि यथा न पतिष्यन्ति तथा कर्तुं धावन्ति शीघ्रं गच्छन्ति। 'सृ गतौ' इत्यस्य 'पाघ्रा-' इत्यादिना शीघ्रगमने धावादेशः। 'यावज्जीवं न कंचन प्रत्यवरोहेत्' इत्येतदपि त्वदर्थे परित्यजन्तीति भावः। तदिदमुक्तं श्रीमति रामायणे—'द्विजस्कन्धाधिरूढास्त्वामग्नयोऽप्यनुयान्त्यमी। वाजपेयसमुत्थानि छत्राण्येतानि पश्य नः॥ पृष्ठतोऽनुप्रयातानि मेघानीव जलात्यये। अनावृतातपत्रस्य रश्मिसंतापितस्य ते॥ एभिश्छायां करिष्यामः स्वैश्छत्रैर्वाजपेयिकैः। या हि नः सततं बुद्धिर्वेदमन्त्रानुसारिणी॥ त्वत्कृते सा कृता वत्स वनवासानुसारिणी॥' इति ॥५७॥ **मातुलेति**। गुरुभिः पितृमातुलादिभिः। 'गुरुर्निषेकादिकरे पुरोधसि बृहस्पतौ। पित्रादौ ना बृहत्ख्यातदुर्भरालघुषु त्रिषु॥' इति रत्नमाला। धर्मलोपाद्गुरुवचनकर्तव्यत्वगुरुजनानुगन्तव्यत्वरूपशास्त्रार्थभङ्गात्। 'भीत्रार्थानां-' इति पञ्चमी। **प्रसीद** प्रसादं कुरु। तत्फलमाह—**प्रतिनिवर्त्यतामिति**। महाजनः साकेतमैथिलमहाब्राह्मणपरिषत्। प्रतिनिवर्त्यताम्। मत्तस्त्वयेति शेषः। इति प्रणमति शरणं

त्वां लक्ष्मण महाबाहो त्वां च वैदेहनन्दिनि ।
आमन्त्रये निवृत्तोऽस्मि पापः कल्याणमस्तु वाम् ॥ ५८ ॥

(रुदन्प्रतिनिवृत्य ।) अहो नु खलु भोः,

प्रतिमन्वन्तरं भूतैर्गीयमाना चरिष्यति ।
प्रायः पवित्रा लोकानामियं चारित्रपञ्चिका ॥ ५९ ॥

(इति निष्क्रान्तः ।)

**लक्ष्मणः**—कथितमार्यस्य शृङ्गिबेरपुरवास्तव्येन निषादपतिना गुहेन तत्प्रदेशपर्यन्तावस्कन्दिनो विराधराक्षसस्य दुर्विलसितम् ।

---

गच्छति । शरणागतरक्षणं हि सर्वस्य दुर्वारमिति हृदयम् ॥ उत्तिष्ठोत्तिष्ठेत्यार्तौ द्विरुक्तिः । **बोधयित्वेति** । प्रतिनिवृत्तिमिति शेषः । क्वापि मनसापि चिन्तयितुं दुःशके स्थाने । **त्वामिति** । महाबाहो लक्ष्मण, त्वामामन्त्रये त्वामप्यनुगमनमाज्ञापयामि । वैदेहनन्दिनि सीरध्वजपुत्रि, त्वां चामन्त्रये । पापोऽहं निवृत्तोऽस्मि निवृत्तिहेतुभूतरामप्रणामकर्मकतारूपदुरितपूर्णोऽहमनुगमनान्निवृत्तो भवामि । वां युवयोः कल्याणमस्तु । आशिषि लोट् ॥ ५८ ॥ रुदन्प्रतिनिवृत्त्य । अत्र आहेति शेषः । अहो नु खलु भोरिति विस्मये निपातसमुदायः । **प्रतिमन्वन्तरमिति** । लोकानां सत्यलोकादीनां पवित्रा परिशुद्धिकरीयं चारित्रस्य पितृवचनपरिपालनप्रभृतिसद्वृत्तस्य । 'चरेर्वृत्ते' इति णित्रन्प्रत्ययः । पञ्चिका विस्तारः, व्यक्तीकृतिर्वा । 'पचि विस्तारवचने', 'पचि व्यक्तीकरणे' इत्याभ्यां धात्वर्थनिर्देशे ण्वुल् । 'स्त्रीभावादाथनिक्किण्ण्वुल्' इति स्त्रीत्वम् । मन्वन्तरे मन्वन्तरे प्रतिमन्वन्तरम् । वीप्सायामव्ययीभावः । 'तृतीयासप्तम्योर्बहुलम्' इति बहुलग्रहणाद्वैकल्पिकोऽम्भावः । 'मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः' इत्यमरः । भूतैर्देवादिप्राणिवर्गैः । 'भूतं न्याय्ये समे प्राप्ते यथार्थातीतयोरपि । क्लीबे सत्त्वे पिशाचादौ भूम्यादौ जन्तुसत्त्वयोः ॥' इति रत्नमाला । गीयमाना सती श्रीरामायणादिना कीर्त्यमाना सती चरिष्यति व्याप्ता भविष्यति । प्रायःशब्दः संभावनायाम् । 'मन्ये शङ्के ध्रुवं प्रायः' इत्याद्युक्तेः । संभावना नामोत्कटकोटिकः संशयः ॥ ५९ ॥ **कथितमिति** । शृङ्गिबेराख्यनगरवासकर्तर्थः । 'वसेस्तव्यत्कर्तरि णिच्च' इति तव्यत्प्रत्ययस्य णित्त्वाद्वृद्धिः । निषादानां धीवराणां पत्या गुहेन गुहनाम्ना तत्प्रदेशपर्यन्तानां चित्रकूटपर्यन्तभूभागानामवस्कन्दिनः पीडयितुर्विराधराक्षसस्य । विराधश्चासौ राक्षसश्चेति कर्मधारयात्षष्ठी । सामान्यशब्दं प्रति विशेषशब्दस्य विशेषणत्वात् 'विशेषणं विशेष्येण–' इति समासः । षष्ठ्याः समानाधिकरणेन समासनिषेधस्तु परिनिष्ठितविभक्त्या समासविषयकः । दुर्विलसितं दुश्चेष्टितमार्यस्य कथितमिति लक्ष्मणेन स्मारितम् ॥ तत्र रामः वचनम्—

**रामः**—तेन हि विराधहतकोन्मथनाय संनिकृष्टप्रयागमनुषक्त-मन्दाकिनीपवित्रमेखलं चित्रकूटाचलमुपेत्य

ऋषिभिरुपजुष्टतीर्थां हन्तुं रक्षांसि दण्डकां प्राप्य ।
संनिहितगृध्रराजं क्रमेण यायां जनस्थानम् ॥ ६० ॥

(इति निष्क्रान्ताः सर्वे ।)

**इति महाकविश्रीभवभूतिविरचिते महावीरचरिते चतुर्थोऽङ्कः ।**

---

**तेन हीत्यादि ।** तेन गुहकथितेन हेतुना विराधहतकस्य विराधाख्यस्य हतप्रायस्य । 'अल्पे' इति कः । उन्मथनाय मरणाय । 'घातोन्माथवधा अपि' इत्यमरः । संनिकृष्टः संनिहितः प्रयागो नाम क्षेत्रविशेषो यस्य स तथोक्तस्तमनुषक्तया समीपे संबद्धया मन्दाकिन्या पवित्राः परिशुद्धा मेखलास्तटा यस्य स तथोक्तस्तम् । 'मेखला खड्गबन्धे स्यात्काञ्चीशैलनितम्बयोः' इति विश्वः । चित्रकूटाचलमुपेत्येत्यस्योत्तरत्रान्वयः । **ऋषिभिरिति ।** रक्षांसि हन्तुमृषिभिर्मुनिभिरुपजुष्टमुपसेवितं तीर्थं पुण्यसलिलं यस्याः सा तथोक्ता ताम् । ऋषिभिरुपजुष्टाम्भोवाचिनोऽपि तीर्थशब्दस्य विशेष्यमात्रपरत्वम् । दण्डकां प्राप्य संनिहितो गृध्रराजो यस्य तत्तथोक्तं जनस्थानं क्रमेण पूर्वोक्तस्थानेषु यौगपद्येन यायां प्राप्नुयाम् । आशंसायां लिङ् । अत्रापि पूर्वाङ्कान्तपात्रेणोत्तराङ्कादौ प्रवेक्ष्यतो गृध्रराजरूपपात्रस्य सूचनादङ्कास्यमुक्तम् ॥ ६० ॥

यो महीसारवास्तव्यो वाधूलो वीरराघवः ।
स महावीरचरिते तुरीयाङ्कं व्यवीवरत् ॥

**इत्यण्णाप्पङ्गार्यनामधेयेन वाधूलवीरराघवेण विरचितायां महावीरचरितव्याख्यायां भावप्रद्योतिनीसमाख्यायां चतुर्थोऽङ्कः ॥**



## पञ्चमोऽङ्कः।

(ततः प्रविशति संपातिः।)

**संपातिः**—नूनमद्य वत्सो जटायुरभिवादनाय मलयकन्दरकुलायमुपासीदति। तथा हि—

पर्यायात्क्षणदृष्टनष्टककुभः संवर्तविस्तारयो-
नींहारीकृतमेघमोचितधुतव्यक्तस्फुरद्विद्युतः।
आरात्कीर्णकणात्कणीकृतगुरुग्रावोच्चयश्रेणयः
श्यैनेयस्य बृहत्पतत्रधुतयः प्रख्यापयन्त्यागमम्॥ १॥

---

इदानीं कविः सुग्रीवविभीषणकथारूपपताकां खरदूषणादिवधप्रयुक्तापायशङ्कया जटायुवृत्तान्तरूपापायशङ्कया च प्राप्त्याशां वदन्पुनरपि गर्भसंधिमाह पञ्चमाङ्केन—तत्र प्रथमं विष्कम्भमाह—**ततः प्रविशति संपातिरित्यादिना**। संपातिर्जटायोरग्रजः। नूनमिति संभावनायाम्। वत्सो जटायुरिति। अनुजत्वाद्वत्स इत्युक्तिः। मलयकन्दर एव मलयगिरिगुहैव। 'दरी तु कन्दरो वास्त्री' इत्यमरः। कुलायो नीडं तन्मदीयम्। 'कुलायो नीडमस्त्रियाम्' इत्यमरः। उपासीदति संनिकर्षेण प्राप्नोति। **पर्यायादिति**। पर्यायात्क्रमात्। 'पर्यायोऽवसरे क्रमे' इत्यमरः। संवर्तविस्तारयोः पतत्राणां संकोचविकासयोः। समित्येकीकारेऽव्ययम्। संवर्तनं संवर्तः। संकोच इति फलितम्। क्षणं दृष्टा नष्टा अदृष्टाश्च ककुभो दिशो याभिस्तास्तथोक्ताः। 'णश अदर्शने', 'गत्यर्थाकर्मक–' इत्यादिना कर्तरि क्तः। 'संकोचे क्षणदृष्टत्वं विकासे क्षणनष्टता। पतत्राणां गृध्रपतेर्दिशामिति विवेकधीः॥' किंच नीहारीकृतेभ्यो हिमवत्तुच्छीकृतेभ्यो मेघेभ्यो मोचिता विभाजिता धुताः कम्पिताः अत एव व्यक्तं स्फुटं यथा भवति तथा स्फुरन्त्यश्चलन्त्यः प्रकाशमाना वा विद्युतस्तडितो याभिस्तास्तथोक्ताः। पक्षवात्यया मेघेषु खिलीकृतेषु निराश्रयत्वाद्विद्युतां व्यक्तस्फुरणम्। किंच। आराद्दूरत एव कीर्णाद्विक्षिप्तात्। 'कॄ विक्षेपे' कर्मणि क्तः। 'रदाभ्यां–' इति निष्ठातकारस्य नत्वम्। कणादपि लेशादपि। 'लवलेशकणाणवः' इत्यमरः। कणीकृता लेशीकृता गुरूणां ग्रावोच्चयानां पर्वतानां श्रेणयः पङ्क्तयो याभिस्तास्तथोक्ताः। 'अचलशैलशिलोच्चयाः' इत्यमरः। तुल्यार्थत्वाद्ग्रावोच्चयशब्दोऽपि पर्वतवाची। 'पाषाणप्रस्तरग्रावा–' इति ग्रावशब्दोऽत्र शिलावाची। श्यैनेयस्य श्येनीपुत्रस्य। जटायोरित्यर्थः। 'पत्री श्येनः' इत्यमरः। 'जातेरस्त्री–' इति ङीष्। 'स्त्रीभ्यो ढक्' इति ढक्। 'श्येनः श्येनांश्च गृध्रांश्च व्यजायत सुतेजसः। तस्माज्जातोऽहमरुणात्संपातिस्तु ममाग्रजः॥ जटायुरिति मां विद्धि श्येनीपुत्रमरिंदम॥' इति हि श्रीरामायणे जटायुनोक्तम्। बृहतां पतत्राणां पक्षाणां धुतयः कम्पनानि। 'गरुत्पक्षच्छदाः पत्रं पतत्रं च तनूरुहम्' इत्यमरः। 'धूञ् कम्पने' इति स्वादौ पठिताद्भावे स्त्रियां क्तिन्। आगमं जटायोरागमनं प्रख्यापयन्त्यनुमापयन्ति। 'प्रज्ञापयन्ति' इति च पाठः।

अपि च ।

दूरोद्वेल्लितवाडवस्य जलधेरुल्लोलभिन्नाम्भसो
रन्ध्रैरापतितेन वेगमरुता पातालमाध्मायते ।
यद्वैकुण्ठवराहकण्ठकुहरस्फारोच्चलद्भैरव-
ध्वानोच्चण्डमकाण्डकालरजनीपर्जन्यवद्गर्जति ॥ २ ॥

(प्रविश्य ।)

**जटायुः—**

कावेरीवलयितमेखलस्य साना-
वेतस्मिन्मलयगिरेर्दिवः पतामि ।
यत्रार्यो निवसति काश्यपः शकुन्तः
शैलेन्द्रोऽपर इव विप्रयुक्तपक्षः ॥ ३ ॥
विस्रंसयन्ती परिगृह्य पक्षौ
जाता ममाप्युत्पतनश्रमार्तिः ।

---

लिङ्गाभ्यूहनमनुमानं नामात्र गर्भसंध्यङ्गमुक्तम् ॥ १ ॥ **दूरेति** । 'श्यैनेयस्य बृहत्पतत्रधुतिनां' इत्यादिर्जटायोर्बृहत्पतत्रधुतिनां वेगमरुता उल्लोलान्यत्यन्तचलितानि भिन्नानि स्थानादपक्रान्तान्यम्भांसि यस्य स तथोक्तस्तस्य, दूरमधिकमुद्वेल्लित उच्चलितो वाडवो वाडवाग्निर्यस्य स तथोक्तस्तस्य । वायुसखत्वादिति भावः । जलधेः समुद्रस्य रन्ध्रैर्जलापायवशात्प्रकटैः श्वभ्रैरापतितेन प्रविष्टेन जटायोर्वेगमरुता वेगजन्यवायुना पातालमाध्मायते पूर्यते । यत्पातालं कर्तृ । वैकुण्ठवराहस्यादिवराहस्य कण्ठकुहराद्गलरन्ध्रात् । 'कुहरं विवरं बिलम्' इत्यमरः । स्फारमधिकं यथा 'स्फारं भूयश्च भूरि च' इत्यमरः । उच्चलन्नुद्गच्छन्भैरवो दारुणः । 'भैरवं दारुणं भीष्मं भीषणं च भयानकम्' इत्यमरः । ध्वान इव शब्द इवोच्चण्डं क्रूरं यथा भवति तथाकाण्डकालरजनीपर्जन्यवदनवसरापतितप्रलयरात्रिमहामेघवद्गर्जति शब्दति । उक्तयच्छब्दस्तच्छब्दं नापेक्षते । 'काण्डोऽस्त्रीदण्डबाणार्ववर्गावसरवारिषु' इत्यमरः । चण्डिमातिरेकविवक्षयोपमाद्वयम् ॥ २ ॥ **कावेरीति** । कावेर्या वलयिता मेखला नितम्बो यस्य स तथोक्तस्तस्य । 'मेखला खड्गबन्धेऽपि काञ्चीशैलनितम्बयोः' इति विश्वः । मलयगिरेरेतस्मिन्सानौ तटे । 'स्नुः प्रस्थः सानुरस्त्रियाम्' इत्यमरः । दिवोऽन्तरिक्षात्पताम्यवरोहामि । यत्र मलयगिरिसानावार्यो ज्येष्ठभ्राता काश्यपः कश्यपपुत्रो व्यवहितोऽप्यपत्यमिति पक्षेण । कश्यपशब्दादपत्ये ऋष्यण् । शकुन्तः पक्षी । संपातिरित्यर्थः । विप्रयुक्तपक्षश्छिन्नपक्षः । इदं विशेषणमुभयान्वयि । अपरः शैलेन्द्र इवावासभूतमलयादन्यः शैल इव निवसति । पर्वतोपरि पर्वत इव तिष्ठतीत्यर्थः । विप्रयुक्तपक्षत्वे कारणमुत्तरत्र वक्ष्यति ॥ ३ ॥ **विस्रंसयन्तीति** । पक्षौ परिगृह्य प्राप्य विस्रंसयन्ती

शक्तिर्हि कालस्य विभोर्जराख्या
शक्त्यन्तराणां प्रतिबन्धहेतुः ॥ ४ ॥

तदयमार्यो मन्वन्तरपुराणो गृध्रराजः संपातिः । अहो भ्रातृस्नेहः ।

पुराकल्पे दूरोत्पतनखुरलीकेलिजनिता-
दतिप्रत्यासङ्गात्परितपति गात्राणि तपने ।
अवष्टभ्यासौ मामुपरि ततपक्षः शिशुरिति
स्वपक्षाभ्यां प्लोषादविकलमरक्षत्करुणया ॥ ५ ॥

(उपसृत्य ।) आर्य काश्यप, त्वां जटायुरभिवादयते ।

**संपातिः**—एह्येहि वत्स,

त्वया पुत्रवती श्येनी गृध्राणां चक्रवर्तिना ।
गरुत्मतेव वीरेण विनता नः पितामही ॥ ६ ॥

---

शिथिलयन्त्युत्पतनश्रमेणार्तिरुत्पतनार्थप्रयत्नगौरवप्रयुक्तपीडा ममापि जातोत्पन्ना । अपिशब्दस्त्वदनर्हत्वं द्योतयति । तथाहि । विभोः पदार्थानां परिणामापक्षयादिहेतुशक्तियुक्तस्य । यद्वा 'दिक्कालावीश्वरादतिरिच्येते' इति मतेन विभोरित्युक्तम् । अथवा 'कालः कलयतामहम्' इत्युक्त्या कालशरीरकस्य भगवत इत्यर्थः । जराख्या वयोहानिप्रयुक्तशैथिल्यात्मिका । शक्तितत्कार्ययोरभेदारोपः । शक्तिः सामर्थ्यं शक्त्यन्तराणामन्यासां शक्तीनामुत्पतनादिसामर्थ्यानां प्रतिबन्धहेतुः कार्यजननवैधर्म्यकरी भवतीति शेषः ॥ ४ ॥ **तदिति** । मन्वन्तरेषु पुराणश्चिरंतनः । 'मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः' इत्यमरः । गृध्रराजः संपातिस्तत्तस्मादुत्पत्त्यागमनाद्धेतोरयं संनिहितः । भवतीति शेषः । 'इदमः प्रत्यक्षगतं समीपतरवर्ति चैतदो रूपम् । अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात् ॥' इत्युक्तत्वादिदंशब्दः संनिहितवाची । अहो भ्रातृस्नेहो भ्रातरि मयि प्रीतिर्विस्मयनीया । कुत इत्यत्राह—**पुरेति** । असौ ममाग्रजः संपातिः पुराकल्पे पूर्वस्मिन्ब्रह्मदिने । 'कल्पस्तु प्रलये न्याये शास्त्रे ब्रह्मदिने विधौ' इति रत्नमाला । दूरोत्पतनस्य खुरली लक्ष्यबन्धनं सूर्यमण्डलसंनिधिरूपलक्ष्यस्वीकारः । 'खुरली लक्ष्यबन्धनम्' इति केशवः । सैव केलिर्लीला तया जनितादुत्पादितादतिप्रसङ्गादत्यन्तसंनिकर्षात्तपने सूर्ये गात्राणि शरीरावयवान् । 'गात्रं प्रतीके दण्डाग्रजङ्घाभागे वपुष्यपि' इति रत्नमाला । परितपति सति शिशुरिति करुणया मामवष्टभ्य शिशुत्वहेतुमद्विषयदयया मामवलम्ब्योपरि ततपक्षः सन्ममोपरि विस्तारितस्वपक्षः सन्स्वपक्षाभ्यां करणाभ्यां मामविकलं समग्रं प्लोषाच्छोषणादरक्षद्रक्षितवान् । रक्षतेर्लङ् । अतोऽत्र भ्रातृस्नेहो विस्मयनीय इति संबन्धः । एतेन संपातेः पक्षशोषो जात इति फलितम् ॥ ५ ॥ एह्येहीत्यादरेण द्विरुक्तिः । **त्वयेति** । वीरेण गरुत्मता गरुडेन नः पितामही विनतेव गृध्राणां चक्रवर्तिना सार्वभौमेन त्वया श्येनी नो माता पुत्रवती प्रशस्तपुत्रयुक्ता । भवतीति शेषः । प्रशंसायां मतुप् । अत्र

(परिष्वज्य ।) वत्स जटायो, कालविप्रकर्षान्मन्दीभूतपितृशोको रामभद्रः ।

**जटायुः**—

तस्य विद्यातपोवृद्धसंयोगः स्वा च धीरता ।
न्याय्यो रक्षाधिकारश्च दौर्मनस्यं व्यपोहति ॥ ७ ॥

**संपातिः**—

तृप्तैर्विराधमांसानां गृध्रैरावेदितं हि मे ।
चित्रकूटाद्यदा रामः शरभङ्गाश्रमं गतः ॥ ८ ॥
तथा च शरभङ्गेण हव्यवाहे हुता तनुः ।
अथोपसेदिवान्रामः सुतीक्ष्णाद्यानृषीनिति ॥ ९ ॥

**जटायुः**—बाढम् । अधुनागस्त्यवचनाद्रामः पञ्चवट्यां प्रतिवसति ।

**संपातिः**—(चिरं स्मृत्वा ।) अस्ति जनस्थाने पञ्चवटी नाम गोदावरीतटोद्देशः । वत्स जटायो, विषयबाहुल्यं कालविप्रकर्षश्च स्मृतिं प्रमुष्णाति ।

कल्पस्यादौ मम परिचयस्तावदासीदुदस्था-
द्यावद्विष्णोरुपरि चरणश्चारुगङ्गापताकः ।

---

'द्वौ पुत्रौ विनतायास्तु गरुडोरुण एव च । तस्माज्जातोऽहमरुणात्संपातिस्तु ममाग्रजः ॥' इत्येतदनुसंधेयम् ॥ ६ ॥ **वत्सेति** । कालविप्रकर्षात्त्रयोदशवर्षात्मककालातिपाताद्धेतोः । रामः किं मन्दीभूतपितृशोक इति काकुरनुसंधेया ॥ **तस्येति** । तस्य रामस्य विद्याया अध्यात्मविद्यायास्तपसो नियमस्य वृद्धानां त्रिविधवृद्धानां च संयोगः संबन्धः स्वा स्वीया धीरता धैर्यम् । अप्रकम्प्यत्वमिति यावत् । न्याय्यो न्यायादनपेतः । 'धर्मपथ्यर्थन्यायादनपेते' इत्यनपेतार्थे यत् । रक्षायां लोकरक्षणेऽधिकारः कर्तृभावश्च दौर्मनस्यं पितृदुःखं व्यपोहति नाशयति । भिन्नानि वाक्यानि । अतः क्रियापदस्यैकवचनोपपत्तिः ॥ ७ ॥ **तृप्तैरिति** । विराधमांसानां तृप्तैर्विराधमांसहेतुकतृप्तियुक्तैः । कारणस्य शेषत्वविवक्षया षष्ठी । आवेदितार्थानाह—चित्रकूटादित्यादिना । हव्यवाहेऽग्नावुपसेदिवानुपससाद । सदेर्लिटः क्वसुः । धातोरेत्वाभ्यासलोपौ । इत्यावेदितमिति श्लोकद्वयमिदमेकान्वयम् ॥ ८ ॥ ९ ॥ **बाढमिति** । संपातिश्रुतार्थानुमतौ । 'बाढं त्रिषु दृढे क्लीबमनुमत्याम्' इति रत्नमाला । पञ्चानां वटानां समाहारः पञ्चवटी तस्यां प्रतिवसति निवसति ॥ गोदावरीतटोद्देशो गोदावर्यास्तीरप्रदेशः । विषयबाहुल्यं स्मृतिविषयवस्तुभूयस्त्वं कालविप्रकर्षश्चानुभवकालस्य चिरात्ययश्च स्मृतिं प्रमुष्णाति । स्मरत्यनयेति स्मृतिर्भावना तां स्मृतिजनकसंस्कारं प्रमुष्णाति स्मृतिजननसामर्थ्यरहितां करोति ॥ तदुभयमाह—**कल्पस्येत्यादिना**।

पर्यन्तेष्वप्यवधिवलयस्तेजसां यावदद्रि-
लोकालोकः परिसरगतः सप्तमस्याम्बुराशेः ॥ १० ॥

**जटायुः**—तत्रैकदा रघुवृषं वृषस्यन्ती शूर्पणखा प्राप्ता ।

**संपातिः**—अहो निर्मर्यादता ।

अनेकयुगजीविन्यास्त्रेता यस्यास्त्रयोदशी ।
सा क्षीरकण्ठकं वत्सं वृषस्यन्ती न लज्जिता ॥ ११ ॥

**जटायुः**—

तस्यां च कर्णनासोष्ठकर्तनेन न्यवीविशत् ।
दशाननतिरस्कारप्रशस्तिमिव लक्ष्मणः ॥ १२ ॥

**संपातिः**—तन्निमित्तस्तर्हि कश्चिदनुबद्धः परैरभियोगः ।

**जटायुः**—बाढम् । एकेनैव रामभद्रेण ।

---

कल्पस्यादावस्य ब्रह्मकल्पस्यारम्भे चारुगङ्गैव पताका ध्वजपटी यस्य स तथोक्तश्चरणो दण्डवत् । गङ्गाध्वजपटवदिति भावः। विष्णोश्चरणो यावदुदस्थादुद्गतस्तावदुपर्यूर्ध्वप्रदेशे मम परिचयो विशिष्यावगम आसीत् । किंच तेजसां सूर्यादीनां ज्योतिषामवधिवलयः सीमावलयभूतः सप्तमस्याम्बुराशेः परिसरगतः समीपगतो लोकालोकश्चक्रवालपर्वतः। यावत्संनिविष्ट इति शेषः । पर्यन्तेषु पार्श्वेषु तावत्परिचय आसीदित्यनुषङ्गः । अतः पूर्वोक्तमुभयं स्मृतिं प्रमुष्णातीति संबन्धः॥ १० ॥ **तत्रेति** । रघुवृषं रघुवंशजश्रेष्ठं वृषस्यन्ती रत्यर्थमिच्छन्ती । 'वृषस्यन्ती तु कामुकी' इत्यमरः ॥ **अनेकेति** । अनेकयुगजीविन्या यस्यास्त्रेता त्रेतायुगम् । 'त्रेता त्वग्नित्रये युगे' इति रत्नमाला । त्रयोदशी त्रयोदशानां पूरणी । भवतीति शेषः । 'तस्य पूरणे डट्' इति डटष्टित्वान्ङीप् । सा शूर्पणखा क्षीरकण्ठकमत्यन्तबालकं वत्सं रामं वृषस्यन्ती मैथुनार्थमिच्छन्ती सती न लज्जिता न त्रपते । अतोऽस्या मर्यादातिक्रमो विस्मयनीय इति संबन्धः । किंचिदधिकद्वादशयुगवयस्कायास्त्रिंशद्वर्षाधिकवयस्करामकामना धर्मशास्त्रकामशास्त्रयोरत्यन्तानुचितेत्यर्थः । वृषस्यन्तीत्यत्र वृषशब्दस्येच्छार्थकक्यजन्तस्य 'अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि', 'अश्ववृषयोर्मैथुनेच्छायाम्' इति सूत्रवार्तिकाभ्यामसुगागमे कामुक्यां रूढिः ॥ ११ ॥ **तस्यामिति** । लक्ष्मणस्तस्यां शूर्पणखायाम् । अस्य न्यवीविशदित्यनेनान्वयः । कर्णनासोष्ठस्य । समाहारद्वन्द्वः । कर्तनेन छेदनेन दशाननस्य तिरस्कारेण प्रशस्तिं रामकीर्तिं न्यवीविशन्निवेशयामास । निवेशयतेर्लुङि चङि द्वित्वं सन्वद्भावोपाधिनाभ्यासदीर्घः ॥ १२ ॥ **तन्निमित्त इति** । तन्निमित्तः शूर्पणखावैरूप्यकरणहेतुकः कश्चिदभियोगो वैरहेतुरभिग्रहः । 'अभियोगस्त्वभिग्रहः' इत्यमरः । अनुबद्ध उत्पादितः । कश्चिदित्यनेन हेतुभेदाभियोगवैविध्यं व्यज्यते ॥ **एके-**

चतुर्दशसहस्राणि चतुर्दश च राक्षसाः।
त्रयश्च दूषणखरत्रिमूर्धानो रणे हताः॥ १३ ॥

**संपातिः**—आश्चर्यमाश्चर्यम्। अथवा नाश्चर्यमेतद्दाशरथौ। महत्पुनरपावृतं वैरद्वारमिति मन्यमानः संप्रमुग्धोऽस्मि। तद्वत्स जटायो, नास्मिन्नवसरे सीतारामलक्ष्मणास्त्वया क्षणमपि मोक्तव्याः।

स्वसुः सोदर्यायाः कथमिव निकारं दशमुख-
स्तथा भूयोभूयः स्वजनविनिपातं च सहते।
मदान्धो मायावी प्रभुरमितवीर्योऽन्तिकचरः
सपत्नः कष्टं नो निपुणमनुपाल्या हि शिशवः॥ १४ ॥

---

**नेति**। लक्ष्मणस्तु सीतारक्षणे नियुक्त इति भावः। **चतुर्दशेति**। समासान्तविधेरनित्यत्वात्। 'द्वित्रिभ्यां षमूर्ध्नः' इति षप्रत्ययाभावेन त्रिमूर्धान इति॥ १३॥ **आश्चर्यमिति**। दाशरथौ महाशूरदशरथात्मजे। 'पितुः शतगुणं पुत्रः' इति न्यायादिति भावः। दशरथशब्दादपत्यत्वविवक्षायाम् 'अत इञ्'। **महदिति**। पुनःशब्दः किंत्वित्यर्थः। 'पुनरप्रथमे भेदे' इत्यमरः। महद्विपुलं वैरद्वारं वैरहेतुरेव द्वारम्। श्लिष्टरूपकम्। 'द्वारं तु द्वार्युपाये च' इति रत्नमाला। अपावृतमिति विवृतमिति मन्यमानः संभावयन्संप्रमुग्धोऽस्मि कृत्याकृत्यविवेकशून्यो भवामि। 'मुह वैचित्ये'। वैचित्यमविवेकः। अस्मिन्नवसरे समये न मोक्तव्या न त्याज्याः। कुत इत्यत्राह—**स्वसुरिति**। मदेन मदिरादिकृतहर्षमोहव्यतिकरेणान्धः कृत्यादिप्रमितिशून्यः। तदुक्तम्—'मदिरादिकृतो हर्षमोहव्यतिकरो मदः' इति। अथवा मदेन शौर्यादिप्रयुक्तगर्वेणान्धः। 'गजदानं गर्वहर्षरेतोमृगमदा मदाः' इति रत्नमाला। मायावी मायाप्रचुरो वञ्चनया शाम्बरीप्रभृतिविस्मयनीयास्त्रशस्त्रादिसृष्ट्या च भूयिष्ठ इत्यर्थः। 'अस्मायामेधा—' इत्यादिना भूम्नि मत्वर्थीयो विनिः। प्रभुः कोशदण्डादिमान्। 'प्रभुः शक्ताधिपौ' इति रत्नमाला। अमितवीर्योऽसंख्येयपराक्रमः। 'वीर्यं पराक्रमे शुक्रे' इति रत्नमाला। अन्तिकचरः सपत्नो भूम्यनन्तरः शत्रुर्दशमुखो रावणः सोदर्याया एकोदरजातायाः। 'सोदराद्यत्' इति यत्प्रत्ययः। 'समानोदर्यसोदर्यसगर्भ्यसहजाः समाः' इत्यमरः। स्वसुर्भगिन्याः शूर्पणखायाः। 'भगिनी स्वसा' इत्यमरः। निकारं वैरूप्यम्। 'निकारो विप्रकारः स्यात्' इत्यमरः। कथमिव सहते कथं मृष्यति। इवशब्देनाभासोऽपि सहनहेतुर्नास्तीति व्यज्यते। तथा तद्वद्भूयोभूयः पुनः पुनः स्वजनानां बन्धूनाम्। 'बन्धुस्वस्वजनाः समाः' इत्यमरः। विनिपातं च वधं च कथमिव सहते। सुबाहुविराधवधाभिप्रायेण खरदूषणादिवधाभिप्रायेण च भूयोभूय इत्युक्तम्। कष्टं दुःखं निपुणं च यथा तथा शिशवः सीतारामलक्ष्मणा नोऽस्माकमनुपाल्या रक्षणीयाः। भवन्तीति शेषः। बन्धुवधादयो वैरद्वारविवरणहेतव इति भावः। भूम्यनन्तरलक्षणं पूर्वमेवोक्तम्। अस्मिञ्श्लोक उपायापायशङ्काभ्यां प्राप्त्याशा

अहमपि समुद्रे कृताह्निकः शिवतातिमनुसंधास्यामि । (इति निष्क्रान्तः ।)

जटायुः—(गगनगमनमभिनीय ।)

एषोऽस्मि प्रलयमरुत्प्रचण्डरंहः-
संक्षिप्तप्रथिम पिबन्निवान्तरिक्षम् ।
क्षेपीयो मलयगिरेर्निवासभूभृ-
त्संसक्तक्षितिरुहजालमभ्युपेतः ॥ १५ ॥

अयमविरलानोकहनिवहनिरन्तरस्निग्धनीलपरिसरारण्यपरिणद्धगोदावरीमुखकन्दरः सततमभिष्यन्दमानमेघमेदुरितनीलिमा जनस्थानमध्यगोगिरिः प्रस्रवणो नाम । इयं च पञ्चवटी । (विभाव्य ।) अये,

दूरं हृतश्चित्रमृगेण राम-
स्तया दिशा गच्छति लक्ष्मणोऽपि ।
ततः परिव्राडुटजं प्रविष्टो
धिग्व्यक्तरूपो दशकंधरोऽयम् ॥ १६ ॥

---

स्फुटा । अत्र च तत्त्वानुकीर्तनरूपो मार्गः, वितर्कप्रतिपादकवाक्यात्मकं रूपम्, अपकारिजनाद्भयरूप उद्वेगः, शङ्कात्रासरूपसंभ्रमश्च संध्यङ्गान्युक्तानि ॥ १४ ॥ **अहमपीति** । कृताह्निकः कृतस्नानः शिवतातिं शिवंकरं वस्त्वनुसंधास्यामि ध्यायामि । 'शिवतातिः शिवंकरः' इत्यमरः । अत्रेष्टार्थोपायानुसरणमाक्षेपो नाम संध्यङ्गमुक्तम् ॥ गगनगमनमभिनीय । स्वावासं प्राप्तुमिति भावः । **एषोऽस्मीति** । एषोऽहं प्रलयमरुतः प्रलयवातात्प्रचण्डेन तीव्रेण । 'चण्डो दैत्यविशेषे यमदासे त्रिषु तु तीव्रकोपनयोः' इति रत्नमाला । रंहसा वेगेन । 'रंहस्तरसी तु रयः स्यदः' इत्यमरः । संक्षिप्तः संकोचितः प्रथिमा वैपुल्यं यस्य तत्तथोक्तम् । 'पृथ्वादिभ्य इमनिज्वा' इति भावे इमनिच् । अन्तरिक्षं नभः पिबन्निव सन् । अन्तरिक्षस्य स्वच्छत्वाज्जलसादृश्यमभिसंधाय पिबन्निवेत्युक्तम् । मलयगिरेर्मलयपर्वतात्क्षेपीयो द्रुतं यथा तथा निवासभूभृन्निवासपर्वतस्तेन सह संसक्तं संयुक्तं क्षितिरुहजालं वृक्षपण्डमभ्युपेतोऽस्मि प्राप्तो भवामि ॥ १५ ॥ **अयमिति** । अयमनोकहानां वृक्षाणां निवहैः समूहैर्निरन्तरो निबिडः स्निग्धश्चाकचक्ययुक्तो नीलः परिसरः समीपदेशो येषां तानि तथोक्तानि तथाविधैररण्यैर्वनैः परिणद्धा संश्लिष्टा गोदावरी मुखेषु द्वारेषु येषां ते तथोक्ताः कन्दरा गुहा यस्य स तथोक्तः । अभिष्यन्दमानैर्व्याप्नुवद्भिः । 'स्यन्दू प्रस्रवणे' इत्यस्याभिपूर्वस्य 'अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु' इति षत्वम् । मेघैर्मेदुरितो द्विगुणितो नीलिमा नैल्यं यस्य स तथोक्तः । **दूरमिति** । रामश्चित्रमृगेण दूरं हृतः प्रापितः । अभूदिति शेषः । लक्ष्मणस्तया दिशा रामगतया दिशा गच्छति । ततस्तदनन्तरं परिव्राट् संन्यासी । 'भिक्षुः परिव्राट् कर्मन्दी' इत्यमरः । उटजं पर्णशालाम् । 'पर्णशालोटजो-

अहो प्रमादः प्रमादः ।

परःसहस्रैरायुक्तं पिशाचवदनैः खरैः ।
रथं वधूटीमारोप्य पापः क्वाप्येष गच्छति ॥ १७ ॥

पौलस्त्य पौलस्त्य,

धर्तारः प्रलयेषु ये भगवतो वेदस्य विद्येश्वरा-
स्तेषामन्वयकेतनस्य भवतः स्नातस्य वेदव्रतैः ।
जेतुर्वैतलसद्मनोऽपि तपसा दीप्तस्य राज्ञः सतो
निन्द्या दुश्चरितावतारजननी जाता कथं दुर्मतिः ॥ १८ ॥

कथमवज्ञया न शृणोतीव । आः दुरात्मन्राक्षसापसद, तिष्ठ तिष्ठ ।

तुण्डप्रोतशिरःकरोटिविवराकृष्टस्फुरत्त्वग्वसा-
क्लोमप्लीहयकृद्द्रुतोष्णरुधिरस्नाय्वान्त्रमालस्य ते ।

---

ऽस्त्रियाम्' इत्यमरः । प्रविष्टः प्राप्तः । व्यक्तरूपोऽयं भिक्षुर्दशकंधरः । जात इति शेषः । धिगिति निन्दायाम् । अत्र प्रस्तुतोपयोगिच्छद्माचरणादभूताहरणं नाम संध्यङ्गमुक्तम् ॥ १६ ॥ प्रमादो मम रामलक्ष्मणयोश्चानवधानम् । अहो । विस्मयनीय इत्यर्थः । कुत्सने द्विरुक्तिः । **परःसहस्रैरिति** । सहस्रेभ्यः परे परःसहस्राणि तैः । पिशाचानामिव वदनानि येषां ते तथोक्तैः खरैरायुक्तं समन्ततो युक्तं रथं वधूटीमपांसिनीं सीतामारोप्य एष पापो रावणः क्वापि गच्छति । 'जीवद्भर्त्री कुलस्था या वधूटी सा ह्यपांसिनी' इति त्रिकाण्डशेषः ॥ १७ ॥ पौलस्त्य पुलस्त्यवंश्य । साभिप्रायमिदं विशेषणम् । तमभिप्रायमाह—**धर्तार इति** । विद्यानां सर्वासामपि विद्यानामीश्वरा निर्वाहिकाः प्रलयेष्वध्येतृशून्यकालेषु भगवतः पूज्यस्य वेदस्य सर्वपुरुषार्थतत्साधनज्ञापकस्याम्नायस्य धर्तारो धारयितारः । सृष्टिकालेषु प्रवर्तनार्थमिति भावः । ये पुलस्त्यादयः । भवन्तीति शेषः । तेषामन्वयकेतनस्य वंशध्वजस्य । तत्प्रख्यापकस्येति यावत् । वेदव्रतैश्चतुर्वेदाङ्गप्राजापत्यादिशिरोव्रतादिभिः स्नातस्य व्रताङ्गस्नानकर्तुर्वैतले भवानि वैतलान्यधोतलविशेषस्थानि सद्मानि येषां ते तथोक्ताः कालकेयादयस्ताञ्जेतुर्जितवतः । तृन्नन्तत्वाद्वैतलसद्मन इति द्वितीयान्तम् । तपसा दीप्तस्य प्रकाशमानस्य राज्ञः सतो रञ्जकस्य प्रभोः सतो भवतस्ते दुश्चरितानां दुष्कर्मणामवतारस्य संक्रमणस्य जननी हेतुभूता दुर्मतिः सीतापहारकर्तव्यताविषयकदुर्बुद्धिः कथं जाता केन प्रकारेण जाता । वंशविद्यातपःपराक्रमप्रभावादीनि चेह चौर्येण परकलत्रापहारप्रतिभटानीति भावः । अत्र प्रस्तुतोपयोगिसामवचनात्संग्रहो नाम संध्यङ्गमुक्तम् ॥ १८ ॥ **कथमिति** । अवज्ञया पक्षित्वप्रयुक्तानादरेण न शृणोति । मदीयं वचनमिति शेषः । इवशब्दः संभावनायाम् । आः इति कोपे । दुरात्मन्दुर्बुद्धे, राक्षसापसद राक्षसाधम । 'निहीनोऽपसदः' इत्यमरः । तिष्ठ तिष्ठेति कोपे द्विरुक्तिः । **तुण्डेति** । तुण्डेन मद्वक्त्रेण प्रोतानां छिद्रीकृतानां

अत्युग्रक्रकचप्रचण्डनखरोत्कर्तक्वणत्कीकसै-
रङ्गैः खण्डितकंधराधमनिभिः श्येनीसुतस्तृप्यतु ॥ १९ ॥

(इति निष्क्रान्तः ।)

शुद्धविष्कम्भः ।

---

(प्रविश्य)

**लक्ष्मणः**—हा आर्ये, क्वासि । कष्टं दशापरिणाममनुभवत्यार्यो मारीचशत्रुः ।

एष मूर्त इव क्रोधः शोकाग्निरिव जङ्गमः ।
कृच्छ्राद्बिभर्ति हृल्लेखलज्जासंवेगिनीं तनुम् ॥ २० ॥

---

शिरसां करोटेरस्थ्नः । 'शिरोऽस्थि तु करोटिः स्त्री' इत्यमरः । विवरेभ्यो रन्ध्रेभ्य आकृष्टा बहिरुद्धृताः स्फुरन्त्यश्चलन्त्यः । इदं विशेषणद्वयं बहुव्रीहिघटकमालाशब्दान्तद्वन्द्वे वेदितव्यम् । त्वचोऽसृग्धराः । 'त्रियां त्वगसृग्धरा' इत्यमरः । वसा मेदांसि । 'मेदस्तु वपा वसा' इत्यमरः । 'स्फुरत्प्रस्फुट–' इति च क्वचित्पठ्यते । क्लोम तिलकम् । 'तिलकं क्लोम' इत्यमरः । प्लीहा गुल्मः । 'गुल्मस्तु प्लीहा पुंसि' इत्यमरः । यकृत्कालखण्डम् । 'कालखण्डयकृती तु समे इमे' इत्यमरः । द्रुतानि द्रवीभूतान्युष्णानि युद्धक्रोधवशादुष्णस्पर्शानि रुधिराणि रक्तानि स्नायवो वस्नसाः । 'अथ वस्नसा । स्नायुः स्त्रियाम्' इत्यमरः । आन्त्रमाला मालासदृशमान्त्रं पुरीतत् । 'आन्त्रं पुरीतत्' इत्यमरः । यस्य स तथोक्तस्तस्य ते तव, अस्य चाङ्गैरित्यनेनान्वयः । अत्युग्रोऽतितीक्ष्णः क्रकच इव करपत्राख्यशस्त्रविशेष इव प्रचण्डैस्तीक्ष्णैर्नखरैः । 'क्रकचोऽस्त्री करपत्रम्', 'नखोऽस्त्री नखरोऽस्त्रियाम्' इति चामरः । उत्कर्तेन सम्यग्भेदनेन । 'कृती च्छेदने' इत्यस्माद्भावे घञ् । क्वणन्ति शब्दवन्ति कीकसान्यस्थीनि येषां, तानि तथोक्तानि तैः । 'कीकसं कुल्यमस्थि च' इत्यमरः । खण्डितारिछन्ना ग्रीवाणां कंधराणाम् । 'ग्रीवायां शिरोधिः कंधरेत्यपि' इत्यमरः । धमनयः शिरा येषां तैः । 'नाडी तु धमनिः शिरा' इत्यमरः । अङ्गैस्तवावयवैः करणैः श्येनीसुतो गृध्रः । अहमिति यावत् । तृप्यतु तृप्तिं भजतु । प्राप्तकाले लोट् । अत्र रोषसंभ्रमवचनरूपं तोटकं नाम संध्यङ्गमुक्तम् ॥ १९ ॥ **निष्क्रान्त इति** । जटायुरिति शेषः ॥ शुद्धविष्कम्भ इति केवलसंस्कृतात्मकत्वात् । वृत्तानां विराधशूर्पणखाखरदूषणवधादिकथांशानां वर्तिष्यमाणानां जटायुकथांशानां च संक्षेपेण कथनाच्चेति भावः ॥ अथ पञ्चमोऽङ्कः प्रस्तूयते—**प्रविश्य लक्ष्मण** इत्यादिना । आर्ये । सीते इत्यर्थः । ज्येष्ठभ्रातृभार्यात्वादार्याशब्दः । कष्टं दुःखरूपं दशानां क्रोधाद्यवस्थानाम् । 'दशावस्थानेकविधा' इत्यमरः । परिणामं विकारम् । 'परिणामो विकारः' इत्यमरः । अनुभवति भुङ्क्ते मारीचशत्रुः । मायामृगहननादिति भावः । तमाह—**एष इति** । मूर्तो मूर्तिमान्क्रोध इव स्थितः शत्रुकृतापराधप्रयुक्तमनःप्रज्वलातिशय इति संभावनीयो जङ्गमः

तथा हि ।

आभुग्नभ्रुकुटीविटङ्कघटनासंसूचितान्तःस्फुर-
द्धैर्यस्तम्भितदुर्व्यवस्थविततप्रोच्चण्डकोपानलः ।
उद्धूमावलिरम्भसामिव निधिर्मध्यज्वलद्वाडवो
विद्युद्व्यञ्जितवज्रगर्भजलदच्छायां समालम्बते ॥ २१ ॥

(ततः प्रविशति रामः ।)

**रामः—**

न्यक्कारो हृदि वज्रकील इव मे तीव्रः परिस्पन्दते
घोरान्धे तमसीव मज्जति मनः संमीलितं लज्जया ।

---

संचरिष्णुः साक्षादग्निरिव स्थितः । दाहहेतुत्वेनाग्नितुल्येष्टजनवियोगादिजन्यदुःखातिशय इति संभावनीयः । उभयत्रोत्प्रेक्षालंकारः । एष आर्यो हृल्लेखो जुगुप्साविशेषः । 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृदयशब्दस्य हृदादेशः । हृदयं लिखतीति हृल्लेखः लेख इत्यण्णन्तम् । भार्यापहारे दोषदर्शनप्रयुक्तमनोवस्थाजुगुप्सात्र हृल्लेखः । लज्जा तु मनःसंकोचस्ताभ्यां हेतुभ्यां संवेगिनीं संभ्रमवतीम् । 'समौ संवेगसंभ्रमौ' इत्यमरः । तनुं शरीरं कृच्छ्राद्दुःखाद्बिभर्ति धारयति ॥ २० ॥ पूर्वोक्तमेव दृष्टान्तोक्त्या विशदयति—**तथा हीति** । तथैवेत्यर्थः । **आभुग्नेति** । एष इत्यनुषज्यते । आभुग्नयोः कुटिलयोः । 'आभुग्नं कुटिलम्' इत्यमरः । भ्रुकुटीविटङ्कयोर्विटङ्कसदृशभ्रुवोः । 'कपोतपालिकायां तु विटङ्कं पुंनपुंसकम्' इत्यमरः । उन्नतत्वादिना सादृश्यं विवक्षितम् । घटनयान्योन्यमेलनेन संसूचितो व्यञ्जितोऽन्तःस्फुरता धैर्येणाप्रकम्प्यत्वलक्षणस्वभावविशेषेण स्तम्भितः प्रतिहतोऽथापि दुर्व्यवस्थो दुःखेन व्यवस्था नियमनं यस्य स दुर्व्यवस्थः, अत एव विततो विशीर्णः प्रोच्चण्डोऽतितीव्रः कोपात्मकोऽनलोऽग्निरभिसदृशः कोपो यस्य स तथोक्तः, अत एवोद्धूमावलिरुद्गतधूमपङ्क्तिर्मध्ये ज्वलन्दीप्यमानो वाडवो वडवाग्निर्यस्य स तथोक्तः, अम्भसां निधिरिव समुद्र इव स एष आर्यो विद्युता व्यञ्जितो वज्रो दम्भोलिर्गर्भेऽन्तर्यस्य स तथोक्तस्तस्य जलदस्य छायां कान्तिं समालम्बते । धारयतीत्यर्थः । अत्र भ्रुकुटीधूमावल्योः कोपानलवाडवयोश्च बिम्बप्रतिबिम्बभावेनाभिन्नयोः साधारणधर्मत्वादुपमालंकारः । एवं भ्रुकुटीविद्युतोः कोपानलवज्रयोश्च बिम्बप्रतिबिम्बभावेनाभिन्नत्वादुपमालंकारः । तदनुप्राणिता च पदार्थवृत्तिरूपा निदर्शनेति संकरः । 'पदार्थवृत्तिमप्येके वदन्त्यन्यां निदर्शनाम्' इत्युक्तेः । अत्र कोपोत्कर्षाभिधानात्प्रस्तुतोत्कर्षाभिधानमुदाहृतिर्नाम संध्यङ्गमुक्तम् ॥ २१ ॥ **न्यक्कार इति** । न्यक्कारो भार्यापहरणभवः परिभवो मे हृदि वज्रकील इव दुर्भेद्यवज्रशङ्कुरिव । 'ज्वाले स्थाणौ द्वयोः कीलः शङ्कुशङ्कुलयोः पुमान्' इति रत्नमाला । तीव्रः सन्दुःसहः सन्परिस्पन्दते चलति । प्रतिक्रियानर्हत्वात्सादृश्यम् । किंच मनो लज्जयानुचितदशावर्तित्वप्रयुक्तसंकोचेन संमीलितं स्वल्पीभूतं सद्घोरान्धे भयंकरेऽज्ञानावहे

शोकस्तातविपत्तिजो दहति मां नास्त्येव यस्मिन्क्रिया
मर्माणीव पुनश्छिनत्ति करुणा सीतां वराकीं प्रति ॥ २२ ॥

**लक्ष्मणः**—आर्य आर्य, न खलु लोकोत्तरकर्माणस्त्वादृशाः कृच्छ्रेषु प्रमुह्यन्ति ।

**रामः**—वत्स, लोकोत्तराणि रामस्य कर्माणि ।

यैर्गुप्तान्यकुतोभयानि भुवनान्यासन्महाभीशव-
स्ते सूर्यान्वयकेतवो नृपतयः पूर्वे तिरस्कारिताः ।
कल्पान्तेष्वपि यः स्थिरः स गमितः साधुर्जटायुर्दिवं
पत्नीं हारयता वने यदकृतं लोकैः कृतं तन्मया ॥ २३ ॥

---

च । 'अन्ध दृष्ट्युपघाते' इत्यस्मात्पचाद्यच् । खञ्जकुब्जादिवत्समासः । तमसि मज्जतीव । कर्तव्येषु प्रतिपत्तिशून्यं भवतीत्यर्थः । किंच तातस्य पितृसखस्य जटायोर्विपत्तेर्मरणाज्जायत इति तातविपत्तिजः । 'पञ्चम्यामजातौ' इति जनेर्डः । शोको दुःखं कर्तृ । मां दहति भस्मीकरोति । 'दह भस्मीकरणे' । यस्मिंस्तातविपत्तिजशोके क्रिया प्रतिक्रिया नास्त्येव । न्यक्कारादौ तु प्रतिक्रियास्तीति हृदयम् । वराकीं कृपणां सीतां प्रति करुणा पुनः सीतादुःखनिबन्धनदुःखातिभूमिस्तु । 'पुनरप्रथमे भेदे' इत्यमरः । मर्माणि प्राणस्थानानि । 'तिरीटं मर्म योजनम्' इति नपुंसकत्वम् । छिनत्तीव । उक्तं च हनूमता—'इयं सा यत्कृते रामश्चतुर्भिः परितप्यते । कारुण्येनानृशंस्येन शोकेन मदनेन च ॥ स्त्री प्रणष्टेति कारुण्यम्' इति प्राधान्यात्तस्येहोपादानम् ॥ २२ ॥ लोकोत्तरकर्माणो लोकेषु श्रेष्ठचरिताः कृच्छ्रेषु कष्टेषु न प्रमुह्यन्ति प्रमुग्धा न भवन्ति प्रमोहस्त्वविवेकः । अत्राप्युदाहृतिर्नाम संध्यङ्गमुक्तम् ॥ **वत्सेति** । काकुरत्राभिप्रेता । किं लोकोत्तराणीत्यर्थः । तदाह—**यैरिति** । यैर्नृपतिभिर्भुवनानि गुप्तानि रक्षितानि सन्ति अकुतोभयानि कुतश्चिदपि भयरहितान्यासन्नभवन् । नास्ति कुतो भयं यस्येति विग्रहे मयूरव्यंसकादित्वात्समासः । महान्तोऽभीशवः किरणा येषां ते तथोक्ताः । 'अभीशुः प्रग्रहे रश्मौ' इति शाश्वतः । सूर्यान्वयस्य सूर्यवंशस्य केतवो ध्वजवत्प्रकाशकाः पूर्वे प्राचीनास्ते नृपतयो राजानो मया तिरस्कारिता अन्यैः परिभवं मया प्रापिताः । किंच यो जटायुः कल्पान्तेष्वपि ब्रह्मदिनावसानेष्वपि स्थिरोऽनश्वरः साधुः परोपकारशीलः स जटायुर्मया दिवं गमितो लोकान्तरं प्रापितः । किंच वने पत्नीं हारयता रावणकर्तृकसीतापहारे प्रयोजककर्त्रा । मया लोकैर्यत्कर्माकृतं तत्कृतम् । अतो लोकोत्तराणि रामस्य कर्माणीत्यर्थः । यद्वा लोकश्रेष्ठानीत्यभिप्रायेण लोकोत्तराणीति लक्ष्मणेनोक्तम् । रामस्त्वर्थान्तरपरिकल्पनार्थं तदेवानुवदति—**वत्स, लोकोत्तराणीति** । लोकानुत्तारयन्त्युल्लङ्घयन्त इति लोकोत्तराणीत्यभिप्रायेण पूर्वे तिरस्कारिता इत्युक्तम् । राजा राष्ट्रमिति न्यायेन लोकशब्दस्तद्राजपरः । किंच लोकमामुष्मिकलोकं उत् अतिशयेन तारयन्ति प्रापयन्तीति लोकोत्तराणि । 'वेदान्तं तरति'

हा तात काश्यप शकुन्तराज, क्व पुनस्त्वादृशस्य महतस्तीर्थभूतस्य साधोः संभवः ।

**लक्ष्मणः**—पश्यामीव तां पश्चिमावस्थां तातस्य जटायुषः ।

यामोषधिमिवायुष्मन्विचिनोषि महावने ।

सा सीता मम च प्राणा रावणेनोभयं हृतम् ॥ २४ ॥

इत्येतदभिधाय वीरलोकानधिष्ठितवांस्तातः ।

**रामः**—वत्स, हृदयमर्माविधः खल्वमी कथोद्धाताः ।

**लक्ष्मणः**—अथ किम् ।

**रामः**—किं हि नाम तत्करिष्यते यदेतावतः परिभवातिप्रसङ्गस्य तुल्यं स्यात् ।

प्रागेव राक्षसवधाय मतिः कृता मे

वध्या हि ते बहुभिरेव यतो निमित्तैः ।

---

इत्यादाविव प्राप्त्यर्थकात्तरतेरन्तर्भावितण्यर्थात्पचाद्यच् । इत्यभिप्रायेण जटायुर्दिवं गमित इत्युक्तम् । किंच लोकेभ्य उत्तीर्णानि लोकोत्तराणीत्यभिप्रायेण 'यदकृतं लोकैः कृतं तन्मया' इत्युक्तम्, अतो लोकोत्तराणि रामस्य कर्माणीति सुसूक्तं त्वयेति भावः ॥ २३ ॥ तीर्थभूतस्य गुरुवद्धितोपदेष्टुः । 'निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ' इत्यमरः । 'भूतं न्याय्ये समे' इति रत्नमाला । क्व संभव इत्यन्वयः ॥ पश्चिमावस्थामन्तिमावस्थां पश्यामीव । स्मृतिवैशद्याद्दर्शने साम्यम् । **यामिति** । अयं श्रीरामायणश्लोकः । आयुष्मन् । भूम्नि मतुप् । आशास्यमानदीर्घायुष्येत्यर्थः । यां सीतामोषधिमिव मृतसंजीविनीमोषधिमिव महावने दुर्लभौषधीनामपि संभवस्थानत्वान्महति वने । ओषधिर्हि वने विचेया भवति । विचिनोष्यन्विष्यसि । सा सीता लोकसंजीविनी सीता मम प्राणाश्चेत्युभयम् । सामान्ये क्लीबत्वम् । रावणेन हृतं प्रापितं नाशितं चेत्यर्थः । द्वयमपि तन्त्रेण विवक्षितम् ॥ २४ ॥ **इतीति** । वीरलोकान्युद्धे हतानां वीराणां प्राप्यांल्लोकान् । 'अधिशीङ्स्थासां कर्म' इति कर्मत्वम् । लोकाभिनयेन वीरलोकानित्युक्तम् । 'गच्छ लोकाननुत्तमान्' इत्यनुत्तमलोकप्रदानात् ॥ **वत्सेति** । हृदयमर्माणि विध्यन्तीति विग्रहे 'नहिवृति–' इत्यादिना मर्मशब्दस्य दीर्घः । कथाया उद्धातः प्रस्तावः । 'स्यादभ्यादानमुद्धातः' इत्यमरः ॥ अथ किमित्यङ्गीकारे ॥ **किमिति** । परिभवातिप्रसङ्गस्य परिभवातिशयस्य यत्तुल्यमनुरूपं प्रतिविधानं स्यात्तत्किं नाम करिष्यत इत्यन्वयः । **प्रागेवेति** । प्रागेव सीतापहारादेः पूर्वमेव मे मतिरिच्छा राक्षसवधाय कृता । यतो यस्मात्ते राक्षसा बहुभिर्निमित्तैर्मुनिजनकदनादिभिरव्यभिचरितहेतुभिर्वध्या एव । ततो हेतोः प्रागेव मतिः कृतेति संबन्धः । परत इतःपरं सीतापहारादिनिमित्तोत्पत्त्यनन्तरं कृत्यं कर्तुं शक्यं प्रतिविधानं कुलस्य

तन्मात्रके त्विह कृतेऽपि कुतः शमो मे
कृत्यं कुलस्य शमनात्परतश्च नान्यत् ॥ २५ ॥

तथा हि वत्स,

प्रचण्डपरिपिण्डितः स्तिमितवृत्तिरन्तर्मुखः
पिबन्निव मुहुर्मुहुर्झटिति मन्युरुच्चैर्ज्वलन् ।
शिखाभिरिव निश्चरन्ननुपलभ्य दाह्यान्तरं
पयोधिमिव वाडवो दहति मामतस्त्रायताम् ॥ २६ ॥

**लक्ष्मणः**—एतान्यतिसंभ्रान्तविविधमृगयूथान्युन्मत्तश्वापदकुलाक्रान्तविकटगिरिगह्वराण्यरण्यानि दक्षिणां दिशमभि प्रवर्तन्ते । तदेभिरेव पथिभिर्विभावयामः ।

**रामः**—वत्स, अदृष्टपूर्वाः खल्वमी जनस्थानविभागाः ।

---

शमनादन्यन्नास्ति राक्षसकुलविध्वंसनादन्यन्न संभवति । इह तु सीतापहरणानिमित्तेषु तु तन्मात्रके तदेव तन्मात्रमल्पं तन्मात्रं तन्मात्रकम् । अत्यल्पमेव राक्षसकुलविध्वंसनम् । तस्मिन्कृतेऽपि मे मम शमो मत्कृतोपरमः कुतः । कस्माद्भवेदिति शेषः । अतः किं नाम करिष्यत इति संबन्धः ॥ २५ ॥ **तथा हीति** । अनुरूपप्रतिविधानदौर्लभ्यादित्यर्थः । **प्रचण्डेति** । प्रचण्डोऽत्यन्ततीव्रः परिपिण्डितः संघातभावं प्राप्तः स्तिमितवृत्तिः स्तब्धवृत्तिः । खञ्जकुब्जादिवत्समासः । अन्तर्मुखो गूढप्रसरणो मां मुहुर्मुहुः पिबन्निव झटित्युच्चैर्ज्वलञ्शिखाभिर्ज्वालाभिर्निश्चरन्निव बहिर्निःसरन्निव च स्थितो मन्युः क्रोधो दाह्यान्तरमनुपलभ्य स्वल्पस्य राक्षसकुलविध्वंसनस्यासत्प्रायत्वेन मद्व्यतिरिक्तं दग्धव्यं वस्त्वप्राप्य वाडवः पयोधिमिव मां दहति भस्मीकरोति । अतोऽस्मान्मन्योर्मा त्रायतां रक्षतु । भवानिति शेषः । अनुरूपदाह्यलम्भनादिना मां त्वं रक्षेत्यर्थः । 'भीत्रार्थानां–'इति पञ्चमी । इयमेव वीररसस्य परा काष्ठा । अत्र चाग्निर्हि प्रथमं गोमयपिण्डादिषु पिण्डीभूतशक्त्यावस्थतया स्तब्धवृत्तिरन्तरेव सूक्ष्मम्, अनन्तरमूर्ध्वं ज्वलन्,तदनन्तरं समन्ततो ज्वालाभिर्व्याप्नुवन्,आश्रयान्तराभावेन स्वाश्रयमेव दहतीत्यस्य प्रसिद्धाग्निवृत्तान्तस्याप्रस्तुतस्य विशेषणसाम्येन स्फूर्तेः समासोक्तिरलंकारः । 'समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य यत्' इत्युक्तेः ॥२६॥ अनुरूपदाह्यालाभं मन्वानो लक्ष्मणो व्यासङ्गान्तरोत्पादनमेव त्राणं मत्वाह—**एतानीति** । मृगाणां हरिणजातीयानां यूथानि कुलानि । 'सजातीयैः कुलं यूथं तिरश्चां पुंनपुंसकम्' इत्यमरः । श्वापदानां दुष्टसत्त्वानां कुलैः समूहैः । 'शुनो दंष्ट्रा' इत्यादिना संज्ञायां पूर्वपदस्य दीर्घः । दक्षिणां दिशमभि दक्षिणया दिशोपलक्षणीयाः सन्तः प्रवर्तन्ते पारम्पर्येण तिष्ठन्ति । 'अभिरभागे' इति कर्मप्रवचनीयत्वात्तद्योगे द्वितीया । विभावयामो विचारयामः ॥ **वत्सेति** । अदृष्टपूर्वाः । पूर्वं कदाप्यदृष्टा इत्यर्थः ॥ नन्वित्यवधारणे ।

**लक्ष्मणः**—ननु तदेव तातमारुणिं गृध्रराजमभिसात्कृत्य निर्गतयोः पञ्चवट्याश्रमादावयोः कोऽपि कालो वर्तते । यतो दूरविच्छिन्नाः संप्रति जनस्थानसीमानः । यथा चेमान्यग्रतः प्रतिभयं जनयन्त्यरण्यानि तथा नूनमयमसौ जनस्थानपश्चिमः कुञ्जरवान्नाम दनुकबन्धाधिष्ठितो दण्डकारण्यभागः ।

**रामः**—द्रष्टव्य एव स दुरात्मा कान्तारमण्डूकः ।

(नेपथ्ये ।)

कः कोऽत्र भोः । परित्रायतामनेन दुरात्मना राक्षसकबन्धेनाकृष्यमाणामरण्ये स्त्रियम् ।

अहं हि श्रमणा नाम सिद्धा शबरतापसी ।
मतङ्गाश्रमवास्तव्या रामान्वेषिण्युपागता ॥ २७ ॥

**रामः**—वत्स लक्ष्मण, गच्छ गच्छ ।

**लक्ष्मणः**—एष गतोऽस्मि । (इति निष्क्रान्तः ।)

**रामः**—

प्रिये हा हा क्वासि प्रकिर मधुरां वाचमथ वा
पराभूतैरित्थं विलपनविनोदोऽप्यसुलभः ।

---

आरुणिमरुणस्य पुत्रम् । 'अत इञ्' इतीञ् । 'ततोऽहमरुणाज्जातः' इत्युक्तेरभिसात्कृत्य कृत्स्नमग्निमयं कृत्वा दाहेन संस्कृत्य । 'विभाषा साति कार्त्स्न्ये' इति सातिप्रत्ययः । पञ्चवट्याश्रमान्निर्गतयोरित्यन्वयः । कोऽपि कालो वर्तते । दीर्घकालो गतः । वर्तमानसामीप्ये लट् । तत्र हेतुमाह—**यत इति** । दूरं विच्छिन्नाः समाप्तिं गताः सीमानोऽवधिभूमयः । **यथा चेति** । प्रतिभयं भयं प्रतीति प्रतिभयम् । तथा तेन हेतुना नूनं तर्कयामि । 'नूनमवश्यं निश्चये' इत्यमरः । जनस्थानस्य पश्चिमः प्रतीच्यां दिशि स्थितः कुंजरवानिति तस्य संज्ञा । दनुकबन्धेन दनुपुत्रत्वादपमूर्धकलेवरत्वाच्च दनुकबन्धसंज्ञावता । उक्तं च श्रीरामायणे—'श्रिया विराजितं पुत्रं दनोस्त्वं विद्धि लक्ष्मण । इन्द्रकोपादिदं रूपं प्राप्तमेतद्रणाजिरे ॥' इति ॥ **द्रष्टव्य इति** । कान्तारमण्डूकः । वनान्निर्गमनाशक्त इत्यर्थः । मण्डूको हि जले एव तिष्ठति । तद्वदयं कान्तार एव तिष्ठतीति भावः । द्रष्टव्यः । विकृतवेषत्वाद्द्रष्टुमाशंसित इत्यर्थः ॥ कः कोऽत्र भोः । वियत इति शेषः । परित्रायताम् । भवानिति शेषः । **अहं हीति** । शबरी चासौ तापसी चेति विग्रहे कर्मधारयः । 'पुंवत्कर्मधारय—' इति पुंवद्भावः । मतङ्गाश्रमे वास्तव्या वासकर्त्री । सिद्धा सिद्धिमती ॥ २७ ॥ लक्ष्मणनिष्क्रमणेनाद्य व्यासङ्गान्तराभावाद्दुःखोद्रेकं रामस्याह—**प्रिये इति** । मधुरां प्रियाम् । 'स्वादुप्रियौ तु मधुरौ' इत्यमरः । वाचं प्रकिर । तत्तदर्थविवक्षया पुनःपुन-

अनिन्द्यः पौलस्त्यो व्रजति परिवादो मयि पुन-
र्यतो वैरे रूढे बहुगुणमनेन प्रतिकृतम् ॥ २८ ॥

(ततः प्रविशति लक्ष्मणः श्रमणा च।)

**लक्ष्मणः**—

तत्क्रूरदन्तकरपत्रनिकृत्तसत्त्व-
संघातनिःसरदसृक्स्नुतकूर्चगुच्छम् ।
वक्त्रं वपुश्च विकृताकृति दीर्घबाहो-
रार्येण राक्षसकुतूहलिना न दृष्टम् ॥ २९ ॥

आर्ये श्रमणे, अयमार्यः ।

**श्रमणा**—जयतु जयतु देवः ।

**रामः**—अथास्मत्पर्यन्वेषणे किं प्रयोजनम् ।

**श्रमणा**—शृणोषि रावणानुजं विभीषणम् ।

---

वेद । अथ वेति पूर्वोक्तस्य प्रतिषेधः । पराभूतैः परिभूतैः (कर्तृभिः) विलपनविनोदोऽपि 'प्रिये हा हा क्वासि' इत्यादिपरिदेवनेन दुःखलघूकरणमप्यसुलभो दुर्लभः पौलस्त्यो रावणोऽनिन्द्यो व्रजत्यहृतभार्यत्वेन निन्दानर्हो यथेच्छं चरति । मयि पुनः परिवादो हृतभार्यत्वेन निन्दा। स्थितेति शेषः। यतो यस्मादनेन रावणेन (कर्त्रा) वैरे विद्वेषे रूढे सति जाते सति। ताटकावधादिनेत्यर्थः। बहुगुणमभ्यधिकं यथा तथा प्रतिकृतम् । प्रतिक्रिया कृतेत्यर्थः । अत्र च विराधादिमुखेन पीडनाद्रावणवैरानुगुणं प्रतिकृतम् । सीताहरणेन द्विगुणं प्रतिकृतम् । जटायुवधेन तु तद्बहुगुणं प्रतिकृतमिति भावः । जटायुवधो हि सीताहरणादपि गरीयान् । तथा च रामवचनम्—'सीताहरणजं दुःखं न मे सौम्य तथागतम् । यथा विनाशे गृध्रस्य मत्कृते च परंतप ॥' इति । गुणशब्द आवृत्तिवचनः । अत्राधिक्यं बोधयति—'मौर्वीसूदवृकोदरतन्त्वावृत्तीन्द्रियेषु रूपादौ । सत्त्वादौ संध्यादौ त्यागादावप्रधानके च गुणः ॥' इति रत्नमाला ॥ २८ ॥ **तदिति** । क्रूराः कर्कशाः । 'त्रिषु क्रूराः कर्कशोष्णनृशंसक्रुद्धभीषणाः' इति रत्नमाला । दन्ता दशना एव करपत्राणि क्रकचानि । 'क्रकचोऽस्त्री करपत्रम्' इत्यमरः । तैर्निकृत्तानां छिन्नानां सत्त्वानां जन्तूनां संघातेभ्यो निःसरद्भिः प्रवहद्भिरसृग्भी रक्तैः स्नुत आर्द्रः कूर्चमेव भ्रूमध्यमेव । 'कूर्चमस्त्री भ्रुवोर्मध्यम्' इत्यमरः । गुच्छः स्तबको यस्य तत्तथोक्तम् । यद्वा कूर्चस्य भ्रूमध्यस्य गुच्छः स्तबको यस्य तत्तथोक्तम् । 'गुच्छस्तु स्तबके स्तम्बे हारभेदकलापयोः' इति रत्नमाला । दीर्घबाहोर्योजनबाहोः कबन्धस्य तद्वक्त्रं विकृताकृति वपुश्च राक्षसकुतूहलिना विकृतवेषराक्षसदर्शनेच्छावतार्येण न दृष्टम् । 'द्रष्टव्य एव स दुरात्मा' इत्युक्तवता त्वया न दृष्टमित्यनुशयो लक्ष्मणस्य सूच्यते ॥ २९ ॥ अथेति प्रश्ने । अस्मत्पर्यन्वेषणे

रामः—कस्त्वं न शृणोति ।

श्रमणा—स च यदैव दैवात्खरदूषणत्रिशिरसो विनिहतास्तदैव बन्धुभ्यः कस्यापि हेतोरवगृह्य सुग्रीवसख्यादृष्यमूके वर्तते । तस्यायमात्मसमर्पको लेखः । (इति लेखमर्पयति ।)

लक्ष्मणः—(गृहीत्वा वाचयति ।) स्वस्ति । रामदेवं प्रणम्य विभीषणो विज्ञापयति—

विशिष्टभागधेयानां द्वयी नः परमा गतिः ।
धर्मः प्रकृष्यमाणो वा गोप्ता धर्मस्य वा भवान् ॥ ३० ॥

---

मदन्वेषणे । रामान्वेषिण्युपागतेति हि तदुक्तिः ॥ शृणोषि । शृणोषि किलेत्यर्थः ॥ कस्त्वं न शृणोति । सर्वोऽपि लोकस्त्वं प्रसिद्धं शृणोत्येवेत्यर्थः । किंशब्दः क्षेपे ॥ स च विभीषणश्च । दैवाद्विधिवशात् । तदैव खरादिवधानन्तरमेव । कस्यापि हेतोः केनापि हेतुना । 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्' । 'षष्ठी हेतुप्रयोगे' इति षष्ठी । बन्धूनां स्वस्मिन्मनोविकारोत्प्रेक्षणेनेत्यर्थः । उक्तं हि माल्यवता—'प्राज्ञः खल्वसावुत्प्रेक्षितविकारः स्वयमेवापसर्पेत्' इति । बन्धुभ्योऽवगृह्य विश्लिष्य । अवग्रहो विश्लेषः । अपादाने पञ्चमी । सुग्रीवसख्याद्धेतोः । इदमपि माल्यवतोक्तम् 'बाल्यात्प्रभृति' इत्यादिना । तस्य विभीषणस्यात्मसमर्पकः स्वभरस्य त्वन्निर्ग्राह्यत्वाभिसंधिप्रकाशको लेखोऽयमित्युक्त्वा लेखमर्पयतीत्यर्थः । आत्मनः समर्पणमात्मसमर्पकः । भावे घञ् । तस्मादाचष्ट इत्यर्थे णिच् । कर्तरि ण्वुल् । अयमेव संध्यादिषु चरमः समाश्रयो नाम । यथोक्तम्—'अरिणा विध्यमानस्य बलवदाश्रयणं समाश्रयः' इति ॥ वाचयति पठति । स्वस्तीति । अस्त्विति शेषः । रामदेवम् । देवशब्दोऽयं परमपूज्यवाची । 'राजा भट्टारको देवः' इत्यमरः । विशिष्टेति । विशिष्टमतिशयितं भागधेयं भाग्यं येषां ते तथोक्तास्तेषाम् । 'भागरूपनामभ्यो धेयः' इति भाग्यवाचिनो भागशब्दाद्धेयप्रत्ययः । नोऽस्मादृशां द्वयी वक्ष्यमाणं द्वयम् । 'द्वित्रिभ्यां तयस्यायज्वा' इत्यजादेशस्य स्थानिवत्त्वात् 'टिड्ढा–' इत्यादिना द्वयशब्दान्ङीप् । परमा सर्वातिशायिनी गतिः । अभीष्टार्थसाधनं भवतीति शेषः । का सा द्वयीत्यत्राह—धर्म इति । प्रकृष्यमाणः सर्वातिशायी धर्मो वा । अनाघ्रातावद्यगन्धमलौकिकश्रेयःसाधनं वा । 'धर्मेण पापमपनुदति' इत्युपक्रम्य 'तस्माद्धर्मं परमं वदन्ति' इति श्रुतेरिति भावः । धर्मस्य गोप्ता पालकः स्वरूपकर्तृदेशकालपरिकरफलतासाधनभावादिभिः सह धर्मस्य सत्तानिर्वाहको भवान्वा सर्वज्ञः सर्वशक्तः सर्वेश्वरः कारुणिकः परब्रह्मभूतस्त्वं वा । भवतीति शेषः । वाशब्दोक्तोऽयं विकल्पो व्यवस्थितविकल्पः । तथाहि धर्मः प्रकृष्यमाणो वेति मीमांसकमर्यादा । गोप्ता धर्मस्य वा भवानिति त्रय्यन्तनिष्णातानां मर्यादा । इदं च 'धर्मं जैमिनिः' 'फलमत उपपत्तेः' इति ब्रह्ममीमांसासूत्रयोर्व्यक्तम् । किंच धर्मः प्रकृष्यमाणो वेति साधकानां मर्यादा । गोप्ता धर्मस्य वा

**रामः**—वत्स, ब्रूहि किं संदिश्यतामेवंवादिनः प्रियसुहृदो लङ्केश्वरस्य महाराजविभीषणस्य ।

**लक्ष्मणः**—यदा लङ्केश्वरः प्रियसुहृदित्युक्तमार्येण तत्किमवशिष्यते संदेशस्य ।

**रामः**—यथाह सौमित्रिः ।

**श्रमणा**—अनुगृहीतास्मि ।

**लक्ष्मणः**—आर्ये श्रमणे, अपि, विभीषणसंपर्कादस्ति काचिदार्यायाः प्रवृत्तिः ।

**श्रमणा**—वर्तमाने नास्ति । यत्तदा दुरात्मनापह्रियमाणायाः स्रस्तमनसूयानामाङ्कमुत्तरीयम्, तच्च तैर्गृहीतम् ।

**रामः**—हा प्रिये, महारण्यवासप्रियसखि, विदेहराजपुत्रि । (इति संवरणं नाटयति ।)

---

भवानिति शरणागतानां मर्यादा । तत्र गुणागुणपरीक्षायां तद्धेतोरेवास्तु तद्धेतुत्वमिति गोप्ता धर्मस्य वा भवानित्येतदेव विभीषणस्य सिद्धान्तः । प्रकृष्यमाण इति प्रपूर्वात्कर्षतेः कर्मकर्तरि यगात्मनेपदे ॥ ३० ॥ किं संदिश्यताम् । किं प्रतिवचनं प्रेष्यतामित्यर्थः ॥ **यदेति** । येन कारणेन । तत्तस्मात्संदेशस्य किमवशिष्यते । संदेशेषु मध्ये कः संदेशः कर्तव्यतया तिष्ठतीत्यर्थः । त्वं लङ्केश्वरोऽसि, मम प्रियसुहृदसीत्येष एव संदेशः फलित इत्यभिप्रायः ॥ **यथेति** । यथाह सौमित्रिः । तथास्त्विवति शेषः ॥ अनुगृहीतास्मि । विभीषणाय लङ्केश्वरोऽसीत्यादिसंदेशेन कृतप्रसादास्मि ॥ **अपि विभीषणेत्यादि** । विभीषणसंपर्काद्विभीषणसमागमादार्यायाः सीतायाः काचित्प्रवृत्तिः काचिद्वार्ता । 'वार्ता प्रवृत्तिर्वृत्तान्तः' इत्यमरः । अप्यस्ति । अपिः प्रश्ने । 'गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि' इत्यमरः ॥ **वर्तमान इति** । काले इति शेषः । संप्रतीत्यर्थः । **यदिति** । दुरात्मना दुर्बुद्धिना । रावणेनेति शेषः । अपह्रियमाणाया इत्यपादाने पञ्चमी । स्रस्तमधःपतितमनसूयादत्तत्वादनसूयानामचिह्नं यत्स्रस्तं तत्तैर्गृहीतमित्यन्वयः । लक्ष्मणस्य जिज्ञासोदयार्थं श्रमणया तैरिति सामान्येनोक्तम् ॥ **हेति** । महारण्यवासे प्रियसखीत्यर्थः । 'ये त्वया कीर्तिता दोषा वने वास्तव्यतां प्रति । गुणा इत्येव तान्मन्ये तव स्नेहपरिप्लुता ॥' इति हि तयोक्तम् । विदेहराजस्य पुत्रीति विग्रहः । 'आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी । आहुर्दुहितरम्' इत्यमरः । पुत्रशब्दात्स्त्रीत्वविवक्षायां शार्ङ्गरवादिगणपाठान्ङीन् । 'सूतोग्रराजभोजकुलमेरुभ्यो दुहितुः पुत्रड्वा वक्तव्यः' इति वार्तिकं व्यर्थमिति शाब्दिकाः । संवरणं मूर्च्छाम् ॥ तैरिति श्रमणया सामान्येनोक्ते लक्ष्मणो

**लक्ष्मणः**—आर्ये, केन वा कस्य वा हेतोस्तद्गृहीतम् ।

**श्रमणा**—ऋष्यमूके रामगुणपक्षपातात्सुग्रीवविभीषणहनूमत्प्रभृतिभिः ।

**रामः**—वत्स, द्रष्टव्या हि निष्कारणप्रियकारिणो भुवनमहनीयमहिमानस्ते महात्मानः । तद्वत्स, तस्याः संस्तुतमभिज्ञानं द्रष्टुमृष्यमूकमभिसंधाय तावद्गच्छावः ।

**श्रमणा**—इत इतस्तर्हि देवः ।

(सर्वे परिक्रामन्ति ।)

**लक्ष्मणः**—हनूमान्हनूमानिति महानयं वीरवादः । अत्रभवतो जातमात्रस्य सततपरिश्रान्तदेवासुराण्याश्चर्याणि श्रूयन्ते । अपि च किल ।

यद्वज्रलक्षणे वीर्यं यद्वायौ वा समुन्नतम् ।
यद्वालिनि महाबाहौ तच्च वीरे हनूमति ॥ ३१ ॥

---

विशेषं पृच्छति—**आर्ये केनेत्यादिना** । वयोधिकत्वात्तपोतिशयवत्त्वाच्चार्याशब्दः । केन कर्त्रा । कस्य हेतोः । केन हेतुना । 'षष्ठी हेतुप्रयोगे' इति षष्ठी । तदुत्तरीयं कुत्र गृहीतमित्यभिप्रेतम् । **ऋष्यमूकेति** । प्रतिवचनं ऋष्यमूक इत्युक्तिः । रामगुणेषु पूर्वोक्तेष्वाभिगामिकेषु रामस्य गुणेषु पक्षपातात्स्वारसिकप्रीत्या । 'पक्षः सहायगरुदन्तिकसाध्यभक्तिमित्रेषु चुल्लिविवरे नृपकुञ्जरे च । वृन्दे कचादुपरिमासदलौ च पक्षद्वारे बले च गजपार्श्वविरोधयोश्च ॥' इति रत्नमाला । पातो हि निम्ने सलिलस्येव स्वयमेव प्रवणता । कस्येत्यस्योत्तरं रामगुणपक्षपातादिति । 'गुणे हेतावस्त्रियाम्' इति हेतौ पञ्चमी । केनेत्यस्योत्तरं सुग्रीवेत्यादिकम् । अभेदैकत्वविवक्षया प्रश्नवाक्ये केनेत्येकवचनम् । प्रतिवचने तु सख्यविशेषविवक्षया बहुवचनम् ॥ **वत्सेति** । निष्कारणप्रियकारिणो मत्तः किंचित्फलाभिसंधिमन्तरैव मत्प्रियंकरा भुवनैर्लोकैः । 'मञ्चाः क्रोशन्ति' इतिवन्महनीयः पूजनीयो महिमा येषां ते तथोक्तास्ते सुग्रीवादयस्तस्याः सीताया संस्तुतमस्माभिश्चिरपरिचितम् । 'संस्तवः स्यात्परिचयः' इत्यमरः । 'अभिज्ञायतेऽनेनेत्यभिज्ञानमुत्तरीयमृष्यमूकमभिसंधायर्ष्यमूकमुद्दिश्य द्रष्टुं गच्छाव इत्यन्वयः ॥ **इत इति** । तर्हि ऋष्यमूकस्य गन्तव्यत्वे इत इत इति मार्गदर्शनम् । आगच्छत्विति शेषः ॥ वीराणां वादो वीरैरेव गौरवातिशयेन पुनःपुनः कीर्तनमत्रभवतः पूज्यस्य जात एव जातमात्रस्तस्य यौवनात्पूर्वमेवेत्यर्थः । सततपरिश्रान्ता भयातिशयेन संभ्रान्ता देवासुरा यैस्तथोक्तान्याश्चर्याण्यपूर्वकर्माणि । अपि च किं च किलेति प्रसिद्धौ । **यदिति** । वज्रलक्षणे देवेन्द्रे । अस्तीति शेषः । महाबाहौ वालिनि समुन्नतं यद्वीर्यमस्ति तच्चेति चकारेण वायुवालिवीर्ययोः समुच्चयः । विद्यत इति शेषः ।

**श्रमणा**—एवमीदृशो हेमगिरिवास्तव्यस्य तत्रभवतः प्लवङ्गपुंगवानीकवृद्धयूथपतेः केसरिणः क्षेत्रसंभवः सूनुराञ्जनेयो हनूमान्नाम । यस्य रेतोधा भगवान्मातरिश्वा तत्किं हनूमतैकेन ।

अम्भोधेर्नारिकेलीरसमिव चुलकैरुद्विलुम्पन्त्यपो ये
येषामुत्क्षेपहेलः शिखरिषु लिकुचोदुम्बरप्राय एव ।
ब्रह्मस्तम्बं निवासद्रुममिव रभसाद्विप्रकर्तुं क्षमा ये
तेषां कोट्योऽप्यसंख्याः सुतममरपतेर्वानराणां नमन्ति ॥ ३२ ॥

**रामः**—आर्ये, हन्त दक्षिणेनास्थिसंचयः सुमहान् । तत्किमेतत् ।

**श्रमणा**—लक्ष्मणेन योजनबाहोश्चितेयमभिसृष्टा ।

---

इत्येतत्प्रसिद्धमिति किलशब्दार्थः ॥ ३१ ॥ **एवमिति** । एवमुक्तप्रकारविशिष्ट ईदृश एतत्सदृशैरन्यैरपि प्रकारैर्विशिष्टो हेमगिरौ मेरौ वास्तव्यस्य वासं कर्तुस्तत्रभवतः पूज्यस्य प्लवङ्गपुंगवानां वानरश्रेष्ठानामनीकस्य सेनायाः । 'चक्रं चानीकमस्त्रियाम्' इत्यमरः । केसरिणः केसरिनाम्नः क्षेत्रसंभवः पत्न्यामन्येनोत्पादितः । 'क्षेत्रं पत्नीशरीरयोः' इत्यमरः । अञ्जनाया अपत्यमाञ्जनेयः । 'स्त्रीभ्यो ढक्' । अनेनाञ्जना केसरिणः पत्नीत्युक्तम् । हनूमान्नाम हनूमानिति नाम्ना विश्रुतः । मातर्याकाशे श्वयति वर्धत इति मातरिश्वा वायुर्यस्य हनूमतो रेतोधा रेतो धत्ते धारयतीति तथोक्तः । 'अन्येभ्योऽपि दृश्यते' इति कर्तरि क्विप् । दधातिरन्तर्भावितण्यर्थः । बीजप्रदः । पितेत्यर्थः । अनेन क्षेत्रसंभव इत्यत्राभिप्रेतोऽन्यो मातरिश्वेत्युक्तं भवति तद्विशिष्यकथनाद्धेतोर्व्यञ्जितम् । किं हनूमतैकेन । हनूमदेकसाध्यं न किंचिदपीत्यर्थः । अपि तु तादृशा असंख्याताः सन्तीत्यर्थः । तदाह—**अम्भोधेरिति** । ये वानराः अम्भोधेरपो जलानि नारिकेलीरसमिव नारिकेलशलादुस्थितसलिलमिव । पिप्पल्यादित्वान्नारिकेलशब्दाज्जातिविवक्षायां ङीष् । ततः फलरूपविकारप्रत्ययस्य 'हरीतक्यादिभ्यश्च' इति लुप् । लुपि युक्तवद्भावात्स्त्रीत्वम् । 'आस्वादनध्वनिसुधाम्बुरसाख्यधातुष्विष्टो रसः' इति रत्नमाला । चुलकैः प्रसृतिभिः । 'चुलकः प्रसृतौ भाण्डे' इति रत्नमाला । उद्विलुम्पन्ति नाशयन्ति 'लुप्लृ च्छेदने' 'शे मुचादीनाम्' इति नुम् । येषां वानराणां शिखरिषु पर्वतेषूत्क्षेप ऊर्ध्वोदञ्चनक्रियायां हेलोऽनादरः । 'हेडृ अनादरे' इत्यस्माद्भावे घञ् । डलयोरैक्यालंकारः । उत्क्षेपविषयानादर इत्यर्थः । लिकुचोदुम्बरप्रायो लिकुचफलोदुम्बरफलसदृशः । प्रायःशब्दोऽयं तुल्यार्थकः । 'प्रायो वयोमृत्युतुल्यबाहुल्यानशनेषु ना' इति रत्नमाला । एवकारस्तु लिकुचोदुम्बरप्रायतताया अम्भोधिब्रह्मस्तम्बविषयव्यापारेणार्थसिद्धत्वं बोधयति । ये ब्रह्मस्तम्बं ब्रह्माण्डं निवासद्रुममिव विप्रकर्तुं विकारयितुं धूननभञ्जनादिना विकृतं कर्तुं क्षमाः समर्थाः । भवन्तीति शेषः । तेषां वानराणामसंख्याः कोट्योऽप्यमरपतेः सुतं वालिनं नमन्ति । वन्दन्त इत्यर्थः ॥ ३२ ॥ **आर्ये इति** । दक्षिणेन दक्षिणतः । एनबन्तमिदम् । अस्थ्नां संचयः समूहः । हन्त-

**रामः**—साधु कृतम्।

**लक्ष्मणः**—आर्य, पश्य पश्य।

सौहित्यात्पृथवः क्वथन्ति रुधिरोत्सेकाश्चमत्कारिण-
छङ्कारोत्कटमुच्चरन्ति नलकास्त्वङ्मांसविस्रंसनात्।
उत्सर्पन्त्यथ मेदसां विलयनादुद्बुद्बुदा वीचय-
श्चित्रं चित्रमुदेति कोऽप्ययमितो दिव्यः श्मशानानलात्॥ ३३॥

(प्रविश्य।)

**दिव्यपुरुषः**—जयतु देवः।

दनुर्नाम श्रियः पुत्रः शापाद्राक्षसतां गतः।
इन्द्रास्त्रकृतकाबन्ध्यः पूतोऽस्मि भवदाश्रयात्॥ ३४॥

**रामः**—प्रियं नः प्रियं नः।

**दनुः**—माल्यवत्प्रयुक्तेन च मया युष्मदास्कन्दनाय दूषितमरण्यमा-

---

शब्दोऽनुकम्पायाम्। किमेतत्। कस्येदमित्यर्थः॥ योजनबाहोः कबन्धस्य। अभिसृष्टा निर्मिता॥ **सौहित्यादिति**। सुहितस्तृप्तः। 'सुहि तृप्त्यर्थे' इत्यस्मात्कर्तरि क्तः। तस्य भावः सौहित्यम्। गुणवचनत्वाद्भावे ष्यञ्। 'पर्याप्तमुपसंपन्नं तृप्तिः सौहित्यमुच्यते' इति हलायुधः। तस्मात्सत्त्वसंघातमांसभक्षणेन नित्यतृप्तत्वात्कबन्धस्येति भावः। पृथवो विपुला रुधिरोत्सेका रक्तप्रवाहाश्चमत्कारिणः सन्तो द्रष्टॄणां दर्शनकुतूहलहेतवः सन्तः। चमदिति रसार्थकमव्ययम्। क्वथन्ति निष्पच्यन्ते। 'क्वथे निष्पाके'। किंच नलकाः शङ्खास्थीनि। 'शङ्खास्थि नलकम्' इति हलायुधः। अर्धर्चादेराकृतिगणत्वात्पुंलिङ्गोऽपि। नलकशब्दस्त्वचां मांसानां च विस्रंसनादग्निस्पर्शेन बन्धविगलनाद्धेतोश्चमत्कारिणः सन्तश्छङ्कारेणोत्कटं यथा तथोच्चरन्ति। उपरिष्टाद्गच्छन्तीत्यर्थः। अथ विलयनादग्निसंयोगेन कार्त्स्न्येन द्रवीभावाद्धेतोरुद्बुद्बुदा अधिकबुद्बुदयुक्ता मेदसां वसानां वीचयः पङ्क्तयस्तरङ्गा वा। वीचिः कुन्तलवक्रत्वे स्वल्पे पङ्क्तितरङ्गयोः' इति रत्नमाला। उत्सर्पन्त्यूर्ध्वं गच्छन्ति। इतः श्मशानानलादेवंभूताच्चिताग्नेः। अपादाने पञ्चमी। कोऽप्यनिर्वाच्योऽयं दिव्यो देवसदृश उदेत्युत्तिष्ठति। चित्रं चित्रम्। समधिकमाश्चर्यमित्यर्थः। वीरशृङ्गारान्यतरप्रधानके नाटके रसान्तराणावप्यङ्गतयानुप्रवेशस्य वक्तव्यत्वाच्चिताग्न्यादिवर्णनं कविना कृतम्॥ ३३॥ **दनुरिति**। श्रियः श्रीनाम्न्या अप्सरसः पुत्रो दनुरिति पितृप्रयुक्तं नाम। इन्द्रास्त्रेण वज्रेण। 'अस्त्रमायुधचापयोः' इति रत्नमाला। कृतं काबन्ध्यं कबन्धत्वं यस्य स तथोक्तो भवदाश्रयाद्भवत्संबन्धात्पूतोऽस्मि शुद्धोऽस्मि॥ ३४॥ प्रियं न इत्यादराद्द्विरुक्तिः॥ **माल्यवत्प्रयुक्तेनेति**। माल्यवता रावणमातामहेन प्रयुक्तेन प्रेरितेन मयारण्यं युष्मदास्कन्दनाय युवयोराक्रमणाय दूषितमासीज्जीवहिंसादिदोषयोजितम-

सीत् । अलं वा कश्मलस्मरणेन । संप्रति युष्मत्प्रभावात्प्रादुर्भूतसहज-ज्योतिषोऽपरोक्षमिव मे वस्तु किंचित्प्रतिभाति । तच्च वः प्रतिविधा-नाय कृतमहोपकारेभ्यः कथ्यते ।

प्रार्थ्य माल्यवता वाली युष्मद्धाते नियुज्यते ।
तेनापि रावणे मैत्रीमनुरुध्याभ्युपेयते ॥ ३४ ॥

**रामः**—एष एव पन्थाश्चारित्रस्य ।

न तादृशः सुहृत्कार्ये माध्यस्थ्यमवलम्बते ।
ममाप्यस्मिन्महावीरे सोत्कण्ठमिव मानसम् ॥ ३५ ॥

**इतरे**—कान्यत्र रामदेवादमून्यक्षराणि ।

**रामः**—भद्र, कृतं सौजन्यम् । अधुना नन्दतु महाभागः स्वेषु लोकेषु ।

(दनुर्निष्क्रान्तः ।)

**लक्ष्मणः**—आर्ये, वालिरावणयोः किंनिबन्धना मैत्री ।

---

भूत् । **अलमिति** । वाशब्दः पूर्वोक्तार्थप्रतिषेधे । कश्मलस्य स्मरणेन प्रसक्तिमात्रेण मूर्च्छाहेतोः पूर्वोक्तस्य स्मरणेनालम् । फलं नास्तीत्यर्थः । 'गम्यमानापि क्रिया कारक-विभक्तीनां प्रयोजिका' इति स्मरणेन तृतीया । **संप्रतीति** । युष्मत्प्रभावाद्भवन्मा-हात्म्याद्धेतोः प्रादुर्भूतं प्रकाशितं सहजं स्वाभाविकं ज्योतिर्ज्ञानात्मकतेजो यस्य स तथोक्तस्तस्य मेऽपरोक्षमिव प्रत्यक्षमिव किंचिद्वस्तु प्रतिभाति कश्चिदर्थः प्रकाशते । तद्वस्तु कृतमहोपकारेभ्यो वो युष्मभ्यं प्रतिविधानाय प्रत्युपकाराय कथ्यते । मयेति शेषः । तदाह—**प्रार्थ्येत्यादिना** । माल्यवता रावणमन्त्रिणा वाली प्रार्थ्य,युष्मद्धाते युवयोर्वधे नियुज्यते प्रेर्यते । तेनापि वालिनापि रावणे मैत्रीमनुरुध्य रावणसख्यमु-द्दिश्याभ्युपेयतेऽङ्गीक्रियते । माल्यवन्नियोग इति शेषः । इतिशब्दोऽध्याहर्तव्यः । इति कथ्यत इत्यन्वयः ॥ ३५ ॥ **एष इति** । एष एव रावणमैत्र्यनुरोधेन माल्यवन्नि-योगाभ्युपगम एव चारित्रस्य वीराणां सद्वृत्तस्य पन्थाः । मार्ग इत्यर्थः । **न तादृश इति** । तादृशो महावीरो वाली सुहृत्कार्ये मित्रकार्ये माध्यस्थ्यमौदासीन्यं नावलम्बते नाश्रयति । महावीरेऽस्मिन्वालिनि ममापि मनः सोत्कण्ठमिव युद्धेच्छायुक्तमिव । भवतीति शेषः ॥ ३६ ॥ **इतरे** । लक्ष्मणश्रमणादिव्यपुरुषाः । रामदेवादन्यत्र क रामादन्यस्मिन्कस्मिन्पुरुषेऽमून्यक्षराणि 'न तादृशः' इत्यादि पूर्वश्लोकाक्षराणि स्युरिति शेषः ॥ सौजन्यं सुजनस्य कृतज्ञस्य कर्म प्रत्युपकारकरणम् । 'गुणवचन-' इत्यादिना कर्मणि ष्यञ् । कृतमनुष्ठितम् । अधुनाद्य महाभागो भाग्यातिशययुक्तः स्वेषु लोकेषु नन्दतु समृद्धिं प्राप्नोतु । 'टुनदि समृद्धौ' कामचारे लोट् । त्वं स्वीयलोकान्भुङ्क्ष्वे-

**श्रमणा**—

कैलासे तुलिते जिते त्रिभुवने दृप्यन्तमभ्युद्यतं
 दोर्युद्धाय दशास्यमिन्द्रतनयः प्रक्षिप्य कक्षान्तरे ।
सांध्यं कर्म समाप्य सप्तसु नदीनाथेष्वथो मुक्तवा-
 नुन्मुक्ताय नताय नाथितवते सख्यं च तस्मै ददौ ॥ ३७ ॥

**लक्ष्मणः**—दुरात्मन् पौलस्त्यकुलपांसन, एष ते क्षत्रियपरितापिनो वीर्यस्योत्कर्षः ।

**रामः**—एवमुत्तरोत्तरवीरभावश्चित्रीयते वीरलोकः ।

**लक्ष्मणः**—आर्ये, पुरत एष शुभ्रो गिरिः किंनामधेयः ।

**श्रमणा**—

 नायं गिरिर्यशोराशिरिव वीरस्य वालिनः ।
 एष दुन्दुभिदैत्येन्द्रमहिषस्यास्थिसंचयः ॥ ३८ ॥

---

त्यर्थः ॥ आर्ये श्रमणे, किंनिबन्धना किंकारणिका मैत्री सख्यम् ॥ **कैलास इति ।** कैलासे रुद्रावासे कैलासपर्वते तुलिते सत्युत्क्षिप्ते सति । 'तुल उन्माने' संज्ञापूर्वकविधेरनित्यत्वाद्गुणाभावः । यद्वा 'अतुलोपमाभ्याम्' इति तुलाशब्दनिपातनाद्गुणाभावः । तुला च तोलनमुपमा च । तत्र तोलवद्वाचिनस्तुलावच्छब्दात् 'तत्करोति' इत्यर्थे णिचि कर्मणि क्ते च तुलिते तुलावति कृते तोलनवति कृते उत्क्षिप्ते सतीति पर्यवस्यति । अथवा 'अनित्यण्यन्ताश्चुरादयः' इति णिजभावे कर्मणि क्तः । त्रयाणां भुवनानां समाहारस्त्रिभुवनम् । पात्रादित्वास्त्रीत्वाभावः । पातालभूस्वर्गेष्वित्यर्थः । जिते सति दृप्यन्तं दर्पयुक्तं दोर्युद्धाय बाहुयुद्धायाभ्युद्यतं प्रयतमानं दशास्यं रावणमिन्द्रतनयो वाली कक्षान्तरे बाहुमूलविवरे । 'कक्षो गुल्मे तृणे बाहुमूले स्त्री तूत्तरक्रमे' इति रत्नमाला । प्रक्षिप्य निवेश्य सप्तसु नदीनाथेषु समुद्रेषु सांध्यं संध्याभवम् । संधिवेलादित्वादण् । कर्मार्घ्यदानादिकं समाप्य निर्वर्त्याथो अनन्तरम् । 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः । मुक्तवान्विसृष्टवान् । इन्द्रतनय इत्यनुषङ्गः । इन्द्रतनयो वाली उन्मुक्ताय स्वेन विसृष्टाय नताय नम्राय नाथितवते याचितवते । 'नाथृ याचने' इत्यादिर्धातुपाठः । तस्मै दशास्याय सख्यं सखित्वम् । 'सख्युर्यः' इति भावे यः । ददौ दत्तवान् । अतो रावणयाच्ञानिबन्धना वालिरावणयोर्मैत्रीत्युत्तरं फलितम् ॥ ३७ ॥ **दुरात्मन्निति ।** पौलस्त्यकुलपांसन पौलस्त्यकुलदूषण क्षत्रियपरितापिनस्तेऽनरण्यमरुत्तादिक्षत्रियसंतापकारिणस्तव वीर्यस्योत्कर्षोऽतिशय एष वालिन्यसत्कल्पः । जात इति शेषः ॥ एवमुक्तप्रकारेणोत्तरादतिशयितादुत्तरोऽतिशयितो वीरभावो वीरत्वं यस्य स तथोक्तो वीरलोको वीरसमूहश्चित्रीयते । विस्मयं जनयतीत्यर्थः । 'नमोवरिवश्चित्रङः क्यच्' इति करणार्थे क्यच् ॥ **आर्ये इति ।** शुभ्रो धवलः ॥ **नायमिति ।** अयं शुभ्रः पदार्थो न गिरिः किंतु वीरस्य वालिनो यशो-

**लक्ष्मणः**—उपरुद्धान्यनेन वर्त्मानि। तत्परिहृत्य गच्छामः।

**रामः**—नन्वेहि। (पादाङ्गुष्ठेन क्षिपति।)

**श्रमणा**—आश्चर्यमाश्चर्यम्।

यत्संक्रन्दननन्दनः कपिवृषा निर्मथ्य दोःस्तम्भयो-
व्यापारेण निरास्थदस्थिगिरिवद्देवद्विषो दुन्दुभेः।
तत्कङ्कालमकालपाण्डुरघनप्रस्पर्धि रुन्धन्नभः
पादाङ्गुष्ठविवर्तनादयमितो निर्विन्ध्यमाविध्यति॥ ३९॥

**लक्ष्मणः**—प्रशान्तगम्भीरनीलविपुलश्रीररण्यगिरिभूमिः प्रसज्यते।

**श्रमणा**—ऋष्यमूकपम्पापर्यन्तभूमयः खल्वेताः। तथा चाग्रतो

---

राशिरिव यशोराशिरिति संभावनीय एष शुभ्रः पदार्थो दुन्दुभिदैत्येन्द्रमहिषस्य दुन्दुभिनाम्नोऽसुरस्य महिषाकृतित्वान्महिषस्य वालिना हतस्यास्थिसंचयः। अस्थिसमूह इत्यर्थः। अत्रापह्नुतिरुत्प्रेक्षा चालंकारः॥ ३८॥ अनेनास्थिसंचयेनोपरुद्धानि निरुद्धानि वर्त्मानि मार्गाः। तत्तस्मान्मार्गोपरोधात्परिहृत्य वर्जयित्वा। इममिति शेषः॥ नन्विवत्यामन्त्रणे। क्षिपति निरस्यति॥ **यदिति**। संक्रन्दननन्दन इन्द्रात्मजः कपिवृषा कपीन्द्रः। 'वासवो वृत्रहा वृषा' इत्यमरः। देवद्विषोऽसुरस्य दुन्दुभेर्यदस्थि कर्म। दोःस्तम्भयोः स्तम्भसदृशयोर्बाह्वोर्व्यापारेण प्रयत्नपूर्विकया क्रियया गिरिवन्निर्मथ्य' गिरिणा तुल्यं प्रतिहत्य। 'मन्थ विलोडने'। निरास्थन्निरस्तवान्। 'असु क्षेपणे' पुषादित्वादङ्। 'अस्यतेस्थुक्' इति थुगागमः। अयं राजपुत्रो रामो नभो रुन्धदावृत्य तिष्ठदकाले वर्षाकाले शरदादौ पाण्डुरेण धवलेन घनेन मेघेन प्रस्पर्धि संघर्षयुक्तं तदधिकम्। धवलोन्नतविशालमित्यर्थः। तत्कङ्कालं शरीरास्थि। कर्म। 'स्याच्छरीरास्थि कङ्कालम्' इत्यमरः। पादस्य। न तु बाहुस्तम्भयोरित्यर्थः। अङ्गुष्ठस्य। न तु पादस्येत्यर्थः। विवर्तनाद्यादृच्छिकस्पन्दनात्। न तु प्रयत्नपुरःसरव्यापारादित्यर्थः। इतोऽस्माद्देशान्निर्विन्ध्यं विन्ध्यान्निष्क्रान्तं यथा तथा। 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासः। यद्वा विन्ध्यस्याभावो निर्विन्ध्यम्। अर्थाभावेऽव्ययीभावः। 'तृतीयासप्तम्योर्बहुलम्' इति सप्तम्या अम्भावः। विन्ध्याभावदेश इत्यर्थः। न तु विन्ध्यान्तरेवेति भावः। आविध्यति निरस्यति। 'व्यध ताडने' इति दैवादिकोऽयमाङ्पूर्वकः। 'ग्रहिज्या-' इत्यादिना संप्रसारणम्। 'आविद्धौ कुटिलक्षिप्तौ' इति रत्नमाला। अतो वालिनः शतगुणबलो राम इत्याश्चर्यातिशय इत्यर्थः॥ ३९॥ **प्रशान्तेति**। प्रशान्ता गम्भीराक्षोभ्या नीला विपुला च श्रीः शोभा यस्याः सा तथोक्ता अरण्यगिर्योः संबन्धिनी भूमिः प्रसज्यते प्रसक्ता भवति संनिहिता भवति। प्रपूर्वकोऽयं सजतिः समीपगमनार्थः। अतः कर्मणि यगात्मनेपदे। अस्माभिरिति शेषः॥ ऋष्यमूकपम्पयोः पर्यन्तभूमयः समीपदेशाः। अग्रतः पुरतो मतङ्गाश्रमपदं मतङ्गाश्रम-

मतङ्गाश्रमपदम् । यत्र चिरशून्येऽपि संनिहितसोमचमसादिविविधपात्रपरिकर आस्तीर्णबर्हिरिध्मवानाज्यगन्धिरद्यापि भगवान्वैश्वानरः समिध्यते ।

**रामः**—अचिन्तनीयार्थास्तपसां विशेषाः ।

**श्रमणा**—देव, पश्य ।

इह समदशकुन्ताक्रान्तवानीरमुक्त-
प्रसवसुरभिशीतस्वच्छतोया वहन्ति ।
फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलनमुखरभूरिस्रोतसो निर्झरिण्यः ॥ ४० ॥

अपि च ।

दधति कुहरभाजामत्र भल्लूकयूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि ।

---

स्थानम् । **यत्रेति** । चिरशून्येऽपि बहोः कालात्प्राणिभिः शून्येऽपि यत्राश्रमपदे संनिहिताः सोमचमसाः सोमभक्षणपात्रविशेषा आदयो येषां तानि तथोक्तानि विविधानि ग्रहध्रुवोपभृज्जुहूभेदेन नानाविधानि पात्राण्येव परिकरा उपकरणानि यस्य स तथोक्त आस्तीर्णबर्हिः परिस्तरणीकृतसंस्कृतकुशः । इध्मवान्समिद्वान् । 'इध्ममेधः समित्स्त्रियाम्' इत्यमरः । आज्यस्य गन्धो लेशो यस्मिन्स तथोक्तः । 'गन्धो गन्धक आमोदे लेशे संबन्धगर्वयोः' इति विश्वः । गन्धशब्दान्तस्य बहुव्रीहेः 'अल्पाख्यायाम्' इत्यनेन समासान्त इप्रत्ययः । भगवान्पूज्यो वैश्वानरोऽग्निरद्यापि समिध्यते दीप्तो भवति । अन्तर्भावितण्यर्थात् 'ञिइन्धी दीप्तौ' इत्यस्मात्कर्मकर्तरि यगात्मनेपदे ॥ अचिन्तनीयार्था अतर्क्यप्रयोजनास्तपसां विशेषा भेदा अतिशया वा ॥ **इहेति** । समदैर्हर्षयुक्तैः । 'गजदानं गर्वहर्षरेतोमृगमदा मदाः' इति रत्नमाला । शकुन्तैः पक्षिभिराक्रान्तेभ्य आरूढेभ्यो वानीरेभ्यो वञ्जुलेभ्यः । 'अथ वेतसे । रथाभ्रपुष्पविदुलशीतवानीरवञ्जुलाः' इत्यमरः । मुक्तैर्विश्लिष्टैः प्रसवैः पुष्पैः । 'स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने' इत्यमरः । सुरभीणि सुगन्धीनि । 'सुरभिस्तु गवि स्त्रियाम् । वसन्तचैत्रयोः पुंसि त्रिषु सौम्यसुगन्धिनोः' इति रत्नमाला । शीतानि स्वच्छान्यत्यन्तनिर्मलानि तोयानि यासां तास्तथोक्ताः । फलभरपरिणामेन हेतुना श्यामेषु जम्बूनिकुञ्जेषु स्खलनेन संघट्टनेन मुखराणि सशब्दानि भूरीणि बहूनि स्रोतांसि प्रवाहा यासां तास्तथोक्ताः । 'स्रोतोऽम्बुनिर्गमद्वारे प्रवाहेन्द्रिययोर्जले' इति रत्नमाला । निर्झरिण्यो नद्यः । 'कूलंकषा निर्झरिणी' इत्यमरः । इह वहन्ति प्रवहन्ति ॥ ४० ॥ **दधतीति** । अत्रास्मिन्प्रदेशेऽनुरसितेन संवृतदेशवत्कांस्यध्वनिवदनुरणनेन । 'रसितं स्तनिते ध्वाने' इति रत्नमाला । गुरूणि प्रचुराणि कुहरभाजां 'गुहावर्ति-

शिशिरकटुकषायः स्त्यायते सल्लकीना-
मिभदलितविशीर्णग्रन्थिनिष्यन्दगन्धः ॥ ४१ ॥

**लक्ष्मणः**—किमभित एव प्रवृत्तपौरस्त्यमारुतवितन्यमानकदम्बानि काननानि संगलितबाष्पपटलया दृशा परिक्षिप्य धनुरवष्टम्भधीरधारितशरीरेणार्येण संप्रति स्थीयते।

**रामः**—वत्स, किं न पश्यसि।

स्थितमुपनतजृम्भारम्भबिम्बैः कदम्बैः
कृतमतिकलकण्ठैस्ताण्डवं नीलकण्ठैः।

---

नाम्। 'कुहरं गह्वरे छिद्रे' इति रत्नमाला। भल्लूकयूनां तरुणानामृक्षाणाम्। 'ऋक्षाच्छभल्लभल्लूकाः' इत्यमरः। अम्बूकृतानि सनिष्ठीवनशब्दाः स्त्यानं संघातभावं दधति धारयन्ति। बहिर्निःसरणविलम्बादिति भावः। शिशिरकटुकषायः। खञ्जकुब्जादिवत्समासः। सल्लकीनां गजभक्ष्यवृक्षविशेषाणाम्। '—गजभक्ष्या तु सुवहा सुरभी रसा। महेरुणा कुन्दरुकी सल्लकी ह्लादनीति च ॥' इत्यमरः। इभैर्दलितानां भग्नानां विशीर्णानां वायुना विशकलितानां ग्रन्थीनां पर्वणाम्। 'ग्रन्थिः पर्वगदान्तरे' इति रत्नमाला। निष्यन्दस्य स्वरसद्रव्यस्य गन्धः स्त्यायते संघातभावं भजति। मूर्तद्रव्ययोग्यायाः संघातभावभजनक्रियाया अमूर्तेन गुणेन गन्धेन करणवर्णनात् 'कर्तरि कर्मव्यतिहारे' इत्यात्मनेपदम्। अन्ययोग्यक्रियाया अन्येन करणं हि कर्मव्यतीहारः। अतिशयोक्तिरलंकारः ॥ ४१ ॥ **किमित्यादि**। पौरस्त्यमारुतेन पुरोवातेन। 'दक्षिणापश्चात्पुरसस्त्यक्' इति पुरःशब्दात्त्यक्प्रत्ययः। वितन्यमानानि विकासितानि कदम्बानि कदम्बपुष्पाणि येषु तानि तथोक्तानि। कदम्बशब्दात् 'पुष्पमूलेषु बहुलम्' इति विकारप्रत्ययस्य लुक्। संगलितं सम्यग्गलितं बाष्पपटलमश्रुसमूहो यस्याः सा तथोक्ता तथा परिक्षिप्य समन्ततो दृष्ट्वा धनुरवष्टम्भेन धनुरवलम्बनेन धीरं धैर्ययुक्तं यथा तथा धारितं शरीरं येनेति विग्रहः। किं स्थीयते किमर्थं निर्व्यापारेण भूयते ॥ **स्थितमिति**। उपनतं प्राप्तं जृम्भारम्भस्य विकासप्रादुर्भावस्य। 'जृम्भस्तु जृम्भणे। त्रिषु ना तु विकासे स्यात्' इति रत्नमाला। बिम्बं चिह्नं येषां तानि तथोक्तानि तैः। 'प्रतिबिम्बे तत्प्रकृतौ प्रतिकृत्यां च मण्डले। लाञ्छनेऽपि च बिम्बोऽस्त्री' इति रत्नमाला। कदम्बैः कदम्बवृक्षैः कर्तृभिः स्थितं तस्थे। भावे क्तः। अतिशयितः कलोऽव्यक्तमधुरध्वनिर्येषु तथोक्ताः कण्ठा येषां तथोक्तैर्नीलकण्ठैर्मयूरैस्ताण्डवं नाट्यं कृतम्। यद्वातिकलकण्ठैः प्रकृष्टकोकिलयुक्तैर्नीलकण्ठैर्मयूरैः। कोकिलगानानुसारिभिर्मयूरैर्नृत्यत इत्यर्थः। 'प्रकर्षे लङ्घनेऽप्यति' इत्यमरः। विघटमानानि विकसन्ति प्रौढानि बृहन्ति तापिञ्छानि तमालकुसुमानीव नीलः। 'उपमानानि सामान्यवचनैः' इति समासः। 'कालस्कन्धस्तमालः स्यात्तापिञ्छोऽपि' इत्यमरः। अद्रेः शिखरं श्रयति भजति। अतो वर्षागमो विह्वलयतीति भावः। अत्र कदम्बकान-

अपि च विघटमानप्रौढतापिञ्छनीलः

श्रयति शिखरमद्रेर्नूतनस्तोयवाहः ॥ ४२ ॥

**लक्ष्मणः**—(स्वगतम् ।) अपि नामार्यः केनचिद्रसान्तरेण विक्षिप्यते ।

(नेपथ्ये ।)

मातामह मातामह, प्रतिनिवर्तस्व ।

त्वन्नियोगादयुक्तोऽपि वधः साधोः करिष्यते ।

पूज्योऽसि ननु मित्रस्य यो गुरुर्गुरुरेव सः ॥ ४३ ॥

**लक्ष्मणः**—आर्ये, कोऽयम् ।

**श्रमणा**—देव, पश्य पश्य ।

बिभ्राणश्चारुचामीकरकमलमयं दाम दत्तं मघोना

पिङ्गेनाङ्गेन संध्याच्छुरित इव महानम्बुवाहस्तडित्वान् ।

उत्पाताविद्धमूर्तेर्दधदुपरि गिरेर्गैरिकाङ्कस्य लक्ष्मी-

मन्तः सीमन्तरेखामिव वियति जवादिन्द्रसूनुस्तनोति ॥ ४४ ॥

---

नादीन्युद्दीपकानि विरहात्मको विप्रलम्भशृङ्गारः । तदुक्तम्—'संभोगो विप्रलम्भश्च शृङ्गारो द्विविधो मतः । संयुक्तयोस्तु संयोगो विप्रलम्भो वियुक्तयोः ॥' इति । मलयानिलचन्द्राद्यास्तटस्थाः परिकीर्तिताः' इति ॥ ४२ ॥ तदेतदवलोक्य लक्ष्मणस्यानुसंधानमुच्यते—**अपि नामेत्यादि** । रसान्तरेण प्रकृताद्विप्रलम्भशृङ्गाररसादन्येन वीररसादिनापि विक्षिप्यते व्यासक्तः क्रियते । विक्षेपो हि मनसोऽन्यथाप्रवृत्तिः ॥ **त्वन्नियोगादिति** । त्वन्नियोगात्त्वदाज्ञया साधोर्न्यायादनपेतस्य रामस्य । कुत इत्यत्राह—ननु पूज्योऽसीति । तदपि कुत इत्यत्राह—मित्रस्य गुरुरिति । यो मित्रस्य गुरुर्मातामहः स गुरुरेव । ममापीति शेषः ॥ इदं वालिनो वाक्यम् ॥ ४३ ॥ **बिभ्राण इति** । मघोनेन्द्रेण दत्तं चारुचामीकरकमलमयं हेमपद्ममयम् । 'चामीकरं जातरूपम्' इत्यमरः । 'नित्यं वृद्धशरादिभ्यः' इति विकारार्थे मयट् । दाम मालाम् । 'न पुंसि दाम संदानम्' इत्यमरः । बिभ्राणो दधानः । पिङ्गेन पिङ्गलेन । 'पिङ्गलः पिङ्गपिशङ्गौ' इत्यमरः । अङ्गेनोपलक्षितोऽत एव तडित्वान्विद्युत्वान्संध्यया संध्यारागेण छुरितो रूषितो महानम्बुवाह इव स्थितः कनकदामपिशङ्गाङ्गयोस्तडित्संध्यारागयोश्च बिम्बप्रतिबिम्बभावेनैकीभावः । किं चोत्पातेनाभ्युत्पातेनाविद्धमूर्तेरावृतशरीरस्य । 'आविद्धौ कुटिलक्षिप्तौ' इति रत्नमाला । गैरिकाङ्कस्य धातुविशेषभूषितस्य । 'स्वर्णे धातौ च गैरिकम्', 'अङ्को नाटकविच्छेदे संख्यायां युधि भूषणे' इति च रत्नमाला । गिरेर्लक्ष्मीं श्रियमुपरि दधद्वहन् । अत्राप्युत्पाताविद्धमूर्तित्वपिङ्गाङ्गत्वयोः कनकदामगैरिकयोश्च बिम्बप्रतिबिम्बभावः । गगनचरत्वात्प्रथमदृष्टान्तः, स्थिरत्वाद्वितीय

लक्ष्मणः—आर्य, आर्य, दिष्ट्या प्राप्तः स वीरगोष्ठीविनोदप्रदानप्रियसुहृन्माघवतः ।

रामः—(स्वगतम् ।) महावीरः सः ।

(ततः प्रविशति वाली ।)

वाली—

लोकालोकालवालस्खलनपरिपतत्सप्तमाम्भोधिपूरं
विश्लिष्यत्पर्वकल्पत्रिभुवनमखिलोत्खातपातालमूलम् ।
पर्यस्तादित्यचन्द्रस्तबकमवपतद्भूरिताराप्रसूनं
ब्रह्मस्तम्बं धुनीयामिह तु मम विधावस्ति तीव्रो विषादः ॥४५॥

---

द्वितीयदृष्टान्तः । एवंभूत इन्द्रसूनुर्वाली जवाद्वेगाद्वियति नभस्यन्तर्मध्ये सीमन्तरेखं केशपाशरेखाम् । 'रेखा तु श्रेणिरेखयोः' इति रत्नमाला । तनोतीव करोतीव । अत्रोपमानिदर्शनोत्प्रेक्षाणां संकरः ॥ ४४ ॥ दिष्ट्येत्यानन्दे । स प्रसिद्धो वीराणां गोष्ठ्याः सभायाः । 'सभासंलापयोर्गोष्ठी' इति रत्नमाला । विनोदे रसोत्पादकः सङ्ग्रामस्तस्य प्रदानेन प्रियसुहृदिष्टः सखा माघवतो मघवत इन्द्रस्य पुत्रः । 'तस्यापत्यम्' इत्यण् । वाली प्राप्तः । आगत इत्यर्थः ॥ लोकालोकेत्यादि । अहं ब्रह्मस्तम्बं गुल्मसदृशं ब्रह्माण्डं कर्म । 'स्तम्बो गुल्मेऽप्यशाखेऽद्रौ' इति रत्नमाला । लोकालोक एव चक्रवालपर्वत एव । 'लोकालोकश्चक्रवालः' इत्यमरः । आलवालं जलाधारविशेषः । 'स्यादालवालमावालमावापः' इत्यमरः । तस्य स्खलनेन संचलनेन परिपततः सप्तमाम्भोधेः पूराः प्रवाहा यस्मिन्कर्मणि तद्यथा भवति तथा । किंच विश्लिष्यन्ति शिथिलीभवन्ति पर्वाणि ग्रन्थयो यस्मिन्कर्मणि तत्तथोक्तम् । 'पर्व ग्रन्थौ पञ्चदश्यामुत्सवे विषुवादिके' इति रत्नमाला । ईषदूनं विश्लिष्यत्पर्व विश्लिष्यत्पर्वकल्पम् । 'ईषदसमाप्तौ कल्पप्' इत्यादिना कल्पप्प्रत्ययः । शिथिलग्रन्थिप्रायमित्यर्थः । तथाविधं त्रिभुवनं यस्मिन्कर्मणि तत्तथोक्तम् । किंचाखिलान्युत्खातान्युत्पाटितानि पातालस्य मूलान्येव मूलानि यस्मिन्कर्मणि तथोक्तम् । किंच पर्यस्तौ परितो निरस्तावादित्यचन्द्रावेव स्तबकौ गुच्छौ यस्मिन्कर्मणि तत्तथोक्तम् । किंचावपतन्त्यधः पतन्ति भूरीणि बहूनि । 'भूरि स्वर्णे बहौ त्रिषु' इति रत्नमाला । तारा एव नक्षत्राण्येव प्रसूतानि पुष्पाणि यस्मिन्कर्मणि तत्तथोक्तम् । 'तारा स्यात्सुग्रीवगुरुयोषितोः । कनीनिकर्क्षयोः' इति रत्नमाला । धुनीयां कम्पयितुं शक्नोमि । 'शकि लिङ्' 'धूञ् कम्पने' क्र्यादिः 'कुडिकम्प्योर्नलोपश्च' इति सूत्रेणावगतं कम्पिपदप्रवृत्तिनिमित्तं कम्पयितृत्वम् । मम तु ब्रह्माण्डमविषयं भवेदिति भावः । किंत्विह विधौ माल्यवन्नियुक्ते कार्ये रामद्रोहरूपे तीव्रः क्रूरो विषादः खेदो ममास्ति । रामस्य न्याय्यवृत्तत्वादिति भावः । अत्र ब्रह्माण्डे गुल्मत्वाध्यवसायाद्रूपकातिशयोक्तिः । तदङ्गानि तु लोकालोकालवालादीनि रूपकाणीति संकरः

एवं नामायुक्तमनुरुध्यमानाः पुमांसो महत्ययुक्तगह्वरे निपात्यन्ते । यदनेन माल्यवता पौलस्त्यमैत्रीप्रतिश्रवमनुसार्य तत्रभवतो रघूद्वहस्य निधने नियुक्तोऽस्मि । अहो ग्रहः । प्रातरारभ्य मामनुबध्नन्किष्किन्धायाः प्रस्थाप्य प्रतिनिवृत्तः । कष्टं भोः, कष्टम् ।

दौरात्म्यादरिभिर्निजार्जवशुचौ मायाविभिर्वञ्चिते
धर्मात्मन्यतिथौ निरागसि जगत्पूज्ये गृहानागते ।
एतस्मिन्नुचितं न नाम विहितं वाचापि नावेदितं
पापं प्रत्युत दारुणं व्यवसितं सख्यं किमेतादृशम्[1] ॥ ४६ ॥

---

॥ ४५ ॥ **एवमिति** । अयुक्तमनुरुध्यमाना अन्याय्यं कार्यं कामयमानाः । अयुक्तगह्वरेऽन्याय्यकार्य एव गह्वरे देवखातबिले निपात्यन्ते । कर्मकर्तरि यगात्मनेपदे । स्वयमेव पतन्तीत्यर्थः । यद्यस्मात्पौलस्त्यमैत्रीप्रतिश्रवं रावणाय सख्यप्रतिज्ञानम् । 'अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः' इत्यमरः । अनुसार्य स्मारयित्वा रघूद्वहस्य रामस्य निधने वधे । अहो ग्रहो विस्मयनीयो माल्यवतः स्वकार्यनिर्बन्धः । 'निर्बन्धोपरागार्कादयो ग्रहाः' इत्यमरः । प्रातरारभ्य प्रातःकालादारभ्य मामनुबध्नन्ननुनयन् । किष्किन्धाया इत्यपादाने पञ्चमी । **दौरात्म्यादिति** । निजेन स्वीयेनाविनाशिना वा । 'निजौ स्वीयाविनाशिनौ' इति रत्नमाला । आर्जवेनाकुटिलत्वेन शुचौ शुद्धेऽनुपहते वा । 'शुचिर्ना शुक्रशृङ्गारचन्द्राषाढहराग्निषु । उपधाशुद्धसचिवे ग्रीष्मे श्वेतगुणे रवौ ॥ अयं तु श्वेतगुणिनि शुद्धेऽनुपहते त्रिषु ॥' इति रत्नमाला । मायाविभिर्वञ्चनाप्रचुरैररिभिः कर्तृभिः । दौरात्म्यात्सहजशाठ्यलक्षणदुःस्वभावाद्वञ्चिते धर्मात्मनि धर्मस्वरूपे । 'रामो विग्रहवान्धर्मः' इत्युक्तम् । अतिथौ । अतिथिलक्षणमापस्तम्बेनोक्तम्—'अग्निरिव ज्वलन्नतिथिरभ्यागच्छति धर्मेण वेदानाम्' इत्यारभ्य 'धर्मपुरस्कारो नान्यप्रयोजनो यः सोऽतिथिर्भवति तस्य पूजायां शान्तिः स्वर्गश्च' इति । निरागसि निर्दोषे निरपराधे वा । 'आगो मन्तौ च किल्बिषे' इति रत्नमाला । जगतां पूज्येऽवश्यपूजनीये पूर्वोक्तातिथिपूजनस्योद्देश्यभूते । तथा च स्मृतिः—'गोदोहकालं काङ्क्षेत गृहद्वारि समागतः । अतिथिर्विष्णुमुद्दिश्य पूजनीयो विशेषतः ॥' इति । गृहानागतेऽस्माभिर्गन्तव्येऽपि स्वयमेव गृहं प्राप्ते । यद्यपि 'अतिथिर्ना गृहागते' इत्यमरोक्त्या गृहागतत्वमप्यतिथिशब्दार्थान्तर्गतं तथापि श्रोत्रियत्वाद्यतिथिलक्षणानाक्रान्तोऽपि गृहं गत एव पूजनीय इति बोधयितुं पृथगुक्तिः । एतस्मिन्रामे उचितं पूर्वोक्तार्जवादिगुणानुरूपमर्हणं न विहितं नाम न कृतं नाम । नामेति कुत्सायाम् । अस्मिन्नुचितविधानाभावः कुत्सित इत्यर्थः । उचितमित्यनेन 'तस्याभिमुखोऽभ्यागम्य तस्यासनमाहारयेत्तस्य पादौ प्रक्षालयेत्तस्योदकमाहारयेत्सांत्व-

---

१. एतावत्येव भवभूतेः सूक्तिः । इतःपरं तु सुब्रह्मण्यनाम्नः कस्यचित्कवेर्वच इति

अवश्यं च श्रेयस्विना मया भवितव्यम् ।

यशःसंतानो मे विशदशरदिन्दुद्युतिनिभ-
प्रकाशो विश्वान्तर्विलसति दिगन्ते विसृमरः ।
त्रयाणां लोकानामधिपतिरजय्यो जनयिता
ततः श्रेयोमूलं सुजनचरितं मेऽभिरुचितम् ॥ ४७ ॥

अनतिक्रमणीयं च सुहृद्वाक्यम् । तदेवमुभयतःपाशया रज्वा बद्धः संमुग्धोऽस्मि । (सविचारं परिक्रम्य राममवलोक्य ।) अहो, अचिन्त्याद्भुत-महिमानुभावमप्रतिहतानन्तशक्तिकमप्राकृतमिदं किमपि ज्योतिः । अपि च । मन्ये पौराणिकेषु प्रसङ्गप्रकरणेषु प्रख्यातम् । सत्यमेतस्यैव तेजो-लेशविलासरूपाणि नान्यस्य ।

---

यिला तर्पयेत्' इत्यापस्तम्बोक्तं विवक्षितम् । वाचापि नावेदितम् । उचितकरणा-भावेऽपि वाङ्मात्रेण नावेदितमुचितमित्यनुषङ्गः । मुख्यातिथिकल्पाननुष्ठानेऽप्यनु-कल्पातिथिकल्पोऽपि न कल्पित इति भावः । तदाह गौतमः—'विपरीते तृणो-दकभूमिस्वागतम्' इति । प्रत्युतोचितकरणादिविपरीतं दारुणं पापकृतामपि भयं-करं पापमनिष्टाचरणम् । वध इति यावत् । व्यवसितं कर्तव्यतया निश्चितम् । ममेति शेषः । एतादृशं पूर्वोक्तरीत्या सर्वदोषास्पदं सख्यं रावणसख्यं किम् । गर्हितमि-त्यर्थः । किंशब्दः क्षेपे ॥ ४६ ॥ **अवश्यं चेति** । मया श्रेयस्विनावश्यं भवि-तव्यमित्यन्वयः । **यशःसंतान इति** । विशदशरदिन्दुद्युतिनिभप्रकाशो निर्मल-चन्द्रिकासदृशकान्तिः । यशसः श्वैत्यशैत्यादिवर्णनं समयसिद्धम् । विश्वस्मिन्नन्त-र्विश्वान्तः । शौण्डादित्वादन्तःशब्देन सप्तम्याः समासः । विसृमरो विकसितः । 'विकासी तु विकस्वरः । विसृत्वरो विसृमरः' इत्यमरः । अजय्यो जेतुमशक्यः । 'क्षय्यजय्यौ शक्यार्थे' इति निपातितः । इन्द्रः । मे पितेत्यर्थः । ततः कीर्तिजन्म-वशाद्धेतोरभिरुचितम् । इष्टं भवतीत्यर्थः । 'रुच्यर्थानाम्' इति चतुर्थी ॥ ४७ ॥ **अनतिक्रमणीयमिति** । उभयतःपाशयोभयतोऽपि बन्धनयन्त्रयुक्तया उभय-तोऽपि शस्त्रयुक्तयापि । 'पाशो बन्धनशस्त्रयोः' इत्यमरः । **अहो इति** । महिमा गुणोत्कर्षः, अनुभावः प्रभावः, शक्तयः सामर्थ्यानि, अप्राकृतं प्राकृतविजातीयं पौराणिकेषु पुराणे भवेषु । 'तत्र भवः' इत्यण् । प्रसङ्गप्रकरणेष्वन्यपरोक्तिप्रस्ता-वेषु । एतेनापक्षपातिप्रमाणप्रतिपन्नत्वं विवक्षितम् । प्रख्यातं चेत्यर्थः । अपि चेति समुच्चयेनाचिन्त्याद्भुतत्वादेः संग्रहः । **सत्यमेतस्यैवेति** । तेजोलेशस्य विला-

---

मूल एव स्फुटीभविष्यति । अवश्यं चेत्यादीनि सुब्रह्मण्यकवेर्वचांस्यपि प्रायशो व्याख्या-स्यन्ते—वीरराघवः.

अत्युग्रोदग्रवल्गद्धगधगितजगद्दाहरौद्राधिकार-
क्रीडत्कल्पान्तकालज्वलनविलसदुद्दामचण्डायितानि ।
संवर्तारम्भसर्वप्लवनयनमहाव्यग्रहव्यग्रहौघ-
प्राग्भारोद्दामघोरज्वलदुरुमिहिरज्योतिरुज्जृम्भितानि ॥ ४८ ॥

(परदेवताप्रतिपत्तिपूर्वकं भक्तिमभिनीय ।)

यथायं निध्यातः स्फुरति हृदि संभावितपरः-
सहस्रब्रह्माण्डप्रलयपुनरुद्बोधविभवः ।
तथा मन्ये नूनं जगवदनहेतोरवतरं
गतो देवः साक्षाज्जयति भुवि नारायण इति ॥ ४९ ॥

धिक् तं विनिपातहेतुभूतं सुहृत्कार्याभिनिवेशम् । यत एतादृशे महात्मनि महत्पापं कर्तुमध्यवसितम् । परित्यज्यतामिदं सौहार्दम् । नास्ति मे प्रत्यवायः । तथाहि ।

अधर्मो धर्मतामेति ह्यादृते परमेश्वरे ।
धर्मोऽप्यधर्म एव स्यात्तमनादृत्य भावितः ॥ ५० ॥

---

सरूपाणि । अस्य चोत्तरत्रान्वयः । **अत्युग्रेति** । अत्युग्राण्युदग्राण्यधिकानि वल्गचलत् । 'वल्ग चलने' । धगधगितमिति ज्वालातिशयानुकरणं येषां तानि तथोक्तानि जगद्दाहे रौद्राधिकारेण भयंकरेण व्यापारेण क्रीडन्ति कल्पान्तकालज्वलनस्य विलसन्त्युद्दामान्युच्छृङ्खलानि चण्डायितानि क्रूराचरणानि । अत्युग्रेत्यादीनां कर्मधारयः । संवर्तारम्भः प्रलयारम्भः प्राग्भारः समूहश्चण्डायितान्युज्जृम्भितानि च विलासरूपाणीति संबन्धः ॥ ४८ ॥ परदेवताप्रतिपत्तिः परदेवतात्वप्रमितिः । **यथेति** । अयं रामो निध्यातः सन्संभावितो निश्चितः परःसहस्राणां सहस्रेभ्यः परेषां ब्रह्माण्डानां प्रलयः संक्षयः पुनरुद्बोधः पुनः सर्गश्च तावेव विभवोऽतिशयो यस्य स तथोक्तस्तथाविधो यथा यस्मात्स्फुरति प्रकाशते तथा तस्माद्धेतोर्नारायणः । 'आपो नारायणः' इत्युक्तरीत्यानन्यपरनारायणशब्दाभिधेयो भगवाञ्श्रियः पतिर्जगदवनहेतोर्लोकरक्षणात्मकप्रयोजनाय साक्षादवतरं मुख्यावतारम् । 'अवतारश्चावतरः' इति द्विरूपकोशः । गतः सन्प्राप्तः सन्भुवि जयतीति मन्ये । नूनमिति निश्चये । व्ययपूर्वकत्वात्सृष्टेः प्रलयः पूर्वं निर्दिष्टः । 'प्रसुप्तमिव सर्वतः' इत्येतदपेक्षया सर्गस्योद्बोधत्वोक्तिः ॥ ४९ ॥ **धिगिति** । विनिपात आत्महानिः । अभिनिवेश उत्कटाभिलाषः । यतो येनाभिनिवेशेनाध्यवसितं निश्चितम् । मयेति शेषः । परित्यज्यतामवश्यं त्याज्यः । मयेति शेषः । सौहार्दं रावणसख्यम् । 'हृद्भग-' इत्यादिनोभयपदवृद्धिः । 'सौहार्दं सौहृदम्' इति द्विरूपकोशः । प्रत्यवायो दोषः । **अधर्म इति** । परमेश्वरे रामे आदृते सत्यधर्मो मित्रद्रोहादिर्धर्मतां निःश्रेयससा-

(पुनः सविषादम् ।) महावीराणां वानरेन्द्राणां राक्षसेन्द्राणां च समक्षं माल्यवन्तं प्रति प्रतिश्रुतसङ्ग्रामस्य युद्धवैमुख्ये सति कथं ते महात्मानो मन्येरन् । चिरार्जितं च विश्वव्यापकं मद्यशो लुप्येत । अपयशश्च लोके सर्वत्र प्रचुरं स्यात् । किमत्र समाधानम् । (विचिन्त्य ।) एवं क्रियताम् । समानबलेनैव वाली युध्यत इति काचिदस्ति मे प्रसिद्धिः । तथैव मे प्रतिज्ञा च । सत्यप्रतिज्ञश्चाहम् । तथैव बलसाम्यपरीक्षाव्याजेनासाध्यं किंचित्प्रत्यायनं कर्म प्रार्थ्यतां रामभद्रतः । (पुनः सविषादम् ।) अहो, महाप्रभावस्य रामस्यासाध्यं नाम किंचिदस्ति । येन दुन्दुभिदेहः पादाङ्गुष्ठेन विन्ध्यात्परमाविद्धः । (पुनर्विचिन्त्य सावज्ञम् ।) किंचित्प्रत्यायनं प्रार्थ्यताम् । ततः स्वावमानहेतुभूते प्रत्यायने रामो न प्रवर्तेत । तथा च सिद्धं नः समीहितं सङ्ग्रामवैमुख्यम् । (पुनर्विमृश्य सविषादम् ।) अहो, महात्मानं प्रति कथमेतादृशं वचनं वक्तुकामोऽस्मि । किमनेन प्रत्यवायसंवलितेन वक्रमार्गेण । ततः सङ्ग्रामनिवृत्तौ ऋजुरेष मार्गो निष्कलङ्कश्च । त्यज्यतामिदमध्यवसितम् । किंतु जगत्पूज्यो भवानतिथिरस्माकमागत इति बहुमानवचनपुरःसर-

---

धनतामेति प्राप्नोति । तं परमेश्वरं राममनादृत्य भावितस्तद्भक्तिविरोधेनानुष्ठितो धर्मो मैत्री प्रतिश्रवादिरधर्म एव स्यादात्मान्तनरकहेतुर्भवेत् ॥ ५० ॥ **महावीराणामिति** । समक्षं संनिधौ । प्रतिश्रुतसङ्ग्रामस्य प्रतिज्ञातयुद्धस्य । 'अङ्गीकृतमाश्रुतं प्रतिज्ञातम्' इत्यमरः । महात्मानो महाबुद्धयः । विश्वव्यापकं त्रैलोक्यविसृमरम् । लुप्येत छिन्नं भवेत् । कर्मकर्तरि यगात्मनेपदे । संभावनायां लिङ् । अपयशो यशोविपरीतं दोषप्रख्यानं प्रचुरं बहुलम् । 'प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु' इत्यमरः । अत्रास्मिन्विरोधे समाधानं कार्यद्वयविरोधशमनम् । युद्धयते युद्धं करोतीति । प्रसिद्धिः प्रख्यातिः । **तथैवेति** । असाध्यं रामेणाशक्यम् । प्रत्यायनं समानबलत्वप्रत्ययोत्पादकम् । असाध्यं किंचिदस्ति नाम । अशक्यं किंचिदस्तीति संभावना विस्मयनीयेत्यर्थः । 'नाम प्राकाश्यसंभाव्य–' इत्याद्यमरः । आविद्धः क्षिप्तः । सावज्ञमत्यल्पत्वादवमानयुक्तम् । किंचित्प्रत्यायनं प्रत्ययकरं स्वावमानहेतुभूते । तन्मात्रार्हत्वसंभावनाद्वारा स्वपरिभवकरे समीहितमभिलषितमेतादृशवचनमवमानहेतुप्रत्यायनप्रार्थनावाक्यम् । प्रत्यवायसंवलितेन दोषयुक्तेन । सङ्ग्रामनिवृत्तौ युद्धनिवृत्तिं प्रति । ऋजुरकुटिलः । एष वक्ष्यमाणः । जगत्पूज्य इत्यादि बहुमानसूचकवाक्यपूर्वकम् । सख्यं मैत्री । यथा तथा वा गुण इति वा दोष इति वा । प्रोत्साहनं

मेव सख्यं क्रियताम् । वानरराक्षसाश्च यथा तथा वा जानन्तु। (पुनर्विमृश्य सविषादम्।) लोकप्रसिद्धं वालिरावणयोः सख्यं रामो जानाति । अद्यतनं च मां प्रति माल्यवतः प्रोत्साहनं समीपगतस्य रामस्य कर्णपथं गतं स्यात्। तथा च रावणसौहृदपरित्यागिनं मित्रद्रोहिणं महापापिनं मत्वा न मामङ्गीकुर्यात्कदाचित्। समये प्राप्ते रावणमिव मामयं परित्यजेदित्यविश्वसनीया बुद्धिश्च तस्य स्यात् । अतो दुर्घटं तेन सख्यम् । तदीयहृदयदूरभूतस्यैहिकामुष्मिकप्रसङ्गो दूरत एव। अतस्तदपेक्षया सावज्ञप्रत्यायनप्रार्थनमेव गरीयः । न चास्मिन्पक्षे रामस्यानाश्वासप्रसङ्गः सुहृत्कार्यविरुद्धं समामबलेन संप्रहार इति प्रतिज्ञापरिपालनमधर्म इति। यतः सर्वापेक्षया सत्यप्रतिज्ञता च बलवती। तथैव हरिश्चन्द्रादिभिः सत्यप्रतिज्ञतानुरोधेन चण्डालदास्यादिकमप्याचरितम्। न चेदमवमानहेतुतया रामस्य प्रकोपहेतुः । महाप्रभावस्य तस्य मादृशैः कियानवमानः। किंच महत्स्वेवापराधेषु महात्मनां प्रकोपः । अतो मादृशानां वाङ्मात्रेण कोपं न करिष्यति। तस्मात्तेनैव व्याजेन सङ्ग्रामः परिहरणीयः ।

निःसारं निरयानुबन्धि च निराकुर्यामिदं सौहृदं
निःशेषाश्च निशाचरा निजपदाद्भ्रश्यन्तु नश्यन्तु वा।

---

रामेण सह युद्धकर्तव्यताव्यवसायजननम्। 'उत्साहो व्यवसायः स्यात्' इत्यमरः। कर्णयोः पन्थाः कर्णपथः। 'ऋक्पूरब्धूः–' इत्यादिना समासान्तः। रावणसौहृदपरित्यागिनं रावणसख्यत्यागिनम्। अयं वाली। तस्य रामस्य। ऐहिकामुष्मिके एतद्देहानुभाव्यं देहान्तरानुभाव्यं च श्रेयस्तयोः प्रसङ्गः प्रस्तावः । गरीयो गुरुतमम्। त्रिष्वेकस्य निर्धारणादीयसुन्। **न चेत्यादि** । सावज्ञप्रत्यायनप्रार्थनया रामस्य वैमुख्यपक्षे रावणकार्याकरणान्मित्रद्रोहिशङ्कारूपोऽनाश्वासप्रसङ्गश्च नेत्यर्थः । **यत इत्यादि**। सर्वापेक्षया रावणसख्यपरिपालनाद्यपेक्षया । सत्यप्रतिज्ञता प्रतिज्ञापरिपालनम्। **हरिश्चन्द्रादिभिरिति**। आदिपदेन दशरथादयः परिगृह्यते। चण्डालदास्यादिकमित्यादिपदेन सर्वागृहीतराज्यमपि वासनावशादिकं(?) गृह्यते। **न चेदमिति**। इदं सावज्ञप्रत्यायनप्रार्थनम्। प्रकोपहेतुः प्रकृष्टकोपहेतुः। तस्य रामस्य। महात्मनां क्षमालक्षणस्वभावेन महताम्। मादृशानां तिरश्चाम्। तेनैव व्याजेन सावज्ञप्रत्यायनप्रार्थनारूपच्छद्मना। **निःसारमिति**। निःसारं निष्फलं निरयानुबन्धि नरकावहं चेदं सौहृदं रावणसख्यं निराकुर्यां त्यजेयम् । निजपदान्निजस्थानाद्भ्रश्यन्त्वधः पतन्तु नश्यन्तु वा हता भवन्तु वा। मन्दः स्वत एव प्रतिभाशून्यस्तदुपरि

मन्दो माल्यवता विमोहितमना मन्दोदरीवल्लभः
किं कुर्मो मतिविभ्रमादिह महावीरेण वैरायते ॥ ५१ ॥

अयं च रामः संभाषणयोग्यः स्वल्पान्तरालं संप्राप्तः । (रामं प्रति ।) स्वागतं महावीरस्य ।

**रामः**—इदानीमहं महावीरः संवृत्तः । यतो महावीरलाभेन मद्बाहुबलं साफल्यमनुभवति ।

**वाली**—धिगस्तु मे महावीरताम् । येन वीरधर्मः परित्यक्तः । स एव खलु धर्मो वीरस्य यज्जगत्पूज्यानां भवादृशां परितोषणम् ।

**रामः**—मद्बाहुबलसाफल्यं मम परितोषहेतुरेव ।

**वाली**—मया किंचिद्विज्ञाप्यमस्ति । तत्र भवान्मय्यनुग्रहबुद्ध्यावधारयतु ।

**रामः**—किं तत् ।

**वाली**—एतावन्तं कालं समानबलेनैव संप्रहारः । अतः समानबलत्वे किंचित्प्रत्यायनमनुगृह्यताम् ।

**रामः**—केन कर्मणा तत्रभवतः प्रत्ययः स्यात् ।

**वाली**—

वृक्षान्तर्लीनमूर्तिः प्रणिहितमनसा सम्यगालोक्य लक्ष्यं
वक्षस्याभोगयुक्ते मम निशितशरं मुञ्च गाढप्रहारम् ।
तच्चेद्भिद्येत दत्तप्रसरमपि भवेत्प्रव्यथेतापि यद्वा
तेनाशङ्कानिरासे ननु तदनु मतस्तुल्यसारो मम स्याः ॥ ५२ ॥

---

माल्यवता विमोहितमना भ्रामितहृदयो मन्दोदरीवल्लभो रावणः । मन्दोदरीत्यादिना तस्याः सौमङ्गल्यबलमेतावदिति व्यज्यते । मतिविभ्रमान्महावीरेण रामेण सह वैरायते वैरं करोति । 'शब्दवैर–' इत्यादिना करणे क्यङ् । इह रावणस्यानुचितरामवैरकरणे किं कुर्मः । बुद्धिमन्तो वयं न रामवैरं कुर्म इत्यर्थः ॥ ५१ ॥ स्वल्पान्तरालं स्वल्पावकाशम् ॥ **महावीरलाभेनेति** । महावीरस्य तव लाभेनेति भावः ॥ एतावन्तं कालमित्यत्यन्तसंयोगे द्वितीया । संप्रहारः युद्धम् । प्रत्ययो बलसाम्यनिश्चयः । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः ॥ **वृक्षान्तरिति** । प्रणिहितमनसा सावधानेन मनसाभोगयुक्ते परिपूर्णतायुक्ते । 'अभोगः परिपूर्णता' इत्यमरः । गाढो दृढः प्रहारस्ताडनं येन स तथोक्तं निशितं शरं तीक्ष्णबाणं मुञ्च । तद्वक्षो भिद्येत चेद्दत्तप्रसरमपि कृतरक्तादिविसर्पणं वा यदि भवेत् । 'प्रसरस्तु विसर्पणम्' इत्यमरः ।

**रामः**—(सक्रोधम् ।) हा दुरात्मन्, वीरबन्धो, तृणप्रायं मत्वा मामपहससि । अथवा क तवापहासयोग्यता । तथा मन्ये सत्यं सङ्ग्रामभीरुणा त्वया प्राणसंरक्षणाय कश्चिद्व्याजः परिकल्पितः । किंच यदि परित्यक्तसङ्ग्रामो गमिष्यसि तदा त्वया मयि महान्द्रोहः प्रयुक्तः स्यात् । यत एवमपहससेऽप्युदासीनं मामसमर्थं महावीरा मन्येरन् । तथा च लोके महानपवादः स्यात् । (निःश्वस्य ।)

मनोर्वंशे जाताः प्रथितयशसो भूमिपतयो
मनागप्येतेषां चरितमपवादे न पतति ।
त्रिलोकीविस्तारिप्रबलपरिवादैकजनक-
स्तृणीकारः कोऽयं शिवशिव मनो मे व्यथयति ॥ ५२ ॥

**वाली**—(आत्मगतम् ।) हन्त महद्विपरीतम् । यदनुकूलत्वेन मया चिन्तितं तदेव प्रतिकूलः संवृत्तः । एतावत्पर्यन्तं युद्धे कृते देवताद्रोह इति सिद्धम् । इदानीं तु युद्धपरित्यागे महाद्रोह इत्यापतितम् । अहो विसंवादः । अस्मिन्परमेश्वरदृष्ट्या मम स्वात्मनि परं निकृष्टबुद्धिः स्थिता । अस्य तु मयि महावीरबुद्ध्या परमोत्कर्षबुद्धिरेव । अतो मदीयदुरुक्त्या महान्तमपराधं मन्यते । अतएव मदीयदुरुक्तिश्च न वाङ्मात्रम् । (प्रकाशम् ।) महानुभाव, मयि स्वजनप्रतिपत्त्या मदीयं दुरुक्तं क्षम्यताम् । किं प्रेक्षावन्तः परीक्षन्ते दावानले दहनशक्तिरस्ति वेति । तदेहि । सङ्ग्रामभूमिं गच्छावः ।

---

यद्वा प्रव्यथेत प्रकम्पेत चेत्तेन भेदादिनाशङ्काया न्यूनबललसंदेहस्य निरासेऽपगमे तदन्वनन्तरं तुल्यबलः । इष्टो भवेदित्यर्थः ॥ ५२ ॥ वीरबन्धो कुत्सितवीर । ब्रह्मबन्धुक्षत्रबन्धुशब्दवद्वीरबन्धुशब्दोऽपि प्रकृतकुत्सापरः।तृणप्रायं तृणसदृशम्।महान्द्रोहोऽपकारः । उदासीनं निर्युद्धव्यापारमसमर्थमशक्तम् । अपवादो दोषप्रथा । **मनोरिति** । प्रथितयशसः प्रख्यातकुलक्रमागतकीर्तयः।'कुलक्रमागता साचेयश इत्यभिधीयते' इत्युक्तेः । एतेषां भूमिपतीनां चरितं वृत्तमपवादे दोषप्रथायां न पतति । त्रयाणां लोकानां समाहारस्त्रिलोकी तस्यां विस्तारिणः प्रबलस्य परिवादस्यैकजनको मुख्यजननहेतुस्तृणीकारोऽनादरो मनो व्यथयति दुःखयति॥५३॥देवताद्रोहः परदेवतापकरः।**अहो इत्यादि** । विसंवाद आवयोरितरेतरबुद्ध्योरनैकरूप्यम् । अस्मिन्रामे परमेश्वरदृष्ट्या परमात्मप्रमित्या । अस्य तु रामस्य तु परमोत्कर्षबुद्धिरेव न तु निकृष्टबुद्धिरिति **विसंवाद** इत्यर्थः । अतो मय्युत्कर्षबुद्ध्या स्वजनप्रतिपत्त्या बन्धुबुद्ध्या । प्रेक्षावन्तः **प्रज्ञावन्तः**

**रामः**—वत्स लक्ष्मण, शबर्या सह सुग्रीवविभीषणौ गत्वा मद्वचनाद्ब्रूहि—'भवद्दर्शनाय प्रस्थितस्य मे मध्येमार्गं वालिना समागमः संप्राप्तः । तदतिक्रमे च महदनौचित्यम् । अतो मुहूर्तं विलम्बः सह्यताम्' इति ।

**लक्ष्मणः**—यदाज्ञापयत्यार्यः । (इति निष्क्रान्तः ।)

**रामः**—(धनुरास्फालयन्सहर्षम् ।) हन्तेदानीमस्मदीयं धनुः प्रादुर्भवति ।

द्रागभ्यागतनिर्भयप्रतिभटप्रागल्भ्यनिर्भेदन-
आजह्मविभीतभूतनिनदप्राग्भारवद्धीरवः ।
.... .... .... .... ....
.... .... .... .... .... .... ॥ ५४ ॥[1]

अपि च ।

दृप्यज्जम्भारिडिम्भप्रहरणगिरिषु स्फूर्जदुज्जृम्भिविद्यु-
द्दम्भोलिस्पर्धिनीभिर्गुरुषु मदिषुभिर्भीममभ्याहतेषु ।
तद्धाटीभग्नभूभृद्बृहदुपलदृढाघातविन्ध्याण्डभङ्ग-
स्फायद्भाङ्कारहेतुर्भवतु मम भुजस्तम्भगम्भीरसारः ॥ ५५ ॥

---

किं परीक्षन्ते । न परीक्षन्त एव । दहनशक्तेरतिप्रसिद्धत्वादित्यर्थः ॥ मद्वचनान्मद्वाक्यं निवेद्य । ल्यब्लोपे पञ्चमी । मध्येमार्गे मार्गस्य मध्ये । 'पारेमध्ये षष्ठ्या वा' इति समासः । विलम्बः समागमकालातिपातः ॥ आस्फालयंश्चालयन् । **द्रागिति** । प्रतिभटस्य शत्रोः । प्रागल्भ्यस्य धृष्टत्वस्य । **निर्भेदनेत्यादि** । 'धृष्टे धृष्णुर्वियातश्च प्रगल्भः' इत्यमरः ॥ ५४ ॥ **दृप्यदिति** । मम भुजस्तम्भयोर्गम्भीरोऽक्षोभ्यः सारो बलं कर्तृ स्फूर्जता निर्घोषवतोज्जृम्भिविद्युतोद्गतटिद्युक्तेन दम्भोलिना वज्रेण सह स्पर्धिनीभिः संघर्षणीभिर्मदिषुभिर्मद्बाणैः । 'इषुर्द्वयोः' इत्युक्तेः स्त्रीत्वम् । वालिन आयुधभूतेषु पर्वतेषु भीमं यथातथाभ्याहतेषु ताडितेषु सत्सु । तेषां वालिनायुधीकृतानां मद्बाणहतानां गिरीणां धाटीभिर्वेगितगतिभिर्भग्नानां भूभृतां बृहदुपलानाम् । 'उपलाश्मानः शिला दृषत्' इत्यमरः । दृढाघातेन यो विन्ध्याण्डभङ्गो विन्ध्याण्डयोः स्फोटस्तेन स्फायतो वर्धमानस्य । अनुदात्तेत्त्वनिबन्धनमात्मनेपदमनित्यम् । भाङ्कारस्य हेतु-

---

१. अस्य श्लोकस्योत्तरार्धमस्माकं मूलपुस्तकेभ्यो नष्टम्.

किंतु पूर्वबुद्ध्या वालिनः सङ्ग्रामवैमुख्यं कदाचित्संभाव्यत इति पर्याकुलं मे हृदयम् । भवतु सर्वं द्रक्ष्यामि ।

(इति निष्क्रान्ताः सर्वे ।)

**इति महाकविश्रीभवभूतिविरचिते महावीरचरिते पञ्चमोऽङ्कः ।**

---

भवतु । प्राप्तकाले लोट् ॥ ५५ ॥ पूर्वबुद्ध्या मयि पूज्यत्वबुद्ध्या । संभाव्यत इति संशय्यत इति । पर्याकुलं दुःखितम् । सर्वं युद्धवैमुख्यं तदाभिमुख्यं वा । इति निष्क्रान्ताः सर्वे ॥

यो महीसारवास्तव्यो वाधूलो वीरराघवः ।
स महावीरचरिते पञ्चमाङ्कं व्यवीवरत् ॥

**इत्यण्णापङ्गार्यनामधेयेन वाधूलवीरराघवेण विरचितायां महावीरचरितव्याख्यायां भावप्रद्योतिनीसमाख्यायां पञ्चमोऽङ्कः ॥**



## षष्ठोऽङ्कः ।

(ततः प्रविशति संपातिर्नाम वानरः ।)

**संपातिः**—अङ्गदेन वानरराजसूनुना प्रेषितोऽस्मि—'संपाते, वालिनः प्लवङ्गमाधीशस्य वृत्तान्तो न विज्ञायते । तदन्वेषणाय दिशि दिशि प्लवंगमाः प्रस्थापिताः । त्वं च ऋष्यमूकसमीपं गत्वा विचारय' इति । तत्र हि सुग्रीवविभीषणाभ्यां सह कृतसख्यो रामस्तिष्ठति । तत्रैवायं वृत्तान्तो विदितः स्यात् । (अग्रतोऽवलोक्य ।) अयं हनूमानित एवाभिवर्तते । यावदेनं पृच्छामि ।

(ततः प्रविशति हनूमान् ।)

**हनूमान्**—आदिष्टोऽस्मि महात्मना रामचन्द्रेण—'भो हनूमन्, वालिनं गवेषयितुं सुग्रीवविभीषणौ प्रस्थितौ । अहं च लक्ष्मणेन सह तत्र तत्रान्वेष्टुं गमिष्यामि । त्वं च किष्किन्धासमीपं गत्वा विचारय' इति । क्व वाली मया द्रष्टव्यः । न केवलमिदं रामकार्यम् । यतो महाराजसुग्रीवोऽपि भ्रातृयशोनाशसंभावनया भ्रातरं युद्धार्थमानेतुं समन्तादन्विष्यन्पर्यटति । (पुरोऽवलोक्य ।) अयं संपातिरित एवाभिवर्तते । एतन्मुखेन विज्ञातव्यम् । (उपसृत्य ।) संपाते, क्व प्रस्थितोऽसि ।

**संपातिः**—एवम् । (इति कथयति ।) त्वं पुनः क्व प्रस्थितोऽसि ।

**हनूमान्**—एवम् । (इति कथयति ।)

---

इदानीं कविः पुनरपि विमर्शसंधिं षष्ठाङ्केन वदति—तत्राव्यापिन्या आगस्त्यकथायाः प्रकर्या वालिवधादपायाभावतः कार्यनिश्चयरूपनियताप्तेश्च वर्णनाद्विमर्शसंधिः । तदुक्तम्—'गर्भसंधौ प्रसिद्धस्य बीजार्थस्यावमर्शनम् । हेतुना येनकेनापि विमर्शः संधिरिष्यते ॥ नियताप्तिप्रकर्युक्तेरङ्गान्यस्य त्रयोदश ॥' इति । तत्र विष्कम्भकं रचयति—**ततः प्रविशति संपातिर्नाम वानर इत्यादिना** । पूर्वाङ्कविष्कम्भे गृध्रस्य संपातेः प्रवेशात्तद्व्यावृत्तये वानर इति ॥ आदिष्टोऽस्म्याज्ञप्तोऽस्मि । गवेषयितुमन्वेषयितुम् । 'अन्वेषितं गवेषितम्' इत्यमरः । भ्रातृयशसो नाशसंभावनया युद्धमुपगम्य प्रच्छन्न इत्यपख्यात्या । पूर्वार्जितं यशो विनश्येदिति ज्ञानेनेत्यर्थः । भ्रातरं वालिनमन्विष्यन्मृगयमाणः पर्यटति परितश्चरति । 'अट गतौ' । एतस्य मुखेन मुखोक्तवचनेन ॥ **एवमिति** । पूर्वोपदर्शिताङ्गदवाक्यप्रकारेण ॥ **एवमिति** । उपदर्शितरामवाक्यप्रकारेण ॥ यावन्निवेदयामि निवेदयिष्यामि । 'यावत्पुरानिपातयोर्लट्'

**संपातिः**—विदितं मया वेदितव्यम् ।

**हनूमान्**—मया च विदितं विज्ञातव्यम् । यावद्रामाय निवेदयामि । अयं च रामो लक्ष्मणेन सह वालिनमन्विष्यन्नित एवाभिवर्तते । यावदुपसर्पामि ।

(इति निष्क्रान्तौ ।)

शुद्धविष्कम्भः ।

---

(ततः प्रविशत्यधिज्यधन्वा वालिगवेषणव्यग्रो रामो लक्ष्मणश्च ।)

**रामः**—हन्त किमेतत् । न जाने क्व गतो वाली वानरेन्द्रः । पूर्वेद्युरहं वाली च सहैव सङ्ग्रामभूमिमभिप्रस्थितौ । स च मद्विषयाद्बहुमानान्मां प्रत्युपचारार्थं पुरोगमनं पार्श्वगमनं च परिहृत्य परिवारं च किष्किन्धां संप्रेष्यैकाकी पृष्ठत एव मामनुगतः । अहं चाप्रतीक्षमेव सङ्ग्रामभूमिपर्यन्तमागतः । तत्र युद्धारम्भाय पृष्ठतः समालोकितो न दृष्टः । आश्चर्यम् । ततस्तं बहुशोऽन्विष्याप्यपि क्वाप्यपश्यन्नैराश्येनर्ष्यमूकमहमागतः । (पुरोऽवलोक्य सहर्षम् ।) अयमसौ वाली । (सत्वरं बाणं धनुषि संधत्ते ।)

**लक्ष्मणः**—मम तु संशयो वर्तते वाली वा सुग्रीवो वेति ।

**रामः**—विभीषणो न दृश्यतेऽनुचराश्च न दृश्यन्ते । तस्मादयं वालीति निश्चिनोमि । पूर्वेद्युश्चैकाकी स्थितः ।

(प्रविश्य ।)

**हनूमान्**—सुग्रीवोऽयम् । न हन्तव्यो न हन्तव्यः ।

**रामः**—आकृतिसाम्यादनर्थहेतुर्विपर्ययः ।

(ततः प्रविशति सुग्रीवः ।)

**सुग्रीवः**—न दृष्टो वाली ।

---

इति लट् ॥ अधिज्यमध्यारूढमौर्वीकम् । परिवारं परिकरम् । 'स्याज्जङ्गमे परीवारः खड्गकोशे परिच्छदे' इत्यमरः । किष्किन्धां संप्रेष्य प्रस्थाप्येति द्विकर्मकम् । एकाकी एकः । न विद्यते प्रतीक्षा पश्चादवलोकनं यस्मिन्कर्मणि तत्तथोक्तम् । इदं चागमनेऽन्वेति ॥ **विभीषण इति** । विभीषणविनाभावान्नायं सुग्रीवः । अनुचरविरहादयं वालीत्यर्थः । वालित्वेऽनुचरविरहस्य हेतुत्वमाह—**पूर्वेद्युरिति** । पूर्वेद्युश्चैकाकी स्थित इति ॥ न हन्तव्य इत्यस्य संभ्रमेण द्विरुक्तिः ॥ विपर्ययोऽन्योन्यतादा-

**रामः**—सखे सुग्रीव, विभीषणः क्व गतः । अनुचरा वा क्व गताः ।

**सुग्रीवः**—एकत एवान्वेषणे स न दृश्यत इति नानामुखा वयं प्रस्थिताः ।

(ततः प्रविशति विभीषणः ।)

**विभीषणः**—न दृष्टो वाली ।

**हनूमान्**—स्वामिन्, वालिनो दर्शनं दुर्लभमस्माकम् । यतस्तदीया अपि वानरास्तत्र तत्रान्विष्यन्तो न पश्यन्ति ।

**रामः**—तर्ह्यृष्यमूकं गमिष्यामः । किंत्वमोघस्य बाणस्य किंचिल्लक्ष्यं प्रदर्शनीयम् । निरपराधेषु च न प्रयोक्तव्यः । किं करोमि । (पुरतोऽवलोक्य ।) अयमितो नातिदूरे वृक्षखण्डे कश्चिन्मृगः संचरति । अयमेव लक्ष्यीकर्तव्यः । मृगया च राज्ञां धर्म एव । सावधानेन भवितव्यम् । यतो मृगजातिर्धनुर्धरं दृष्ट्वा पलायतेऽतो वृक्षविटपान्तरितो भूत्वा हनिष्याम्येनम् ।

(इति निष्क्रान्तो रामः ।)

**सुग्रीवविभीषणौ**—अहो क्व वाली गतः स्यात् । (परस्परं विमृशतः ।)

(प्रविश्य संभ्रान्तः ।)

**रामः**—हन्त महद्वैशसमापादितम् ।

मया बाणेन तीक्ष्णेन मृगो हृदि विदारितः ।
अद्रिराजप्रमाणेन वालिरूपधरो मृगः ॥ १ ॥

किमिति । तदग्रतो गत्वा विचारयामि ।

---

त्म्यभ्रमः ॥ एकत एवैकस्यां दिश्येव । सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः । वयं विभीषणोऽहमन्ये च ॥ अमोघस्यावन्ध्यस्य । लक्ष्यं शरव्यम् । न प्रयोक्तव्यः । बाण इति शेषः । वृक्षखण्डे वृक्षसमूहे । निरपराधे मृगे कथं प्रयोक्तव्य इत्यत्राह—**मृगयेति** । 'आखेटो मृगया स्त्रियाम्' इत्यमरः । धर्म एवाचार एव । सावधानेन व्यासङ्गान्तररहितेन । मृगजातिशब्देन जात्याश्रयव्यक्तय उच्यन्ते । पलायतेऽन्यत्रापगच्छति । 'अय गतौ' इत्यस्मिन्परे उपसर्गस्य पराशब्दस्य रेफस्य 'उपसर्गस्यायतौ' इति लकारः । एनं मृगम् पलायनकर्तृत्वेनोक्तस्य हननकर्मत्वेनोपादानादन्वादेशे एनादेशः । 'दूराध्वानं वधं युद्धम्' इत्यादिना वधस्य दृश्यत्वप्रतिषेधादाह—**निष्क्रान्त इति** । अत्र वधोक्तेर्विद्रवः ॥ **हन्तेति** । वैशसं हिंसादोषः । **मयेति** । अद्रिराजप्रमाणेन पर्वतवरपरिमाणेनोपलक्षितं यद्वालिरूपं वालिशरीरं तस्य धरो धारयिता

(प्रविश्य)

**दिव्यपुरुषः**—विजयी भव रामचन्द्र, विजयी भव ।

मुनिर्वा देवो वा भवतु ननु जम्भारिरपि वा
विधाता भूतानामपि भवतु यद्वा कमलभूः ।
तथा देहस्यान्ते स्वयमनुगृहीतस्य भवता
ममाग्रे कस्तेषां प्रभवति महिम्नामतिशयः ॥ २ ॥

**रामः**—

कस्त्वं मया न विज्ञातः स्तौषि मां परया मुदा ।
कुतूहलेन संक्रान्तमन्तस्तत्त्वं प्रसीदति ॥ ३ ॥

**दिव्यपुरुषः**—अहं किल

वसुंधराधीश महाबलानां वाली विनेता वनवानराणाम् ।
मदान्धभावेन मयाभिपन्नो मतङ्गशापेन कुरङ्गभावः ॥ ४ ॥

पुरा किल मदोन्मत्ततया मतङ्गमुनौ मर्यादामनपेक्ष्य तदीयाश्रमपरिसरे दुन्दुभिदेहमहं विक्षिप्तवान् । तद्रुधिरपर्युक्षितं निजाश्रमाङ्गणं दृष्ट्वा स मुनिः शशाप—'दुरात्मन्, वीरदर्पेण खल्वेवमकार्षीः । अनेनातिक्रमेण देहस्यान्ते कुरङ्गरूपं लब्ध्वा वीरधर्मविरुद्धं कुत्सितं मरणं प्राप्स्यसि' इति । ततो मया मुनिर्बहुशः प्रयत्नैरनुनीतः पुनरनुजग्राह ।

---

॥ १ ॥ **मुनिर्वेति** । मुनिः शापानुग्रहसामर्थ्यहेतुमननशीलो देवः शक्तिविशेषयुक्तः, तस्मादप्यधिको जम्भारिरिन्द्रः, ततोऽप्यधिको भूतानां विधाता स्रष्टा कमलभूर्भगवान्नाभिपद्मजन्मा ब्रह्मा, तेषां पूर्वोक्तमुनिप्रभृतिचतुर्मुखपर्यन्तानां ये महिमानो माहात्म्यानि तेषां को वातिशयो देहान्ते भवता स्वयमनुगृहीतस्य ममाग्रे प्रभवति स्थातुं शक्नुयात् । ब्रह्मादिभ्योऽप्यतिशयितप्रभावो मुक्तः शास्त्रेषु श्रूयत इति भावः । अत्र स्वशक्तिप्रशंसनरूपव्यवसाय उक्तः ॥ २ ॥ **क इति** । विज्ञातो न भवति न विज्ञातः । नशब्दस्य समासान्नलोपो न । कुतूहलेन संक्रान्तं हर्षकर्तृकसंक्रमणाधिकरणमन्तस्तत्त्वं मनः पदार्थः । प्रसीदति प्रसन्नं भवति ॥ ३ ॥ **वसुंधरेति** । अहमित्यादि । हे वसुंधराधीश भूमिपते राम, महाबलानां वनवानराणां विनेता नियामकः । वनेति ग्राम्यप्राकृतवानरेभ्यो व्यावृत्तिः । वाल्यहम् । कथमिदं कुरङ्गत्वमित्यत्राह—**मदेति** । मदेन गर्वेण योऽन्धभावः कृत्याकृत्यविवेकशून्यता तेन यो मतङ्गशापस्तेन कुरङ्गभावो हरिणत्वं मयाभिपन्नः प्राप्तः ॥ ४ ॥ पूर्वोक्तमेव विशदयति—**पुरा-किलेत्यादिना** । मर्यादां व्यवस्थाम् । तदीयाश्रमस्य मतङ्गसंबन्धिन आश्रमस्य । परिसरे समीपे । विक्षिप्तवान्विसृष्टवान् । पर्युक्षितं परितः सिक्तम् । वीरदर्पेण शौर्य-

वेदान्तजालपरिशीलनलब्धवर्णो
वेदान्तरायविकलोऽयमनन्यभावः ।
देवासुरैरपि दुरूहतमेन तेन
देहान्तमन्यदुरवापमवाप्स्यसीति ॥ ५ ॥

स एवायं शापो यदहं सङ्ग्रामभूमिं प्रति त्वामनुगच्छन्नन्तरा मृगो भूत्वा स्वरूपं च विस्मृत्य पलायितः । स एवायमनुग्रहो यत्तव प्रसादा द्ब्रह्मादीनामप्यलभ्यमैश्वर्यमवाप्तवानस्मि । तदेव भवदनुग्रहतो मामुपनतं शाश्वतं पदं गमिष्यामि ।

**रामः**—तथास्तु ।

(निष्क्रान्तो दिव्यपुरुषः ।)

**रामः**—वत्स लक्ष्मण, विभीषणेन सह किष्किन्धां गत्वा वालिनः कृतोत्तरक्रियं सुग्रीवं वानरराज्येऽभिषिच्य कतिपयदिवसैरेव मत्सकाशमागच्छ । विभीषणस्तु भ्रातृव्यसनकर्शितस्य सुग्रीवस्य समाश्वासनाय तत्रैवास्ताम् । अहं तु सुग्रीवभृत्यैः कतिपयैर्वानरैः परिचर्यमाण ऋष्य-

---

गर्वेण । वीरेति भावप्रधानो निर्देशः । अतिक्रमेण मर्यादातिवृत्तिलक्षणेनापराधेन । वीरधर्मेण सह युद्धे मरणरूपवीरपुरुषाचारेण सह विरुद्धं विरोधवत् । अनुजग्राहानुग्रहं कृतवान् । अनुगृहीतार्थमाह—**वेदान्तेति** । यं परमपुरुषं वेदान्तजालानां छान्दोग्यतैत्तिरीयकाद्युपनिषज्जालानां परिशीलनेन ब्रह्मसूत्रपदान्तस्थहेतुभिरुपबृंहणैश्च तात्पर्यनिर्णयाभ्यासेन लब्धवर्णो विचक्षणः। अनेन श्रवणमनने उक्ते । अनन्यभावोऽनन्यहृदयः । अन्यानुल्लेखिध्यानयुक्त इत्यर्थः । अनेन निदिध्यासनमुक्तम् । अन्तरायेण मोक्षविघ्नेन स्वर्गाद्यभिप्रायेण विकलो रहितः । 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः। अन्तरायशब्दनिर्देशेन 'वासुदेवे मनो यस्य जपहोमार्चनादिभिः । तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम् ॥' इति पुराणरत्नवचनं स्फोरितम् । वेद पश्यति । 'ततस्तु तं पश्यते निष्कलं ध्यायमानः' इति श्रुतिः । दुरूहतमेन तत्प्रसादेन विना तर्कितुमशक्येन तेन परमपुरुषेणान्यदुरवापं देवादीनामपि दुर्लभं देहान्तं देहनाशमवाप्स्यसीत्यनुजग्राहेति पूर्वेण संबन्धः । अत्र प्रकरणे मदान्धेति दोषप्रख्यापनात्मकोऽपवादः। दुरात्मन्निति रोषसंभाषणरूपः संफेटः । मर्यादामनवेक्ष्येति गुरुतिरस्कृतिरूपो द्रवः । शशापेति वधबन्धनादिरूपो विद्रवः । अनुनीत इति विरोधशमनरूपशक्तिः । वेदान्तजालेत्यादिना गुरुकीर्तनरूपः प्रसङ्ग इति विमर्शसंधेरङ्गान्युक्तानि ॥ ५ ॥ **स एवायं शाप इति** । पलायित इति यत्स एवायं शाप इत्यन्वयः । **स एवायमनुग्रह इति । यत्तवेति** । ऐश्वर्यं प्राप्तवानस्मीति यत्स एवायमनुग्रह इत्यन्वयः । उपनतं प्राप्तम् । शाश्वतं पदं मोक्षस्थानम् ॥ **कृतोत्तरक्रियमनुष्ठितौर्ध्वदै-**

मूके वत्स्यामि । मया खलु मिथिलायां प्रतिज्ञातं चतुर्दश वर्षाणि नगरप्रवेशं न करिष्यामीति । वृष्टिकालमासचतुष्टये व्यतीते बहु कार्यं निर्वर्तनीयम् ।

**लक्ष्मणः**—यदाज्ञापयत्यार्यः । सुग्रीवस्य राज्याभिषेकानन्तरमेव त्वत्सकाशमहमागमिष्यामि । तावत्पर्यन्तमिमे वनचराः परिचरन्तु । सीतावियोगदुःखितस्य तव समाश्वासनायर्ष्यमूकगुहायामवस्थापितं सीताभरणजालं च समर्पयिष्यन्ति । पूर्वेद्युस्त्वदागमनसंभ्रमेण त्वदुपचारव्यापृतैरेतैस्त्वया च सुहृत्समागमसंतोषातिशयेन तत्कथालापविनोदव्यग्रतया विस्मृतमेतत् ।

(निष्क्रान्ता लक्ष्मणादयः ।)

**रामः**—(परिक्रम्यावलोक्य च ।) अयमसावृष्यमूकः । (आरोहणं नाटयित्वोपविश्य ।)

हतं तावत्कृत्स्नं निशिचरपतेः पौरुषबलं
हठाक्रान्ते मित्रे प्लवगकुलमुख्ये विनिहते ।

(हस्तौ निपीड्य ।)

कदा भस्मीकुर्यामहमहह लङ्कामविकलं
कथापि क्रव्यादा इति जगति नष्टा मम रुषा ॥ ६ ॥

मायामात्रमितः परं तस्य बलमवशिष्टम् । तत्प्रतीकाराय कश्चिदुपाय-

---

हिककर्माणम् । भ्रातृव्यसनकर्शितस्य भ्रातृमरणदुःखपीडितस्य । समाश्वासनाय दुःखलघूकरणाय । परिचर्यमाणः क्रियमाणशुश्रूषः । चतुर्दश वर्षाणीति पदद्वयम् । अत्यन्तसंयोगे द्वितीया । मासचतुष्टये । 'पक्षा वै मासाः' इति द्वयोः सिंहकन्यामासयोश्चतुष्टयम् । यद्वा तुलावृश्चिकमासयोरप्यनत्यन्तयात्राहत्वाद्वार्षिकत्वम् । इदमेवाभिप्रेत्य 'चत्वारो वार्षिका मासाः' इत्युक्तम् ॥ **तत्कथालापेति** । तस्य सुहृदः कथालाप एव पूर्ववृत्तप्रतिपादकप्रश्नप्रतिवचननिर्देश एव विनोदः सीतावियोगदुःखलघूभावस्तत्र व्यग्रतया च व्यासक्ततया च ॥ **हतं तावदिति** । प्लवगकुलमुख्ये वालिनि हते सति निशिचरपते रावणस्य पौरुषबलं पुरुषसबन्धि बलम् । मित्रबलमित्यर्थः । हतं ध्वंसितम् । तावच्छब्दः क्रमार्थकः । पौरुषबलमायाबलयोर्मध्ये प्रथममिदं पुरुषबलं हतमित्यर्थः । क्रव्यादा इति कथापि शब्दोऽपि मम रुषा नष्टा नष्टप्रायैव । भवतीति शेषः । खरादिवधातिरेकविवक्षया कृत्स्नमिति विशेषणम् । अत्र कथापि मम रुषा नष्टेति स्वशक्तिप्रशंसनरूपव्यवसायात्मकं संध्यङ्गमुक्तम् ॥ ६ ॥ मायैव मायामात्रम् । माया च शाम्बरीप्रभृतिः । सा चापूर्वसृष्टिर्वञ्चना च । तत्प्रती-

श्चिन्तनीयः । (पुरोऽवलोक्य सविस्मयम् ।) किमेतदद्भुतं ज्योतिरितोमुखमभिवर्तते । (सम्यग्विभाव्य ।) अहो भगवानगस्त्यः संप्राप्तः ।

(ततः प्रविशत्यगस्त्यः ।)

**अगस्त्यः**—अद्यैवास्मत्सुहृदा विश्वामित्रेण संदिष्टम्—

यन्मयाधिष्ठितं यत्नाद्यातुधानवधादिकम् ।
जगन्मङ्गलकामेन रामस्य चरिताद्भुतम् ॥ ७ ॥

तदेतद्भवतो विदितम् । तत्र देवासुराणामप्यप्रधृष्यं दिव्यास्त्रजातं साक्षादेवास्माभिर्दत्तम् । ततश्च कुतश्चित्कारणाद्भवदाश्रमे निक्षिप्तं माहेन्द्रं धनुर्वरं शिष्यमुखेन याचितम् । तच्च भवता मिथिलागताय रामाय प्रेषितम् । ततश्चास्मदीयतपःप्रभावप्रचोदितबुद्धिना माल्यवता प्रोत्साहितस्य जामदग्न्यस्य हस्ताद्वैष्णवं धनुरप्यानीय दापितम् । यच्चान्यदपेक्षितं तत्सर्वं मया संकल्पेनैव साधितम् । इदानीमेतावदवशिष्टम् । मायाविनो राक्षसा भवन्ति । यथा रामस्तदीयमायावशंवदो न भविष्यति तथा प्रत्यायनं भवेदिति । (परिक्रम्यावलोक्य च ।)

अयं रामः कामप्रतिमतनुसौन्दर्यगरिम-
श्रिया नेत्रानन्दं जनयति जनानां जडधियाम् ।
चिरादन्तश्चेतःपरिचितचिदानन्दपरम-
श्रिया ब्रह्मानन्दं मम मनसि नित्यं प्रथयति ॥ ८ ॥

(रामस्याग्रतोऽवतरणं नाटयति ।)

---

काराय तत्परिहाराय । अत्र कार्यग्रहणरूपमादानं नाम संध्यङ्गमुक्तम् । सम्यग्विभाव्य निपुणं चिन्तयित्वा ॥ **यदिति** । मया यद्यातुधानवधादिकम् । आदिशब्दाद्वालिवधसंग्रहः । अधिष्ठितं कर्तव्यत्वेनाध्यवसितम् ॥७॥ भवतो विदितम् । विदितमेव खल्वित्यर्थः । अस्मदीयतपःप्रभावेन प्रचोदितबुद्धिना प्रेरितबुद्धिना । संकल्पेनैव मनोव्यापारेणैव । तथा प्रत्यायनं तथा ते प्रत्ययो भवेदिति विश्वामित्रेण संदिष्टमिति संबन्धः । **अयमिति** । अयं रामः कामप्रतिमया मन्मथतुल्यया तनुसौन्दर्यगरिमश्रिया विग्रहसौभाग्यसमुदायसमृद्ध्या जडधियां जनानामपि नेत्रानन्दं जनयति । अयं रामो ममलन्तश्चेतसा योगसामर्थ्या प्रत्यक्प्रवणेन मनसा चिरात्परिचितस्य समाधिविषयीकृतस्य चिदानन्दस्य स्वप्रकाशानन्दस्य परमश्रिया निरतिशयसमृद्ध्या ब्रह्मानन्दमानन्दवल्लयाम् 'यतो वाचो निवर्तन्ते' इत्यादिनोपपादितं वाङ्मनसागोचरमात्मानुभवानन्दं प्रथयति विस्तारयति । योगदशानुभूतानन्दसमृद्ध्या सह मुक्तिदशाभाविसाक्षात्कारानन्दं जनय-

**रामः**—(ससंभ्रममुत्थाय ।) भगवन्, अभिवादये ।

**अगस्त्यः**—अप्रतिहतास्ते मनोरथाः सिध्यन्ति ।

(उपविशतः ।)

**रामः**—अहो महान्प्रसादः । यत्स्वयमेव भगवानागत्य मामनुगृह्णाति ।

**अगस्त्यः**—किमन्यदीयं कार्यम् । अस्मदीयतपोविघ्नकारिणामेव वधे प्रवृत्तोऽसि । ते च मायाविनः । अतस्तेषां मायाबलं ज्ञात्वा तद्विजये प्रवर्तितव्यम् ।

मायाबलमविज्ञाय महाबल मनागपि ।
मायाविनं प्रति स्पर्धां मनसापि न चिन्तयेत् ॥ ९ ॥

अतो ददामि ते दिव्यं चक्षुः । (कमण्डलूदकेन नेत्रे परिमार्जयति ।)

**रामः**—हन्त, लङ्कावृत्तान्तः प्रत्यक्षं प्रतिभाति ।

**अगस्त्यः**—किं पश्यसि ।

**रामः**—रावणो राक्षसराजः सर्वप्रकृतिभिः परिवृतो मन्त्रयते ।

**रावणः**—मातामह मातामह, किमत्र कृत्यम् ।

**माल्यवान्**—किमत्र कृत्यम् ।

त्वया यद्यत्कृत्यं कपटविधिना तत्तदखिलं
प्रयुक्तं दुर्दैवादहह विपरीतं परिणतम् ।
महावीरो वाली तव च परमं पौरुषबलं
जयार्थी युद्धाय त्वरितमभियातो विनिहतः ॥ १० ॥

वयं तु रामस्याग्रतः स्थातुमपि न शक्ताः । यतः ।

---

तीत्यर्थः ॥ ८ ॥ **मायाबलमिति** । महाबल राम, मायाविनं प्रति मायाविना सह स्पर्धां विरोधं मनागपि स्वल्पमपि न चिन्तयेच्चिन्तयितुं न युक्तम् । अर्हे लिङ् ॥ ९ ॥ **अत इति** । दिव्यं विप्रकृष्टार्थदर्शनक्षमम् ॥ किं पश्यसि । त्वया दृश्यमानो लङ्कावृत्तान्तः क इत्यर्थः ॥ 'रावणः' इत्यारभ्य 'ननु पुरुषधर्मो बहुमतः' इत्यन्तो लङ्कावृत्तान्तः । सर्वप्रकृतिभिरमात्यसेनापालादिभिः । मन्त्रयते कर्तव्यविषये गुप्तं भाषते । 'मत्रि गुप्तभाषणे' इति चुरादिः ॥ मातामहेत्यस्य संभ्रमाद्विरुक्तिः ॥ **त्वयेति** । त्वया यद्यत्कृत्यं कपटविधिना वञ्चनोपायेन प्रयुक्तमनुष्ठितं तत्तदखिलं दुर्दैवाद्दुर्भाग्याद्विपरीतं परिणतं संवृत्तम् । विराधव्यापारादिको रामवधाय प्रयुक्तो विराधादिवधस्यैव हेतुरभूदिति भावः । तव परमं पौरुषबलं तथाविधबलभूतो युद्धायाभियातस्त्वरितं विनि-

अस्माकमपि लोके द्वावप्रकम्प्यौ महाबलौ ।
राजा वानरवीराणां रामश्च क्षत्रियान्तकः ॥ ११ ॥

तयोरपि रामो विजेता । अवधारितमेव पूर्वमस्माभिर्यो वालिनं हन्ति हता वयं च तेनैवेति । परं तु पुनरप्येकवारं तूष्णीं दण्डः प्रयोज्यः फलं तु दैवायत्तम् । प्रकाशदण्डस्तु रामे न प्रसरतीति सिद्धमेव ।

**रावणः**—तत्कथ्यतां यत्ते मनसि वर्तते ।

**माल्यवान्**—इदानीमेव मे चारैरावेदितम् । ऋष्यमूके रामः कतिपयैरेव वानरैः परिचर्यमाणः प्रतिवसति । लक्ष्मणस्तु सुग्रीवपट्टाभिषेकाय किष्किन्धां प्रविष्टः । स च कतिपयैर्दिवसै रामसकाशमागमिष्यति । विभीषणः पुनर्मासचतुष्टयं सुग्रीवसकाशे वत्स्यतीति । इदानीमन्योन्यविप्रयुक्तौ रामलक्ष्मणौ ।

परस्परविनाभावे परस्परसहाययोः ।
छद्मदण्डप्रयोगश्चेत्सफलो भविता तयोः ॥ १२ ॥

**रावणः**—कीदृशः ।

**माल्यवान्**—यदा तावल्लक्ष्मणः सुग्रीवसकाशादृष्यमूकमागच्छति तदा मध्येमार्गमिन्द्रजिता लक्ष्मणस्याग्रतो मायासीतायाः शिरश्छेदः कर्तव्यः । तदा लक्ष्मणो मुहूर्तं मोहमापत्स्यते सङ्ग्रामप्रयोजननिवृत्त्या निरुत्साहो विषण्णश्च संपत्स्यते । तदानीमिन्द्रजिता मुहूर्ताद्रामो लक्ष्मणश्च जेतव्यः । अतिधीरस्यापि पुरुषस्य स्वजनविषये

---

हतः ॥ १० ॥ **अस्माकमिति** । वानराणां राजा वाली । क्षत्रियान्तको रामः परशुरामः ॥ ११ ॥ एकवारमेकस्मिन्नवसरे । 'निवहावसरौ वारौ' इत्यमरः । अत्यन्तसंयोगे द्वितीया । सकृदित्यर्थः । तूष्णींदण्डो वञ्चनात्मको वधोपायः । दैवायत्तं भाग्याधीनम् । प्रकाशदण्डस्तु सेनया प्रकटाभियानेन युद्धरूपः ॥ चारैर्दूतैरावेदितमाह—'ऋष्यमूके' इत्यादिना 'वत्स्यति' इत्यन्तेन । विप्रयुक्तौ विश्लिष्टौ । **परस्परेति** । परस्परसहाययोस्तयोः परस्परविनाभावे विश्लेषे सति च्छद्मदण्डस्य प्रयोगोऽनुष्ठानं चेत्सफलो भविता भविष्यति । भवतेर्लुट् ॥ १२ ॥ कीदृशः कथंभूतश्छद्मदण्ड इत्यनुषङ्गः ॥ छद्मदण्डप्रकारमाह—'यदा तावत्' इत्यादिना 'जेतव्यः' इत्यन्तेन । मोहमापत्स्यते मूर्च्छां प्राप्स्यति । सङ्ग्रामप्रयोजनस्य सीतावाप्तिरूपस्य निवृत्त्या ध्वंसनेन । संपत्स्यते भविष्यति । स्वजनविषये बन्धुविषये । अस्य च विनिपा-

आकस्मिकोपसंपन्ने विनिपातेऽतिदारुणे ।
अङ्गारे वाङ्घ्रिणाक्रान्ते जायते विकलं मनः ॥ १३ ॥

त्वया च विद्युज्जिह्वमायानिर्मितं सीताशिरो रामस्याग्रतो निक्षेप्तव्यम् । ततः सोऽपि मोहमापत्स्यते । ततः प्रागेव समाश्वासादविलम्बेन जेतव्यः ।

**रावणः**—यद्यपि युक्तं त्वयाभिहितम्, इदं तु संभाव्यते । कदाचित्प्रत्यक्षापराधद्विगुणितकोपौ तदवस्थधैर्यौ रामलक्ष्मणौ भवेतां तदा तत्संनिधानमनर्थहेतुरेव ।

**माल्यवान्**—तदा युद्धं कर्तव्यमस्माभिस्तदर्थं च सर्वं राक्षसबलं भवन्तमिन्द्रजितं चानुगच्छतु । कुम्भकर्णश्च प्रबोधयितव्यः ।

**रावणः**—किं सर्वविनाशायोपायं चिन्तयसि । सर्वथा रामलक्ष्मणसंनिधानमस्माभिः परिहरणीयमेव ।

**माल्यवान्**—क्व वा गूढप्रदेशे निलीनो भवितुमिच्छसि सीतापहारनिमित्ते महावैरे जाग्रति ।

मातृगर्भं प्रविष्टानामपि नः सर्वथा पुनः ।
रामरूपमहामृत्योर्न मोक्ष इति मे मनः ॥ १४ ॥

(औदासीन्यमवलम्ब्य ।) कुत्सितमरणापेक्षया वीरधर्मेण मृत्युः श्लाघ्यः । दण्ड एव शरणमस्माकम् । अत्र च

---

तेऽन्वयः । **आकस्मिकेति** । विनिपात आकस्मिकोपसंपन्नेऽकाण्ड एव प्राप्ते सति । अङ्गारेऽङ्घ्रिणा पादेनाक्रान्ते वाक्रान्त इव । 'वा स्याद्विकल्पोपमयोः' इत्यमरः । अतिधीरस्यापि पुरुषस्य मनो विकलं धैर्यशून्यं जायते भवति ॥ १३ ॥ विद्युज्जिह्वस्य विद्युज्जिह्वाख्यस्य मायया वञ्चनशक्त्या निर्मितं सृष्टं निक्षेप्तव्यं निधातव्यम् । समाश्वासात्प्रागेवेत्यन्वयः । प्रत्यक्षापराधेन चाक्षुषेण सीताशिरोहरणरूपानिष्टाचरणेन । प्रत्यक्षेत्यनेन सीतापहारव्यावृत्तिः । द्विगुणितकोपात्पहारकोपादप्यधिककोपौ । तदवस्थधैर्यौ यथावस्थितधैर्यौ तयोः संनिधानं सामीप्यम् ॥ राक्षसबलं राक्षससेना । 'सैन्यास्थिरूपरेतःशक्तिस्थौल्येषु चेद्बलं क्लीबे' इति रत्नमाला । कुम्भकर्ण इति । सुप्त इति शेषः ॥ **क्वेति** । निलीनः प्रच्छन्नः । जाग्रति प्रकटे सति । अस्य चोत्तरत्रान्वयः । **मातृगर्भमिति** । महामृत्योर्मृत्योरपि मृत्योर्मोक्षो बहिर्निर्गमनम् ॥ ४ ॥ औदासीन्यं दण्डानुष्ठानशून्यताम् । वीराणां धर्मेण श्रेयःसाधनेन शत्रुकृतप्रहारेण ।

तूष्णींदण्डः प्रयोक्तव्यस्तस्य सिद्धौ ध्रुवो जयः ।
प्रकाशदण्डे मृत्युश्च यशः श्रेयश्च शाश्वतम् ॥ १५ ॥

औदासीन्यं तु मृत्युरश्रेयश्चापवादः । अतो यथास्मदभिहितमनुष्ठीयताम् ।

जयो वा मृत्युर्वा भवतु नियतं मे मतमिदं
रिपावौदासीन्यं मनसि न समाधानमयते ।
अनारम्भे नित्या विपदितरथा चेदनियता
तदानीमुद्योगो ननु पुरुषधर्मो बहुमतः ॥ १६ ॥

**अगस्त्यः**—सर्वं भगवता प्रत्यक्षमवगतम् । इतः परं राक्षसचेष्टिते विश्वासो विषादश्च मा भूत् । अप्रतिहतधैर्यो विजयस्व राक्षसान् । आदित्यहृदयं च ते विजयप्रदमुपदिशामि । (उपदेशं नाटयति ।)

**रामः**—अनुगृहीतोऽस्मि । वर्षाकाले व्यतीते राक्षसानामुन्मूलनं मया संकल्पितम्, तत्कतिपयैरेव दिवसैर्भविष्यति प्रियं मे । किं तु लक्ष्मणः कथं राक्षसचेष्टितं विज्ञास्यतीति पर्याकुलं मे हृदयम् ।

**अगस्त्यः**—लक्ष्मणविभीषणयोरविनाभावेन भवितव्यम् । वि-

---

मृत्युर्मरणम् । अत्र च दण्डसामान्ये च । **तूष्णींदण्ड इति** । तस्य सिद्धौ निष्पत्तौ । दण्डगततूष्णींभावे सिद्धे सतीत्यर्थः । परैरज्ञाते सतीति यावत् । प्रकाशदण्डे युद्धे सति मृत्युश्च मरणं च, यशो वीरधर्मस्थैर्यप्रथा, श्रेयश्च वीरलोकप्राप्तिरूपेष्टार्थसिद्धिश्च, शाश्वतम् । निश्चितमित्यर्थः । शाश्वतश्च शाश्वतं च शाश्वतं चेति सहोक्तौ 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इत्येकशेषैकवद्भावौ ॥ १५ ॥ औदासीन्ये तु दण्डसामान्यप्रयोगे तु मृत्युः कुत्सितमरणं अश्रेयो वीरलोकविरहश्च । सीतास्तेयपापस्य वधेन निष्कृतावपि वीरलोको न सिध्यतीति भावः । यथास्मदभिहितं मदुक्तम् । दण्डवधप्रयोगमनतिक्रम्य । पदार्थानतिवृत्तावव्ययीभावः । **जय इति** । नियतमन्यतरदवर्जनीयम् । इदं दण्डद्वयानुष्ठानं मे मतं ममेष्टम् । रिपौ शत्रौ विषय औदासीन्यं दण्डाननुष्ठानं कर्तृ समाधानं संशयनिवृत्तिं कर्म मनसि नायते न प्राप्नोति । अनारम्भे दण्डाननुष्ठानरूपौदासीन्ये विपन्मृतिर्नित्या निश्चिता । इतरथा दण्डप्रयोगे तु विपदनियता संदिग्धा । तदानीं दण्डप्रयोगस्यानियतविपत्कत्वे पुरुषधर्मे उद्योगो वीरपुरुषस्वभावभूतो दण्डप्रयोगप्रयत्नो बहुमतो ननु श्लाघ्य एव । एवं लङ्कावृत्तान्तः प्रत्यक्षितः ॥ १६ ॥ विश्वासो याथार्थ्यज्ञानम् । विजयस्वाभिभूयाः । 'विपराभ्यां जेः' इत्यात्मनेपदम् । आदित्यहृदयमादित्यहृदयाख्यं सूर्यस्तोत्रम् ॥ उन्मूलनं मूलेन सह ध्वंसनम् ॥ अविनाभावेन नियतसंनिकर्षेण । सर्वं राक्षसमायाचेष्टितम् । राक्षसी रक्षःसंब-

भीषण एव सर्वमावेदयिष्यति । तस्य राक्षसी माया राक्षसजातिवशेन प्रत्यक्षैव । अतः क्षणमात्रं विभीषणेन लक्ष्मणो न मोक्तव्यः । वानरबलं च सर्वं संनद्धमेव तिष्ठतु । तत्किल महता राक्षसबलेन योद्धुं भूलोकमवतीर्णं देवतानीकमेव । तदेतत्सर्वमद्यैव लक्ष्मणाय सुग्रीवविभीषणाभ्यां च संदिश्यताम् । अहं च निजाश्रमं गमिष्यामि । (उत्थाय सहर्षम् ।) हन्त, त्वयेदानीम्

लङ्काद्वीपगतं निशाचरकुलं कृत्स्नं पराभूयते
दिष्ट्या सत्वरमस्मदीयतपसो विघ्नो विनिर्धूयते ।
उल्लासो मनसीशितुर्दिविषदामुच्चैरुपाधीयते
सम्यक्पालनशीलनेन जगतां सौख्यं समास्थीयते ॥ १७ ॥

(कतिचित्पदानि गत्वा समन्तादवलोक्य ।) हन्त भोः, कतिपयदिवसैरस्मिन्प्रदेशे गर्जतां वानरेन्द्राणामट्टहासा दिशो विदिशश्च विदारयिष्यन्ति ।

बिभ्यद्भूपरिरम्भिकौणपवधूनिर्भिन्नगर्भार्भक-
भ्रंशोद्भावितभीमभावगरिमन्यग्भूतदम्भोलयः ।
यज्ञभ्रेषकृदुद्भवप्रविलयप्रारम्भसंभावित-
स्वर्भोगप्रतिलम्भसंभृततमःसंभारजम्भारयः ॥ १८ ॥

---

न्धिनी । राक्षसजातिवशेन राक्षसत्वानुरोधेन ।'नतु राक्षसचेष्टितः' इति राक्षसकृत्यस्यैव प्रतिषेधात् । संनद्धं सज्जम् । 'संनद्धौ सज्जवर्मितौ' इति रत्नमाला । भूलोकमवतीर्णं वानरात्मना भूमिं प्राप्तम् । देवतानीकं देवसेनाचक्रम् । 'चक्रं चानीकमस्त्रियाम्' इत्यमरः । संदिश्यतां वाचिकेन बोध्यताम् । हन्तेति हर्षे । त्वयेदानीमित्यस्य चोत्तरत्रान्वयः । **लङ्केति** । त्वया लङ्काद्वीपगतं कृत्स्नं निशाचरकुलं पराभूयते शीघ्रमेव जेष्यते । वर्तमानसामीप्ये लट् । एवमुत्तरत्रापि । दिष्ट्येत्यानन्दे । विनिर्धूयते नाशयिष्यते । दिविषदामीशितुरिन्द्रस्य मनस्युल्लासो हर्ष उच्चैरधिकमुपाधीयते जनयिष्यते । उपाधानमिह जननम् । सम्यक्पालनं विधिवद्रक्षणं शीलनं स्वभावो यस्य स तथोक्तस्तेन त्वय जगतां सौख्यं समास्थीयते कर्तव्यत्वेनाधिष्ठास्यते । अत्र सिद्धवद्भाविश्रेयःकथनरूपं प्ररोचनं नाम विमर्शसंध्यङ्गमुक्तम् ॥ १७ ॥ अट्टहासा महान्तो हासाः । 'अट्टहासो महान्हासो मुखरागादिकृत्' इत्यभिधानात् । दिशः प्राच्यादयः, विदिश आग्नेय्यादयः, ता विदारयिष्यन्ति भेत्स्यन्ति । **बिभ्यदिति** । अर्धद्वयोक्तं विशेषणद्वयं पूर्वोक्ताट्टहासविशेषणम् । बिभ्यतीनामतएव भूपरिरम्भिणीनां भूमौ पतितानां कौणपवधूनां राक्षसीनां निर्भिन्नेषु विदीर्णेषु गर्भेषूदरान्तर्देशेषु स्थितानामर्भकाणां बालानां भ्रंशेनाधःपातेनोद्भावितस्योपपादितस्य भीमभावस्य भयंकरत्वस्य गरिम्णा-

इदं च ते लङ्काकिष्किन्धयोरन्तरालं निशाचरशवैरलंकरिष्यति ।

उद्भूतप्रतिभूपभूमविभुताविभ्रंशकृद्भावना-
माबिभ्रद्भवदीयनिर्भरभुजासंभारसंभावितम् ।
उद्यद्भैरवभावभावितभवद्भ्रूभङ्गभङ्गीमिल-
द्गम्भीरोद्भटभूरिभीमरणितप्राग्भारगर्भं धनुः ॥ १९ ॥

(इति निष्क्रान्ताः सर्वे ।)

**इति महाकविश्रीभवभूतिविरचिते महावीरचरिते षष्ठोऽङ्कः ।**

---

तिशयेन न्यग्भूतोऽधरीभूतो दम्भोलिरशनिशब्दो यैस्ते तथोक्ताः । यज्ञभ्रेषकृतां यज्ञविघ्नकराणां रक्षोर्भकाणाम् । 'भ्रेषो भ्रंशो यथोचितात्' इत्यमरः । उद्भव एवोत्पत्तिदशायामेव प्रविलयप्रारम्भेण मरणारम्भेण संभावितेन स्वर्भोगप्रतिलम्भेन स्वर्गसुखप्राप्त्या संभृतः संपादितस्तमःसंभारः शोकातिशयो यस्य स तथोक्तस्तथा-विधो जम्भारिरिन्द्रो यैस्ते तथोक्ताः । 'तमो राहौ गुणे ध्वान्ते शोके' इति रत्नमाला । यज्ञविघ्नकारिणामपि स्वर्गसुखं जातमितीन्द्रस्य दुःखमभूदिति भावः । एवंविधा अट्टहासा दिशो विदिशश्च विदारयिष्यन्तीति संबन्धः ॥ १८ ॥ **इदं चेति** । इदं च ते धनु-रित्यन्वयः । **उद्भूतेति** । उद्भूताया उत्पन्नायाः प्रतिभूपानां प्रतिपक्षिणां भूम्नः सङ्घस्य विभुतायाः प्रभुत्वस्य विभ्रंशकृद्भावनां नाशकरीं भावनां संस्कारमाबिभ्रद्धानं भवदीयाया निर्भरायाः सामर्थ्यप्रचुराया भुजाया बाह्वोः संभारेण धारणसामर्थ्याति-शयेन संभावितं धृतम् । 'दोर्दोषा च भुजा भुजः' इति द्विरूपकोशः । उद्यतोद्गच्छता भैरवभावेन भयंकरत्वेन सह भावितयोत्पादितया भवद्भ्रूभङ्गभङ्ग्या त्वदीयभ्रूभेदप्र-कारेण । 'भङ्गी प्रकारे तु' इति रत्नमाला । मिलद्युक्तम् । गम्भीरो घन उद्भटो दीर्घो भूरि वर्धमानो भीमरणितस्य भयंकरस्य टङ्कारस्य प्राग्भारः समूहो गर्भे यस्य तत्तथोक्तमिदं ते धनुर्निशाचरशवैरन्तरालमलंकरिष्यतीति संबन्धः ॥ १९ ॥

यो महीसारवास्तव्यो वाधूलो वीरराघवः ।
स महावीरचरिते षष्ठमङ्कं व्यवीवरत् ॥

**इत्यण्णाप्पङ्गार्यनामधेयेन वाधूलवीरराघवेण विरचितायां महा-वीरचरितव्याख्यायां भावप्रद्योतिनीसमाख्यायां षष्ठोऽङ्कः ॥**

---

## सप्तमोऽङ्कः ।

(ततः प्रविशत्याकाशयानेन प्रहृष्ट इन्द्रो दशरथश्च ।)

**इन्द्रः**—महाराज, चिरात्परिपूर्णोऽयमस्माकं मनोरथः । अयं किल तवात्मजो रामचन्द्रः

हत्वा हन्त दशाननं सतनयं सभ्रातरं सान्वयं
हित्वा स्त्रैणमहो निहत्य तरसा सर्वं च सेनागणम् ।
दत्त्वा तत्र विभीषणाय नमते लङ्काधिराज्यश्रियं
तत्त्वाख्यायिनि जातवेदसि ततः सीतां प्रियामादित ॥ १ ॥

**दशरथः**—अहो, भगवता हव्यवाहेन महान्प्रसादः प्रदर्शितः । यदात्मानं प्रविष्टामपि तदवस्थामेव सीतामङ्केनादाय सुग्रीवसमक्षं सुपरिशुद्धामावेद्य रामाय समर्पितवान् ।

**इन्द्रः**—जगतामुपकारी रामचन्द्रः । कस्तस्य प्रतिकूले कर्मणि प्रवर्ततेऽनुकूले वा न प्रवर्तते । तदीयपौरुषावष्टम्भेन हि सर्वेलोकाः कृतार्थाः ।

---

इदानीं कविः सप्तमाङ्केन निर्वहणसंधिं प्रस्तौति । तत्स्वरूपं च 'बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् । ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत् ॥ फलाप्तिकार्यानुगुण्यादङ्गान्यस्य चतुर्दश । संधिर्विरोधो ग्रथनं निर्णयः परिभाषणम् ॥ प्रसादानन्दसमयाः कृतिर्भाषोपगूहने । पूर्वभावोपसंहारौ प्रशस्तिश्च चतुर्दश ॥' इति । अत्र वसिष्ठव्यापाररूपस्य फलनिर्वाहकात्मकस्य कार्यस्य, सीतया सह रामपट्टाभिषेकात्मकफलागमस्य चार्थप्रकृतेर्वर्णनान्निर्वहणसंधिः । अङ्गस्वरूपनिरूपणं तु तत्तदवसरेषु वक्ष्यते । तत्र विष्कम्भकमाह—**ततः प्रविशतीत्यादिना** । आकाशयानेन । विमानेनेत्यर्थः । गगनगमनेन वा । मनोरथोऽभिलाषः परिपूर्णः । रावणवधादिरूपविशिष्टसीमा जात इत्यर्थः । **हत्वेति** । हन्तेति हर्षे । सान्वयं सवंशम् । स्त्रैणं हित्वा स्त्रीसमूहं त्यक्त्वा । हननक्रियायां कर्मतया परिहृत्येत्यर्थः । तरसा वेगेन । ततस्तदनन्तरं जातवेदसि वह्नौ तत्त्वाख्यायिनि सति सीतापरिशुद्धिलक्षणसत्यार्थवादिनि सति ततोऽग्नेः सकाशात्प्रियां सीतामादित स्वीकृतवान् । आङ्पूर्वाद्ददातेर्लुङि सिचो लोपः ॥ १ ॥ हव्यवाहेन वह्निना । प्रसादोऽनुग्रहः । आत्मानं स्वम् । वह्निपरामर्शयमात्मञ्शब्दः । तदस्या सैवावस्था यस्याः सा तथोक्ता तां यथापूर्वं स्थिताम् ॥ **जगतामिति** । चन्द्र इव रामो रामचन्द्रः । प्रतिकूलेऽनिष्टकरे कः प्रवर्तते । कोऽपि न प्रवर्तत एवेत्यर्थः । अनुकूले वा को न प्रवर्तते । सर्वोऽपि प्रवर्तत एवेत्यर्थः । अत्र कार्यमार्गणात्मको विरोधो नाम संध्यङ्गमुक्तम् । तदीयपौरुषावष्टम्भेन

**दशरथः**—इत्थं भवन्तो रामस्य पौरुषातिशयं स्तुवन्ति । मम त्वेतावदेव बहुमतं यदरण्यवासात्प्रतिनिवृत्तः सीतालक्ष्मणाभ्यां सह क्षेमेण पुनरयोध्यामागत इति । अनेन हि धर्मैकप्रधानेन

पुरा तत्कैकेयीवचनपरिपाटीपरवता
पुरंध्रीसध्रीचा गहनपदमध्यासितमितः ।
पुनः प्राप्तं दृष्ट्वा कुशलितमयोध्यापुरमिमं
पुनर्जातं मन्ये पुरुषपरिणामं सुचरितम् ॥ २ ॥

**इन्द्रः**—रामचन्द्रानुभावेन त्रयो लोकाः पुनर्जाताः । अस्य प्रभावमजानन्निव व्यवहरसि । पितापुत्रभावो हि पुत्रस्य महिमानं गोपयति ।

(नेपथ्ये ।)

भो भोः सामाजिकाः, त्वर्यतां त्वर्यतां रामचन्द्रस्य राज्याभिषेकाय । अयं किल रामचन्द्रपट्टाभिषेकोत्सवदिदृक्षया स्वर्गलोकादवतीर्य साकेतनगरसंनिकृष्टे नभोमध्ये प्रतीक्षते

महेन्द्रेण प्राप्तप्रणयभरमर्धासनगतो
महाभागः कामं सुरपरिषदुद्गीतविभवः ।

---

रामपराक्रमाश्रयेण ॥ **इत्थमिति** । पौरुषातिशयं बलाद्यतिशयम् । एतावदेव वक्ष्यमाणमियदेव । अरण्यवासाद्वनवासं प्राप्य । ल्यब्लोपे पञ्चमी । क्षेमेण सीतालक्ष्मणात्मकलब्धांशरक्षणेन सह । अनेन रामेण । धर्म एकः केवलः प्रधानमुद्देश्यं यस्य स तथोक्तस्तथाविधेन । एकशब्दो राज्यसुखादिकं व्यवच्छिनत्ति । अस्य चोत्तरत्रान्वयः । **पुरेति** । तत्कैकेय्यास्तादृश्याः कैकेय्या वचनपरिपाट्या वाक्यानुक्रमेण । 'परिपाटी अनुक्रमः' इत्यमरः । परवता तदधीनेन । पुरंध्र्या कुटुम्बिन्या सीतया सहाञ्चति गच्छतीति पुरंध्रीसध्र्यङ् तेन । 'स्यात्तु कुटुम्बिनी पुरंध्री' इत्यमरः । 'सहस्य सध्रिः' इति सध्र्यादेशः । सीतासहायेनेत्यर्थः । अनेन रामेणेतोऽयोध्यातो गहनपदं वनस्थानमध्यासितमध्युषितम् । 'अधिशीङ्स्थासां कर्म' इति सकर्मकत्वम् । इमं रामं कुशलिनं सन्तं पुनरयोध्यापुरं प्राप्तं दृष्ट्वा पुरुषपरिणामं पुरुषवदात्मना परिणतं सुचरितं सर्वलोकसुकृतसमुदायं पुनर्जातं मन्ये पुनरवतीर्णं संभावयामि । अन्वादेशस्याविवक्षणादिममित्यत्र एनादेशाभावः ॥ २ ॥ व्यवहरसि वदसि । पितापुत्रभावस्तव रामस्य च जन्यजनकभावः संबन्धो महिमानं रामस्य माहात्म्यं गोपयति संवृणोति । 'गुप गोपने' । अत्र बीजोपगूहनं नाम संध्यङ्गमुक्तम् ॥ समाजं रक्षन्तीति सामाजिकाः । 'रक्षति' इति ठक् । रामचन्द्रपट्टाभिषेकाय त्वर्यतामित्यर्थः । दिदृक्षया दर्शनेच्छया । साकेतनगरमयोध्यानगरं तत्संनिकृष्टे समीपगते प्रतीक्षते प्रतिपालयति । **महेन्द्रेणेति** । प्राप्तः प्रणयभरः प्रेमातिशयो यस्मिन्कर्मणि तद्यथा भवति तथा अर्धास-

महानन्दोद्रेकप्लवभरपराधीनहृदयो
महाराजः साक्षाद्द्युमणिरिव दीप्त्या दशरथः ॥ ३ ॥

**इन्द्रः**—भगवानरुन्धतीपतिः प्रकृतिवर्गं त्वरयित्वा रत्नमये पीठे सीतासहितं रामचन्द्रं निवेशयति । तत्प्रस्तूयन्तां मङ्गलानि ।

गन्धर्वा घनरागबन्धमधुरं गायन्तु कान्तस्वरं
गम्भीराभिनयप्रयोगचतुरा नृत्यन्तु रम्भादयः ।
दीप्तानि त्वरिताः किरन्तु परितः पुष्पाणि विद्याधरा
दिव्या दुन्दुभयो गभीरनिनदाः कुर्वन्तु कोलाहलम् ॥ ४ ॥

**दशरथः**—दिष्ट्या वसिष्ठादिभिः सीतासमेतो रामचन्द्रः सर्वेभ्यः सागरेभ्यः सर्वाभ्यो नदीभ्यश्च समानीतैः पुण्योदकैरभिषिक्तो दिव्यमाल्याम्बरधरो दिव्यगन्धैरनुलिप्तो दिव्याभरणैरलंकृतो दिव्येन किरीटेन विराजमानो दिव्यसिंहासनोपविष्टो दिव्यया राज्यलक्ष्म्या विराजते । सफलमद्य मे जातं चक्षुः ।

---

नगतस्तदीयसिंहासनसमांशगतः । आसनस्यार्धमर्धासनम् । 'अर्धं नपुंसकम्' इति समासः । महाभागोऽतिशयितभाग्यवान् । सुरपरिषदा देवगोष्ठ्योद्गीतविभव उच्चैर्गीतैश्वर्यः । महानन्दस्य मोक्षसदृशानन्दस्य । 'मुक्तिर्मोक्षो महानन्दः' इति निघण्टुः । उद्रेको वृद्धिस्तस्य प्लवः प्रवाहस्तस्य भरेणातिशयेन पराधीनहृदयो महाराजः साक्षात्प्रत्यक्षभूतो दीप्त्या द्युमणिरिव स्थितो दशरथः नभोमध्ये प्रतीक्षत इति संबन्धः । अत्र कार्योपक्षेपणरूपं प्रथनं नाम संध्यङ्गमुक्तम् ॥ ३ ॥ अरुन्धतीपतिर्वसिष्ठः प्रकृतिवर्गममात्यादिसमूहं त्वरयित्वा । रत्नमये रत्नप्रचुरे । निवेशयत्युपवेशयति । तत्तस्मान्मङ्गलानि विघ्ननिवर्तकानि चिकीर्षितसंपादकानि च गाननाट्यादीनि प्रस्तूयन्तां प्रक्रियन्ताम् । **गन्धर्वा इति** । घनैर्गम्भीरै रागबन्धैः सुनिर्बन्धनरागैर्मधुरं यथा तथा । यद्वा घनरागा नाम नाट्यगौलवरालिप्रभृतयस्तेष्वभ्यर्हितत्वात्प्रथमो नाट्यरागस्तेन मधुरं यथा तथा । कान्तस्वरं मनोज्ञस्वरं च यथा तथा गन्धर्वा गायन्तु । गम्भीरस्य निपुणोन्नेयभावरससूचकस्याभिनयस्य सात्त्विकाङ्गिकाहार्यादिकस्य चतुर्विधस्य रसभावव्यञ्जकव्यापारस्य प्रयोगेऽनुष्ठाने चतुरा निपुणा रम्भादयोऽप्सरसो नृत्यन्तु । विद्याधरास्त्वरिता वेगयुक्ताः सन्तो दीप्तानि पुष्पाणि किरन्तु वर्षन्तु । दिव्याः स्वर्गस्था दुन्दुभयो भेर्यो गम्भीरनिनदाः सन्तो घनध्वनयः सन्तः कोलाहलं कलकलं कुर्वन्तु । अत्र बीजानुगुणकार्यप्रख्यापनान्निर्णयो नाम संध्यङ्गमुक्तम् । यथोक्तम्—'बीजानुगुणकार्यस्य प्रख्यापनं निर्णयः' इति ॥ ४ ॥ दिष्ट्येत्यानन्दे । वसिष्ठादिभिरित्यादिशब्देन विश्वामित्रवामदेवादीनां संग्रहः । दिव्यमाल्येत्यादेः स्पष्टोऽर्थः । अत्र वाञ्छि-

**इन्द्रः**—आचार इत्युत्सव इति रामचन्द्रस्य पट्टाभिषेको बहुमतः । न पुनरस्याभिषेकेण राज्याधिकारः क्रियते । अनेन ह्यवलम्बितानामपि राज्यं करस्थम् ।

अहं तावदरीन्हत्वा स्वाराज्ये विनिवेशितः ।
विभीषणश्च धर्मात्मा लङ्काराज्येऽभिषेचितः ॥ ५ ॥
सुग्रीवः किल किष्किन्धाराज्यलक्ष्मीमवापितः ।
असाध्यमिदमत्यन्तमन्यस्य मनसापि वा ॥ ६ ॥

(नेपथ्ये कलकलः ।)

**इन्द्रः**—(पृष्ठतोऽवलोक्य ।) अहो, भगवानिन्दुमौलिर्ब्रह्मणा सह सत्वरमितश्चैवाभिवर्तते । प्रत्युद्गमनेनाराधयामः ।

(इति निष्क्रान्तौ ।)

**शुद्धविष्कम्भः ।**

---

(ततः प्रविशत्यभिषिक्तः सपरिवारो रामः सीता च वसिष्ठादयश्च ।)

**वसिष्ठः**—

आकल्पान्तमनन्तकोटिगुणितैरर्थैरनेकाध्वरै-
रानन्दं गमयन्नशेषविबुधान्दिव्यानदिव्यानपि ।
आत्मीयानुपलालयन्नविरतैरैश्वर्यविश्राणनै-
राशीर्वादपरम्परामनुभवन्नस्माकमास्तां भवान् ॥ ७ ॥

---

त्प्राप्तिरानन्दो नाम संध्यङ्गमुक्तम् ॥ **आचार इत्युत्सव इति** । शिष्टाचारोऽनुरोद्धव्यः, उत्सवश्चाप्रतिषेध्य इति हेतोः । पट्टाभिषेकः । राजान्तरस्येव पट्टाभिषेकेण राज्यस्वामित्वं न क्रियत इत्यर्थः । अनेन रामेणावलम्बितानां परिगृहीतानाम् । **अहं तावदिति** । प्रथममहं शत्रून्हत्वा स्वर्गराज्ये स्थापितः ॥ ५ ॥ **सुग्रीव इति** । अवापितः प्रापितः । द्विकर्मकमिदम् । अन्यस्य रामादन्यस्य मनसाप्यसाध्यम् । वाशब्दः करणान्तरं विकल्पयति । अत्र मिथोजल्पनरूपं परिभाषा नाम संध्यङ्गमुक्तम् ॥ ६ ॥ **आकल्पान्तमिति** । अनन्ताभिः कोटीभिर्गुणितैरावर्तितैरर्थैर्वित्तैः साधितैरनेकाध्वरैर्यागैर्दिव्यानिन्द्रादीनदिव्यान्भूमिष्ठानशेषविबुधान्समस्तदेवान् । देवान्भूदेवांश्चेत्यर्थः । आनन्दं गमयन्प्रापयन् । आत्मीयान्क्षत्रियानविरतैर्नित्यैरैश्वर्यविश्राणनैर्दानैरुपलालयन्पुत्रानिव प्रीणयन्नस्माकमाशीर्वादपरम्परामनुभवन्नाकल्पान्तं कल्पान्त-

**विश्वामित्रः—**

आलोकालोकशैलादविकलमवनीमात्मकीर्तिप्रकाशै-
  राशापालानुभावग्रसनगुरुतरैरञ्चितामादधानः ।
आज्ञामात्रादशेषानपि रिपुनृपतीनात्तगन्धानपास्य-
  न्नाचन्द्रार्कं धरित्र्यामनुभवतु भवानाधिराज्यप्रतिष्ठाम् ॥ ८ ॥

**रामः**—अनुगृहीतोऽस्मि ।

**सीता**—[1]परमत्थविण्णाणाणं मुणीणं वअणं ण विसंवदइ ।

( ततः प्रविशत्याकाशयानेन ब्रह्मणानुगम्यमानो महेश्वर इन्द्रदशरथौ च ।)

**इन्द्रः**—सखे महाराज, पश्य, पश्य सुहृद्भ्रातृभिर्यथोचितं सेव्यमानस्य सीतासमेतस्य रामचन्द्रस्य दर्शनीयताम् ।

शत्रुघ्नः शरदिन्दुबिम्बधवलं छत्रं दधाति स्वयं
  सुग्रीवश्च विभीषणश्च बिभृतः पार्श्वद्वये चामरे ।
सानन्दं व्यजनेन वीजयति च स्वैरं सुमित्रासुतः
  सुप्रीतो युवराज एष भरतः स्वीयोपचारे स्थितः ॥ ९ ॥

**दशरथः**—अहो ममानन्यसुलभं भाग्यम् । यदेतादृशं रामभद्रं पश्यामि ।

---

१. परमार्थविज्ञानानां मुनीनां वचनं न विसंवदति ।

---

पर्यन्तमास्ताम् । तिष्ठत्वित्यर्थः । आशिषि लोट् ॥ ७ ॥ **आलोकालोकेति** । आशापालानां दिक्पतीनामिन्द्रादीनामनुभावस्य प्रभावस्य ग्रसनेन तिरोधानेन गुरुतरैरभ्यधिकैरात्मकीर्तिप्रकाशैरवनीं भुवमालोकालोकशैलाल्लोकालोकशैलपर्यन्तमञ्चितामञ्चिताम् । 'अञ्चू विशेषणे' चुरादिः । आदधानः कुर्वाणः सन्नात्तगन्धानभिभूतानशेषानपि रिपून्नृपतीनाज्ञामात्रात् । न युद्धादित्यर्थः । अपास्यन्निरस्यन्धरित्र्यामाधिराज्यस्य सार्वभौमत्वस्य प्रतिष्ठां स्थैर्यं भवानाचन्द्रार्कमनुभवत्वित्याशिषि लोट् । अत्र लब्धस्थिरीकरणं कृतिर्नाम संध्यङ्गमुक्तम् ॥ ८ ॥ परमार्थविज्ञानानां यथार्थविषयज्ञानवताम् । न विसंवदत्यर्थशून्यं न भवति । ब्रह्मणा चतुर्मुखेन । महेश्वरो रुद्रः । सुहृदौ सुग्रीवविभीषणौ । भ्रातरः शत्रुघ्नादयः । यथोचितं यथायोग्यम् । दर्शनीयतां चारुताम् । **शत्रुघ्न इति** । चामरे बालव्यजनद्वयं बिभृतो धारयतः । बिभर्तेर्लटि तसो ङित्त्वाद्गुणाभावः । सुमित्रासुतो लक्ष्मणो व्यजनेन तालवृन्तेन वीजयति मन्दमारुतमुत्पादयति । युवा चासौ राजा च युवराजः । 'राजाहःसखिभ्यष्टच्' इति टच् । स्वीयोपचारे स्वानुरूपोपचारे स्थितस्तिष्ठति । अत्र पर्युपासनात्मकः प्रसादो नाम

(रामादयः सर्वे सत्वरमुत्थाय साष्टाङ्गं भूयोभूयः प्रणम्य महेश्वरं वैदिकस्तोत्रैराराध्य बद्धाञ्जलयस्तिष्ठन्ति ।)

**महेश्वरः**—(रामं प्रति ।) सुप्रीता वयं भवदीयचरिताद्भुतेन, यत्त्वया रक्षोमृत्युग्रस्तं जगज्जातमुज्जीवितम् ।

पुनर्जाता इमे लोकाः पुनर्जाता इमाः प्रजाः ।
पुनश्चैते त्रयो वेदाः पुनर्यज्ञादिकाः क्रियाः ॥ १० ॥

एतावता कालेन त्वया जगतामुपद्रवो निरासितः । अद्यप्रभृति परिपालने तवाधिकारः ।

एतावन्तं त्वया कालं युद्धवीरोऽवलम्बितः ।
धर्मदानदयावीरास्त्वामिदानीमुपस्थिताः ॥ ११ ॥

तद्भवान्वसिष्ठविश्वामित्रोपदिष्टमार्गेण लोकरक्षाध्वरे दीक्षितो भवतु ।

सर्वे सन्तु परस्परं सुमनसः सान्द्रप्रमोदा जनाः
संतुष्यन्तु समीहितप्रणयनैः संभाविताः साधवः ।
सद्यः सिद्धिमुपैतु सज्जनमनःसत्कार्यचिन्ता सदा
सायंप्रातरमी तवैव विजयं संप्रार्थयन्तां द्विजाः ॥ १२ ॥

---

संध्यङ्गमुक्तम् ॥ ९ ॥ अनन्यसुलभमन्येषां दुर्लभम् ॥ **सुप्रीता इति** । चरिताद्भुतेन चरितरूपेणाश्चर्येण । रक्षो रावण एव मृत्युस्तेन ग्रस्तमुज्जीवितं सप्राणीकृतम् । **पुनरिति** । पुनर्जाता लोकाः पातालभूस्स्वर्गादिभुवनानि । प्रजा जनाः । त्रयो वेदा ऋग्यजुःसामात्मकाः । पुनर्जाता इत्यनुषङ्गः । यज्ञादिका इत्यादिशब्देन दानहोमयोः पूर्तस्य च संग्रहः । अत्र प्राप्तकार्यानुमोदनमाभाषणं नाम संध्यङ्गमुक्तम् ॥ १० ॥ परिपालने इष्टप्रापणेऽधिकारः कर्तृभावः । **एतावन्तमिति** । एतावति काले नैरन्तर्येण युद्धवीरो युद्धप्रयोजकवीररसस्त्वयावलम्बितः स्वीकृतः । कालमित्यत्यन्तसंयोगे द्वितीया । धर्मः शास्त्रैकावधेयश्रेयःसाधनम्, दानं दीनेभ्यो वित्तोत्सर्गः, दया परदुःखदुःखित्वम्, वीरः पूर्वोक्तवीररसश्च । त्वामुपस्थिता भूयिष्ठं प्राप्ताः । पूर्वं धर्मादीनां वीरोपसर्जनत्वम् । इतःपरं तु वीरस्य तदुपसर्जनत्वमित्यर्थः । पूर्वार्धे धर्माद्यनुक्तिस्तेषां वीरोपसर्जनव्यञ्जनार्थो । अत्र वीरस्य वीरेति चरमोक्तिस्तस्य धर्माद्युपसर्जनत्वव्यञ्जनार्था । धर्मादेः सदैव रामस्वरूपानुबन्धित्वात् । संबुध्यन्तं क्वचित्पठ्यते ॥ ११ ॥ लोकरक्षैवाध्वरो यागस्तत्र दीक्षितः संकल्पितः । **सर्वे इति** । जनाः परस्परं सुमनसः प्रियहितपरहृदयाः सान्द्रप्रमोदा घनप्रीतयश्च सन्तु । तत्र विशेषमाह—संतुष्यन्त्वित्यादिना । साधवः परोपकाररसिकाः समीहितस्याभीष्टस्य प्रणयनैः करणैः संभाविताः सत्कृताः सन्तः संतुष्यन्तु विशेषतो हर्षं भजन्तु । सज्जनमनसां सत्कार्यचिन्ता सत्कार्यचिकीर्षा सद्यः सिद्धिं उत्तरक्षण एव विषयसिद्धिं सदोपैतु ।

ब्रह्मा—

त्रैलोक्यकुशलं राम त्वया यत्नेन साधितम्।
सुखी भव चिरं जीव सर्वत्र विजयी भव ॥ १३ ॥

सौजन्यैकरसेन सान्द्रनिभृतस्नेहेन सौमित्रिणा
साकं कर्मसु सावधानमनसा सत्येन धर्मेण च।
सर्वानन्दविधायिसाधुचरितं सर्वात्मना साधय
सौराज्यातिशयेन सर्वसुजनश्लाघ्यो यशस्वी भव ॥ १४ ॥

भरतोऽपि यौवराज्याधिकृतः शत्रुघ्नेन सह तव यशः संपादयतु।

इन्द्रः—सकलभुवनाभिरामरामचन्द्रप्रभावेन पुनः स्वाराज्ये प्रतिष्ठितोऽस्मि। सर्वे लोका निरुपद्रवाः संपन्नाः। निश्चिताश्च सर्वे देवाः।

हृद्यानद्यप्रभृति भुवि नः कल्पयिष्यन्ति हन्त
क्षोणीदेवा मुदितमनसः सर्वतो यज्ञभागान्।

---

अमी द्विजास्त्वैव विजयं सर्वोत्कर्षं सायंप्रातः संप्रार्थयन्ताम्। स्वकीययोगक्षेमनिर्वाहस्य त्वद्धरत्वात्। व्यापारान्तरानपेक्षया त्वदुत्कर्षप्रार्थनैव सर्वदा द्विजानामुचितेति भावः। अत्रेष्टकार्यदर्शनात्मकः पूर्वभावो नाम संध्यङ्गमुक्तम् ॥ १२ ॥ **त्रैलोक्येति।** त्रयो लोकास्त्रैलोक्यम्। चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्। तस्य कुशलं सुखं यत्नेन युद्धादिविषयोद्योगेन हेतुना त्वया कर्त्रा साधितं निष्पादितम्। सुखी भवेत्यादेः स्पष्टोऽर्थः ॥ १३ ॥ **सौजन्येति।** सुजनस्य भावः सौजन्यं त्वच्चरणपरिचरणैकस्वभावत्वं तत्रैकरसेन रागान्तरासंवलितरागयुक्तेन। 'रसो रागे द्रवे हर्षे' इत्यभिधानम्। सान्द्रो घनो निभृतः स्थिरः स्नेहः प्रेमा यस्य स तथोक्तस्तथाविधेन। कर्मस्वैहिकामुष्मिकव्यापारेषु सावधानमप्रमत्तं मनो यस्य स तथोक्तस्तेन सौमित्रिणा लक्ष्मणेन साकं सहितः सन्सत्येन भूतहितपरतथ्यवचनेन, धर्मेणाहिंसनादिना च सर्वात्मनानुस्क्तेन तत्तद्गोचरप्रयत्नेन च। सर्वेषामानन्दजनकं साधुचरितं सदाचारं साधयन्। 'यद्यदाचरति श्रेष्ठः' इत्याद्युक्तप्रकारेण स्वयमनुष्ठायान्याननुष्ठापयन्सौराज्यस्य शोभनराजभावस्यातिशयेन परया काष्ठया सर्वैः सुजनैः श्लाघ्यः प्रशंसनीयो यशस्वी पूर्वेषामपि दुर्लभगुणप्रथापूर्णो भव। आशिषि लोट् ॥ १४ ॥ यौवराज्येऽधिकृतस्त्वया नियोजितः। **सकलेति।** स्वाराज्ये स्वर्गपरिपालनकर्मणि। 'स्वरव्ययम्' इत्यमरः। तस्य राजा स्वाराजः। 'रोरि' इति रेफलोपे 'ढ्रलोपे–' इति दीर्घः। ततः कर्मणि ब्राह्मणादेराकृतिगणत्वात्ष्यञ्। प्रतिष्ठापितोऽस्मि स्थिरीकृतोऽस्मि। निश्चिताः। रावणकर्तृकोपमर्दाभावनिर्णयेन नाशसंशयनिवृत्त्या नित्यसत्तानिश्चयगोचरा इत्यर्थः। 'निश्चिन्ताः' इति पाठे रावणोपद्रवचिन्तारहिता इत्यर्थः। **हृद्यानिति।** क्षोणीदेवा ब्राह्मणा अद्यप्रभृति मुदितमनसः सन्तः सर्वतः सर्वदेशसर्वकालेषु हृद्यान्रावणभयाभावेन मनःप्रियान्यज्ञ-

राज्ञां योग्यैस्त्वमपि बहुभी राजसूयाश्वमेधै-
रिष्ट्वा यज्ञैः समधिगमय स्फारमानन्दमस्मान् ॥ १५ ॥

दशरथः—वत्स रामभद्र,

त्वया लोकैकवीरेण धर्मनिष्ठेन धीमता ।
नरो मम समो नास्ति न भूतो न भविष्यति ॥ १६ ॥

एकतस्तावत्त्वदीयारण्यवासमूलशोक एतावन्तं कालमवस्थितः । इदानीं महान्तमानन्दमनुभवामि ।

तवारण्ये वासे मम हृदि महाशोकविकले
न किंचित्स्वारस्यं त्रिदशपदलाभोऽप्यलभत ।
त्वयि प्रत्यावृत्ते पुनरिह महानन्दभरिते
न धत्ते भूमानं मम मनसि निःश्रेयसमपि ॥ १७ ॥

इतः परमिष्टतमैरिष्टापूर्तैरिक्ष्वाकुवंशजानामस्माकं शाश्वतं पदं परिकल्पय । वयं च भवतः श्रेयःसंतानसिद्धिमाशास्महे । सर्वानिमांल्लङ्कासमरसुहृदः सुग्रीवाङ्गदप्रमुखान्यथोचितं संभाव्य प्रजारक्षणमवलम्बस्व ।

---

भागान्यागीयहविरंशान्भुवि भूमौ नः कल्पयिष्यन्त्यस्मभ्यं दास्यन्ति । हन्तेति हर्षे । त्वमपि राज्ञां योग्यैः क्षत्रियार्हैर्बहुभिरमितै राजसूयै राजा सोमलता सूयते कण्ड्यतेऽस्मिन्निति व्युत्पत्त्या राजसूयनामकैर्यागविशेषैरश्वमुख्यकत्वादश्वमेधशब्दवाच्यैः क्रतुभिश्च । राजसूयशब्दस्यार्धर्चादित्वेन नपुंसकत्वेन 'अध्वर्युक्रतुरनपुंसकम्' इति समाहारनियमप्रवृत्तेरितरेतरयोगद्वन्द्वः । यज्ञैरिष्ट्वास्मान्स्फारं बहुलमानन्दं समधिगमय संप्रापय ॥ १५ ॥ **त्वयेति** । पुत्रेणेति शेषः ॥ १६ ॥ **एकतस्तावदिति** । त्वदीयारण्यवासो मूलं हेतुर्यस्य स तथोक्तः । एतावन्तं कालं चतुर्दश वर्षाणि । अत्यन्तसंयोगे द्वितीया । इदानीं पट्टाभिषेकादनन्तरम् । **तवेति** । तवारण्ये वासे वनवासकाले महाशोकेन तत्प्रयुक्तनिरवधिकदुःखेन हेतुना विकले शिथिलिते मम हृदि त्रिदशपदलाभोऽपि सर्वाभ्यर्थनीयस्वर्गस्थानस्थितिरपि किंचित्स्वारस्यं मनागपि सुखरूपतां नालभत नाभजत् । त्वयीह प्रत्यावृत्ते वनवासादयोध्यां पुनरागते सति । पुनःशब्दस्तुशब्दार्थकः । महानन्दभरिते मम मनसि निःश्रेयसमपि सर्वातिशयितमोक्षसुखमपि भूमानं वैपुल्यं न धत्ते न भजति । त्वदागमनसुखान्मोक्षसुखमल्पमिति भावः । अत्र दुःखप्रशमनात्मकः समयो नाम संध्यङ्गमुक्तम् ॥ १७ ॥ **इत इति** । इष्टापूर्तैर्यागानुष्ठानतटाकनिर्माणादिभिः शाश्वतं पदं नित्यं स्थानम् । श्रेयसः शुभस्य संतानस्यापत्यस्य च सिद्धिं निष्पत्तिम् । 'संतानाः स्युरविच्छित्तिवंशापत्यसुरद्रुमाः' इति रत्नमाला । आशास्महे इच्छामः । 'आङः शासु इच्छायाम्' । **लङ्केत्यादि** । लङ्कायां

आदित्यैरभिरूपधारितमहीभारैरुदारैर्नृपै-
रार्विर्भूतगुणानुभावगुरुभिर्धर्मेण गुप्ताः प्रजाः ।
आप्तैरात्महितावधारणचणैरारब्धनिर्वाहकै-
रादिष्टेन पथानुपालय महीमा चक्रवालाचलम् ॥ १८ ॥

वसिष्ठविश्वामित्रौ विना न किंचिदपि त्वया मन्त्रयितव्यम् ।

**महेश्वरः**—(तयोरभिमुखो भूत्वा ।)

वसिष्ठारुन्धतीजाने विश्वामित्र महामुने ।
युवामशेषकार्येषु युक्तौ स्यातमतन्द्रितौ ॥ १९ ॥

**तौ**—अनुगृहीतौ स्वः ।

**महेश्वरः**—सर्वे भवन्त इहैव नित्योत्सवाः सन्तु । वयं च स्वं स्वं स्थानं प्रविशामः ।

(इति निष्क्रान्ता महेश्वरादयः ।)

(रामादयः सर्वे यथोचितमुपविशन्ति ।)

**विश्वामित्रः**—किं ते भूयः प्रियमुपहरामि ।

---

युद्धसहायानित्यर्थः । संभाव्य पूजयित्वा । **आदित्यैरिति** । आदित्यस्यापत्यैः । 'दित्यदित्यादित्य–' इत्यादिना ण्यप्रत्ययः । अभिरूपं मनोज्ञं यथा भवति तथा धारितोऽनुष्ठितो मह्या भूमिस्थप्राणिनां भार इष्टप्रापणानिष्टनिवारणव्यापारो यैस्ते तथोक्तास्तैः । 'प्राप्तरूपसुरूपाभिरूपा बुधमनोज्ञयोः' इत्यमरः । उदारैः परेभ्यः प्राणपर्यन्तदायिभिराविर्भूतैः प्रकाशमानैर्गुणैः शौर्यादिभिरनुभावैः प्रभावैश्च गुरुभिर्महद्भिर्नृपैः कर्तृभिर्धर्मेण शास्त्रोक्तधर्मयुक्ततया । प्रकृत्यादित्वात्तृतीया । प्रजा गुप्ताः पालिताः । आप्तैर्यथार्थद्रष्टृत्वे सति यथार्थवक्तृभिरात्मनः स्वस्य । अयमात्मशब्दस्तत्परो रामपरो वा । हितस्य कालान्तरेऽपि सुखपर्यवसायिनोऽर्थस्यावधारणेन प्रागेव न्यायदृष्ट्या निश्चयेन प्रसिद्धैः । 'तेन वित्तः–' इति चणप्प्रत्ययः । आरब्धनिर्वाहकैः प्रारब्धकार्यनिष्पादकैः पुरुषैरादिष्टेनोपदिष्टेनाज्ञप्तेन वा पथा मार्गेण आ चक्रवालाचलं देशतः कालतश्च चक्रवालपर्वतमवधीकृत्य महीमनुपालय रक्ष ॥ १८ ॥ **वसिष्ठेति** । न मन्त्रयितव्यं नालोचयितव्यम् ॥ **तयोरिति** । महेश्वरः । आहेति शेषः । **वसिष्ठेति** । अरुन्धती जाया यस्य स तथोक्तस्तस्य संबुद्धिः । 'जायाया निङ्' इति निङ् । युक्तौ संनद्धौ । अतन्द्रितावालस्यरहितौ । स्यातं भवेतम् । अस्तेः सार्वधातुक लिङ् ॥ १९ ॥ **तौ** वसिष्ठविश्वामित्रौ । आहतुरिति शेषः । अनुगृहीतौ कृतप्रसादौ स्वो भवावः । अस्तेर्लट्युत्तमपुरुषद्विवचनम् ॥ सर्वे भवन्तो रामादयः सर्वे यूयम् । इहैवायोध्यायामेव । नित्योत्सवा अविच्छिन्नानन्दजनकव्यापाराः । वयं चाहं चतुर्मुखो महेन्द्रो दशरथश्च स्वं स्वं स्थानं कैलासं सत्यलोकं स्वर्गं च ॥ **रामादय इति** ।

रामादयः—किमितःपरं प्रियमस्ति ।

हन्तव्या जगदातङ्कहेतवो राक्षसा हताः ।
प्रजापालनदीक्षा च प्रविष्टा शाश्वती मया ॥ २० ॥

तथापीदमस्तु—

(भरतवाक्यम् ।)

साहित्योदयसंभृतो विजयते संभूय सारस्वतः
सारो यत्र समन्ततः सहृदयैः संभावनीयोदयः ।
सम्यग्भावितसंविधानतरलः सोऽयं सुधासुन्दरः
संदर्भो विदुषाममन्दहृदयानन्दाय संदायताम्* ॥ २१ ॥

(इति निष्क्रान्ताः सर्वे ।)

**इति महाकविश्रीभवभूतिविरचिते महावीरचरिते सप्तमोऽङ्कः ।**

---

आदिशब्देन वसिष्ठविश्वामित्रादीनां संग्रहः । यथोचितं गुरुशिष्यभावाद्यनुरूपं यथा तथा । किं ते भूयः प्रियमुपहरामि । पुनः किं तव प्रियं करवाणीत्यर्थः ॥ इतःपरं पक्ष्यमाणादन्यत् । **हन्तव्या इति** । जगतामातङ्कहेतवो भयंकरा अतएव हन्तव्या आवश्यकहननकर्मीभूता राक्षसा हताः । किंच शाश्वती चिरकालस्थायिनी प्रजापालनदीक्षा च यथा प्रविष्टेति यत् । इतःपरं प्रियमस्तीति संबन्धः । अत्र कार्यार्थोपसंहृतिरूप उपसंहारो नाम संध्यङ्गमुक्तम् ॥ २० ॥ भरतस्य नाट्याचार्यस्य वाक्यं वचनम् । **साहित्येति** । यत्र महावीरचरिताख्ये संदर्भे साहित्यस्य समुचितपदरचनाया उदयेनाविर्भावेन संभृतः संपादितः, सहृदयैः काव्यकलाकौशलयुक्तानसूयहृदययुक्तैः पुरुषैः । समन्ततः संभावनीयः पूजनीय उदय आविर्भावो यस्य स तथोक्तः, सारस्वतः सरस्वतीसंबन्धी सार उत्कृष्टांशः संभूय मिलित्वा विजयते सर्वोत्कर्षेण वर्तते । तथाविधः सम्यग्भावितेन निष्पादितेन संविधानेनेतिवृत्तसंघटनेन तरलो विलसितः । यद्वा संविधानमेव तरलो मध्यस्थमणिर्यस्मिन्स तथोक्तः । रूपकाणां मिथो भेदकेषु रसवस्तुनायकेषु वस्तुशब्दितस्य प्रख्यातोत्पाद्यमिश्रभेदभिन्नस्येतिवृत्तांशस्य मध्ये मिश्रस्य चारुतातिशयावहत्वात्तरलत्वरूपणम् । सुधावदमृतवत्सुन्दरो रमणीयः । 'मृतसंजीवनं रामवृत्तान्तः' इत्युक्तरीत्या सुधावन्मृतसंजीवनोऽयं संदर्भो महावीरचरिताख्यो

---

* अस्मिन्नाटके वालिप्रकरणे 'दौरात्म्यादरिभिः' ( १९३ पृष्ठे पञ्चमाङ्के ४६ श्लोकः ) इति श्लोकपर्यन्तेन ग्रन्थसंदर्भेण भवभूतिना त्रिभागपरिमिता कथा विरचिता । ततः 'अवश्यं च श्रेयस्विना मया भवितव्यम्' ( १९४ पृष्ठे ) इति वालिवाक्यादारभ्य भरतवाक्यपर्यन्तेन ग्रन्थसंदर्भेण सुब्रह्मण्यकविना कृत्स्नोऽपि कथाशेषः पूरितः.

गिरां गुम्फो विदुषां वेदनशीलानां पण्डितानाममन्दहृदयानन्दायानल्पमनःसुखाय संदायतां सम्यक्शोधितो भवतु । 'दैप् शोधने' इत्यस्मात्कर्मकर्तरि लकारः । अघुत्वादीत्वं न । 'संतायताम्' इति च पाठः । अविच्छेदो भवतु । पूर्ववल्लकारः । 'तनोतेर्यकि' इत्यात्वम् । अत्र शुभशंसनरूपप्रशस्तिर्नाम संध्यङ्गमुक्तम् ॥ २१ ॥ एवं साङ्गं नाटकं वृत्तम् ॥

शुद्धगुणलब्धरूपा सत्पात्रस्नेहसंभृतालोका ।
दीपकलिकेव सुदशां भावप्रद्योतिनी रुचिं दिशतु ॥

जितामित्रो मित्रप्रियकृदनुरज्यद्भिरनुजैः
समं सीतादेव्या सह मुदमसीमामनुभवन् ।
कृपातुङ्गैरस्माननुकलमपाङ्गैरभिमृश-
न्सुधोक्तिप्रेमाणं कलयतु मदुक्तौ रघुवरः ॥

यो महीसारवास्तव्यो वाधूलो वीरराघवः ।
स महावीरचरिते सप्तमाङ्कं व्यवीवरत् ॥

इत्यण्णाप्पङ्गार्यनामधेयेन वाधूलवीरराघवेण विरचितायां भावप्रद्योतिनीसमाख्यायां महावीरचरितव्याख्यायां सप्तमोऽङ्कः ॥

समाप्तमिदं नाटकम् ।



श्रीभवभूतिकविप्रणीतमहावीरचरितस्य सर्वतः प्रचलितः पाठः ।

दौरात्म्यादरिभिर्निजार्जवशुचौ मायाविभिर्वञ्चिते
धर्मात्मन्यतिथौ निजानपि जगत्पूज्ये गृहानागते ।
एतस्मिन्नुचितं न नाम विहितं वाचापि नोक्तं प्रियं
धिक्पापेन मया रिपाविव कथं बद्धो वधायोद्यमः ॥ ४६ ॥

कथितं च संप्रत्येवमेव चारकैः—'विभीषणेन सुग्रीवस्याप्यनाख्याय रामान्तिकं श्रमणा प्रेषिता । प्रतिपन्नलङ्काधिपत्यश्च तस्य दाशरथिरस्मिन्मतङ्गाश्रमोपकण्ठे वर्तते' इति । भवतु । अवतरामि । (तथा नाटयति।) कः कोऽत्र भोः ।

विजितपरशुरामं सत्यधर्माभिरामं
गुणनिधिमभिरामं द्रष्टुमभ्यागतोऽस्मि ।
भवति च फलवत्ता चक्षुषस्तत्र दृष्टे
भवति च रमणीयो दर्पकण्डूनिकाषः ॥ ४७ ॥

**रामः**—वत्स सौमित्रे, मामिहस्थमावेदय महाभागाय ।

**लक्ष्मणः**—(उपसृत्य ।) अयमार्यस्तिष्ठति । तदुपसर्पतु महाभागः ।

**वाली**—अपि त्वं पुनरसौ लक्ष्मणः ।

**लक्ष्मणः**—अथ किम् ।

(उभावुपसर्पतः ।)

**वाली**—(स्वगतम् ।)

स एष रामश्चरिताभिरामो
धर्मैकवीरः पुरुषप्रकाण्डः ।
स्वान्येव पूर्वाणि परैश्चरित्रै-
र्योऽत्यद्भुतैरप्रतिमोऽतिशेते ॥ ४८ ॥

(प्रकाशम् ।) राम,

आनन्दाय च विस्मयाय च मया दृष्टोऽसि दुःखाय वा
वैतृष्ण्यं तु ममापि संप्रति कुतस्त्वद्दर्शने चक्षुषः ।
त्वत्सांगत्यसुखस्य नास्मि विषयस्तत्किं वृथा व्याहृतै-
रस्मिन्विश्रुतजामदग्न्यदमने पाणौ धनुर्जृम्भताम् ॥ ४९ ॥

**रामः**—

दिष्ट्या यदद्य दृष्टस्त्वं सत्यमेतच्च युज्यते ।
किं त्वशस्त्रेषु युष्मासु कथं रामोऽस्तु सायुधः ॥ ५० ॥

**वाली**—(विहस्य ।) भो महाक्षत्रिय, किमित्यननुकम्पनीयानप्येवमस्माननुकम्पसे ।

ज्ञाता एव वयं जगत्सु चरितैर्वाग्भिः किमाख्यायते
संयत्तो भव सत्यमस्ति भवतः सत्यं मनुष्यो भवान् ।
शस्त्रैरव्यवधीयमानविजयाः प्रायो वयं तेषु चे-
द्धाहस्ते सुखमाश्वसन्ति गिरयो यैर्वानराः शस्त्रिणः ॥ ५१ ॥

तदितः स्थलीमधितिष्ठाव ।

**लक्ष्मणः**—आर्य, यथाह महाभागः स्वजातिसमयव्यवस्थिता युद्धधर्मा इति ।

**वालिरामौ**—(अन्योन्यमुद्दिश्य ।)

कामं त्वया सह श्लाघ्यो वीरगोष्ठीमहोत्सवः ।
किं त्विदानीमतिक्रान्ते त्वय्यवीरा वसुंधरा ॥ ५२ ॥

(परिक्रम्य निष्क्रान्तौ ।)

**लक्ष्मणः**—कथमास्फालिते धनुषि कुपितः सांक्रन्दनिः । तथा हि ।

गर्जत्पर्जन्यघोरस्तनितमविरतं तिग्मगम्भीरमन्त-
र्गुञ्जन्गुञ्जाभजृम्भाविवृतमुखविशद्विश्वदिक्चक्रवालः ।
संरम्भोत्तम्भतुङ्गस्थितविततडित्पिङ्गलाङ्गूलकेतु-
र्व्यस्तं विस्तार्य दर्पादपिहितगगनोत्सङ्गमङ्गं धुनोति ॥ ५३ ॥

(नेपथ्ये ।)

विभीषण विभीषण,

आर्यस्य वालिन इव ध्वनिरेष नूनं
तस्यैव नूतनघनस्तनितप्रचण्डः ।
मौर्वीरवश्च कुत एष भयानकः स्या-
द्व्यापारितं किमु हरेण धनुः पिनाकम् ॥ ५४ ॥

**लक्ष्मणः**—आर्ये, अयं नु कः।

**श्रमणा**—स एष खलु विभीषणसखः सुग्रीवः सविमर्शसंरम्भं संप्रहारमनुसरति। सर्वे च यूथपतयो गिरिगह्वरेभ्यः संपतन्ति।

**लक्ष्मणः**—तेन हि संप्रति मयाप्यारोपयितव्यं धनुः।

**श्रमणा**—एष वालिकायदुन्दुभिकरङ्कसप्ततालगिरिमहीतलान्यवदार्य रामतूणीरमधिशयितः शरः।

(नेपथ्ये।)

मद्रोहाच्छपथात्प्रसीदतु मतिः पौलस्त्यसुग्रीवयो-
 र्हे वीराः कपयः शमोऽस्तु भवतामीशः स एवास्मि चेत्।
रामात्प्राप्तमहार्घ्यवीरमरणस्याशास्तिरेषाद्य मे
 योऽहं सूर्यसुतः स एष भवतां योऽयं स वत्सोऽङ्गदः॥ ५५॥

**लक्ष्मणः**—तदयमनुचराज्ञानियन्त्रणोन्मुक्तवीरसमयसङ्कलसदसह्यदुःखनिभृतैर्यूथपतिभिरार्येण च सपक्षपातबाष्पेण वीक्ष्यमाणः स्वद्रोहशपथयन्त्रितसशोकविभीषणेन याच्यमानशरीरसौष्ठवः प्रयत्ननिरुद्धनिष्ठुरप्रहारमर्मच्छेदवेदनावेगः परिष्वङ्गव्याजविधृतसुग्रीवकण्ठपरिधीकृतस्वकण्ठकनककमलमालागुणः शक्रसूनुरस्यामपि दशायां वीरश्रिया प्रदीप्यते।

(ततः प्रविशतः सुग्रीवविभीषणौ वाली रामश्च।)

**रामः**—

अप्राकृताभिजनवीर्ययशश्चरित्रा-
 न्पुण्यश्रियः कुलमहीधरभूरिसारान्।
एवंविधानपि निपात्य कटुर्विपाकः
 सर्वंकषः कषति हा विषमः कृतान्तः॥ ५६॥

**वाली**—वत्स विभीषण, पश्य पश्य। सुष्ठु शोभते वत्ससुग्रीवस्य वक्षसि सहस्रपुष्करमालागुणः।

**सुग्रीवविभीषणौ**—(अपवार्य।)

अकाण्डशुष्काशनिपातरौद्रः
 क एष धातुर्विषमो विवर्तः।
अस्माभिरार्यः शपथैर्निरुद्धैः
 कथं विलङ्घ्यः कथमासितव्यम्॥ ५७॥

**वाली**—रामभद्र रामभद्र,

**रामः**—आर्य, अयमस्मि ।

**वाली**—

यदासक्तं दैवादनभिमतसख्येऽपि हि जने
मया सख्यं प्राणैरनृण इव तस्याहमधुना ।
यदन्यत्साधूनां तव च गुणराशेः समुचितं
प्रहाणे प्राणानां तदपि हि यथाशक्ति विदधे ॥ ५८ ॥

(रामः सविनयलज्जाशोकस्तिष्ठति ।)

**सुग्रीवविभीषणौ**—(जनान्तिकम् ।) आर्ये श्रमणे, कथममृतह्रदादिवास्माकं रामदेवादेष दैवविपाकः ।

**श्रमणा**—माल्यवता किलैवम् । (इत्युभयोः कर्णे कथयति ।)

**वाली**—वत्स सुग्रीव,

(सुग्रीवो बाष्पस्तम्भं नाटयति ।)

**वाली**—ननु सुग्रीव, आः प्रातिकूलिकः संवृत्तः ।

**सुग्रीवः**—(सकरुणम् ।) आर्य आर्य, प्रसीद । आज्ञापय ।

**वाली**—वत्स, कथय कस्तवास्मि ।

**सुग्रीवः**—गुरुः स्वामी च ।

**वाली**—त्वं तु मम कः ।

**सुग्रीवः**—शिष्यः प्रेष्यश्च ।

**वाली**—वत्स, कथय क आवयोरन्योन्यधर्मः ।

**सुग्रीवः**—वशित्वं वो वश्यता च मम ।

**वाली**—(तं हस्ते गृहीत्वा ।) तर्हि दत्तोऽसि रामाय । रामभद्र, नन्वेष गृह्यताम् ।

**रामसुग्रीवौ**—को हि पूज्यस्य गुरोर्वचनं न बहु मन्यते ।

**विभीषणः**—अहो विस्तरस्थानेऽपि धर्मोपपत्तिविशुद्धः संक्षेपः ।

**वाली**—वत्स सुग्रीव, अथ ब्रह्मपुत्रादाचार्याज्जाम्बवतोऽधीतधर्मपारायणवचनेन कीदृशस्त्वया मैत्रीधर्म आगमितः ।

**सुग्रीवः**—

प्राणैरपि हिता वृत्तिरद्रोहो व्याजवर्जनम् ।
आत्मनीव प्रियाधानमेतन्मैत्रीमहाव्रतम् ॥ ५९ ॥

**वाली**—रामभद्र, तवापि भगवतः सहस्रकिरणान्वयपुरोहिताद्वसिष्ठादेष एव हि संप्रदायः ।

**रामः**—आर्य, अथ किम् ।

**वाली**—तदनेन मैत्रीधर्मेण भवद्भ्यामन्योन्यस्य वर्तितव्यम् । मदनुरोधात्क्रियतामुपनिबन्धोऽग्निसाक्षिकश्च । समयो नातिवर्तते । संनिहित एवायं मतङ्गयज्ञाग्निः ।

**रामसुग्रीवौ**—(अन्योन्यहस्तग्राहम् ।)

पुण्ये मतङ्गयज्ञाग्नौ सख्यं निर्वृत्तमावयोः ।
ममेव हृदयं तेऽस्तु तवेव हृदयं च मे ॥ ६० ॥

**वाली**—रामभद्र, अयं तु वत्सो विभीषणस्त्वया प्रतिश्रुतलङ्काधिराज्य एव पुरतः श्रमणायाः ।

**विभीषणः**—(सलज्जाशङ्कम् ।) कथं ज्ञातोऽस्मि ।

**श्रमणालक्ष्मणौ**—अहो चारचक्षुष्मत्ता ।

**रामः**—अथ किम् ।

**विभीषणः**—तर्हि प्रसन्नं देवेन । (इति प्रणमति ।)

**सुग्रीवः**—मयाप्यविदितः श्रमणावृत्तान्तः फलितस्त्विति तर्कितार्थोऽस्मि ।

**रामः**—हे प्रियसुहृदौ महाराजसुग्रीवविभिषणौ, एष वामिदानीं सौमित्रिः ।

**लक्ष्मणः**—आर्यौ, लक्ष्मणोऽभिवादयते ।

**उभौ**—एह्येहि वत्स । (इत्यालिङ्गतः ।)

**श्रमणा**—अतिगम्भीरः सरसः स्वीकारः ।

**वाली**—वत्स विभीषण, तवाप्यलमिदानीं स्वार्थशालीनतया । एवं परिणाममेवैतद्वस्तु । रावणो हि नास्त्येवेति मद्वृत्तान्तेनैव व्याख्यातम् । अपत्यस्नेहसाम्येऽपि पिण्डोपजीविनो विशेषतो रावणहितोपस्थानं धर्मः । स्वयं कथयितुं सम्यग्विभीषणस्य प्रेयसा योग इति मातामहस्य युक्तम् । महान्त एव हि तादृशानामगाधसत्त्वानामविनयपरिस्यन्दितं जानन्ति । प्रचलन्ति हि मे प्राणाः । तदवसानप्रपातस्थलमुपनयन्तु मां भवन्तः ।

**नीलप्रभृतयः**—

हा वीर हा मघवनन्दन मन्दराद्रि-
निष्कम्पसार जगदप्रतिमल्ल वीर ।
उद्दर्पदुन्दुभिनिशुम्भपटुप्रचण्ड-
दोर्दण्डमण्डल गतोऽसि हहा हताः स्मः ॥ ६१ ॥

(इति रुदद्भिस्तैर्धार्यमाणः परिक्रम्य ।)

**वाली**—भो महात्मानः प्लवङ्गमपुंगवाः,

सुग्रीवाङ्गदयोः प्रभुत्वमिह यत्सौजन्यमेतद्धि वो
मत्प्रीत्यैव तु नावधीर्यमनयोर्यद्वो महिम्नः क्षमम् ।
प्राप्तः संप्रति रामरावणरणः स्नेहस्य निर्व्यञ्जक-
स्तस्मिन्नञ्जलिरेष शान्तमथवा वीर्येषु वः के वयम् ॥ ६२ ॥

किंच ।

कर्णावर्जितदिग्गजयुगद्वन्द्वोपमर्दाश्च ते
पुच्छास्फोटदलत्समुद्रविवरैः पातालझम्पाश्च ताः ।
कापेयस्य च पौरुषस्य च तथा प्रेम्णो गरिम्णश्च य-
द्दोष्णामुन्मथितद्विषां सुसदृशं तन्मा स्म वो विस्मरत् ॥ ६३ ॥

(इति निष्क्रान्ताः सर्वे ।)

**इति महावीरचरित आरण्यकं नाम पञ्चमोऽङ्कः ।**

## षष्ठोऽङ्कः।

(ततः प्रविशति विषण्णो माल्यवान्।)

**माल्यवान्**—(सचिन्तम्।) अहह, रक्षःपतेर्दुर्विनयविटपिकोरकाः परितः प्रकीर्णा इव।

बीजं यस्य विदेहराजतनयायाश्चाङ्कुरोऽपि स्वसु-
र्यात्रा तौ परिवञ्चितुं किसलयं मारीचमायाविधिः।
शाखाजालमयोनिजापहरणं तस्य स्फुटं कोरकाः
कोशाधीशवधोऽनुजस्य गमनं सख्यं तयोस्तेन च॥ १॥

अयमचिरादेव फलोन्मुखोऽपि भवितेति मन्ये। यतो वृद्धबुद्धिरनागतं पश्यति। (निःश्वस्य।) अहो वामता भागधेयानाम्।

व्यसनेऽस्मिन्मन्त्रशक्त्या यद्यत्प्रतिकृतं मया।
अलसस्य यथा कार्यं तत्तत्प्रच्युतमात्मना॥ २॥

(सानुतापम्।) साचिव्यं नाम महते संतापाय।

यत्किंचिद्दुर्मदाः स्वैरमाद्रियन्ते निरर्गलम्।
तत्र तत्र प्रतीकारश्चिन्त्यो वक्रे विधावपि॥ ३॥

अहो दुरात्मनः क्षत्रियबटोः सर्वातिशायि चरितम्। यत्तथाविधशौर्योष्माणं कपिचक्रवर्तिनं शरैः संयमयता किं नाम न विहितम्। (स्मरणं नाटयित्वा।) उक्तं च किष्किन्धातः प्रतिनिवृत्तेन चारकेण। यत्सीतामन्वेष्टुमनुदिशमभिदुद्रुवुः कपिपुंगवा इति।

(नेपथ्ये।)

भ्रान्तीः सप्ताधिकानां प्रविदधदरुणैरर्चिषां चक्रवालै-
र्द्राग्वीराणामलक्ष्यप्रसृतिरतिसमुत्तप्तरौक्ममालयेषु।
अर्धप्लुष्टापसर्पद्रजनिचरभटोद्गाढकल्पान्तशङ्कं
लङ्कां प्रौढो हुताशः सह परिदलितोऽब्धेस्त्रिकूटेन लीढे॥ ४॥

(प्रविश्य पटाक्षेपेण संभ्रान्ता।)

**त्रिजटा**—[1]परित्ताअदु परित्ताअदु कणिट्ठमादामहो। (इति सोरस्ताडं पतति।)

---

१. परित्रायतां परित्रायतां कनिष्ठमातामहः।

**माल्यवान्**—वत्से, अलं कातरतया । किमिदमुच्चैरत्याहितम् ।

**त्रिजटा**—(उत्थाय ।) [1]कणिट्ठमादामह, किं कहेमि मन्दभाइणी । एसो क्खु कोवि दुट्ठवाणरो सअलं विडज्झिअ णअरं खणमेत्तएण तीरकक्खणहरिणीक्खेवक्खित्तविविहरक्खसलोओ अक्खेण क्खु कुमालएण अणुवन्धिज्जमाणो तस्सिं कदन्तलीलं कदुअ झत्ति णिक्कन्तो ।

**माल्यवान्**—(सखेदम् ।) किं नाम दग्धं नगरम् । हतोऽक्षः कुमारः । अपि को नामायं कपिः स्यात् । (सस्मरणम् ।) उक्तं च चारकेण हनूमानवाचीं दिशमिति । अहह ।

> तूलदाहं पुरं लङ्कां दहतैव हनूमता ।
> अपि लङ्कापतेस्तीव्रः प्रतापो निरवाप्यत ॥ ५ ॥

वत्से, अपि तेन सीताप्रवृत्तिरुपलब्धा ।

**त्रिजटा**—[2]कणिट्ठमादामह, पुरदो ज्जेव कोवि मक्कडपरमाणू तीए समं मन्तअन्तो दिट्ठो । तीए वि उम्मोचिअ केसाहरणं अहिण्णाणं त्ति तस्स हत्थे समप्पिदम् । एत्तिअं जाणामि ।

**माल्यवान्**—किं न पर्याप्तम् । (साशङ्कम् ।) एतेनैव कपिपरमाणुना तावदेवमनुष्ठितम् । एवं परःशताः कोट्यः श्रूयन्ते संप्रति सुग्रीवभुजबलपरिपालिते कपिसर्गे ।

**त्रिजटा**—(सवितर्कम् ।) [3]कहं तारिसी सुउमारदंसणा वि सुसिणिद्धव्वाहारा वि माणुसी विसीदा अह्माणं रक्खसाणं वि रक्खसी जादा ।

---

१. कनिष्ठमातामह, किं कथयामि मन्दभागिनी । एष खलु कोऽपि दुष्टवानरः सकलं विदह्य नगरं क्षणमात्रेण तीरकक्षणहरिणीक्षेपविक्षिप्तविविधराक्षसलोकोऽक्षेण खलु कुमारकेणानुबध्यमानस्तस्मिन्कृतान्तलीलां कृत्वा झटिति निष्क्रान्तः ।

२. कनिष्ठमातामह, पुरत एव कोऽपि मर्कटपरमाणुस्तया समं मन्त्रयमाणो दृष्टः । तयाप्युन्मुच्य केशाभरणमभिज्ञानमिति तस्य हस्ते समर्पितम् । एतावज्जानामि ।

३. कथं तादृशी सुकुमारदर्शनापि सुस्निग्धव्याहारापि मानुष्यपि सीतास्माकं राक्षसानामतिराक्षसी जाता ।

**माल्यवान्**—वत्से, युज्यतेऽपि ।

पतिव्रतामयं ज्योतिः शान्तं दीपं च घुष्यते ।

(विमृश्य ।) अथवा । किं नाम सा वराकी ।

दुष्कर्मणां परीपाकः स्वयमेवैष दीप्यते ॥ ६ ॥

**त्रिजटा**—[1]कणिट्ठमादामह, पढमं क्खु दण्डकारण्णपरेन्तपरिट्ठिद-विविहमहीहरप्पदेसेसु णिवासो ज्जेव अह्माणं रक्खसाणम् । विहारा क्खु णिखिलम्मि जम्बुद्दीवे । संपदं क्खु इह णअरे वि अक्खमो णिवासो । का गइ । को पडिआरो ।

**माल्यवान्**--वत्से, किमेवमतिकातरासि । पश्य ।

दुर्गोऽयं चित्रकूटस्तदुपरि नगरं सप्तधातुप्रकार-
प्राकारं दुस्तरैषा निरवधिपरिखाप्यब्धिरभ्रंकषोर्मिः ।

(विमृश्य ।) अथवा किमनेन ।

दोर्दण्डा एव दृप्यद्रिपुदलनमहासत्रदीक्षाः प्रतीक्ष्या

रक्षोनाथस्य—

(वामाक्षिस्पन्दनं सूचयन्, सव्यथम् । )

किं नो विधिरिह वचनेऽप्यक्षमो दुर्विपाकः ॥ ७ ॥

वत्से, वत्सस्य कुम्भकर्णस्य निद्रागमसीम्नः कियदवशिष्टम् ।

**त्रिजटा**—[2]कणिट्ठमादामह, अस्सिं जेव्व कसणचउद्दसीदिअहे चउ-ट्ठमासो परिसमत्तो ।

**माल्यवान्**—कथमद्यापि विप्रकृष्टतमः किल प्रबोधकालः । (सस्मरणम् ।) विमृश्यमाने तु दिष्ट्या कनिष्ठवत्स एव दूरदर्शी यस्यावि-मृश्यकारितापि शुभोदर्का सुबहुशोऽप्यभिसंधीयमाने कुलप्रतिष्ठातन्तुं तमेवोत्पश्यामि ।

---

१. कनिष्ठमातामह, प्रथमं खलु दण्डकारण्यपर्यन्तपरिस्थितविविधमहीधर-प्रदेशेषु निवास एवास्माकं राक्षसानाम् । विहाराः खलु निखिले जम्बुद्वीपे । सांप्रतं खल्विह नगरेऽप्यक्षमो निवासः । का गतिः । कः प्रतीकारः ।

२. कनिष्ठमातामह, अस्मिन्नेव कृष्णचतुर्दशीदिवसे चतुर्थमासः परिसमाप्तः ।

**त्रिजटा**—(ससंभ्रमम् ।) [1]कणिट्ठमादामह, हद्धी हद्धी । सन्तं पावम् । पडिहदममङ्गलम् ।

**माल्यवान्**—किमिति ।

**त्रिजटा**—[2]कणिट्ठमादामहस्स अअं णअवअणोवण्णासो अण्णस्सिं जेव्व कस्सिं अमङ्गले जेव्व विस्सन्तो ।

**माल्यवान्**—वत्से, नैतदनुसंधायोक्तम् । एवं किलावसीयते । यतः ।

न कुत्राप्यन्यत्र प्रबलभवितव्यादयमहो
विशुद्धैवोत्पत्त्या पतति न च तत्पापधिषणा ।
यथा स्वैरं भ्राम्यन्निरवधि वियत्यस्तशिखरं
व्युदस्यायं भास्वांस्तदनुगतघस्रार्चिरपि सा ॥ ८ ॥

तदत्र प्रतीकारेषु केवलं मतिसंधानजृम्भितमवशिष्यते । कृतमनेन । वत्से, अवैषि किमुपक्रमस्तावद्देवो दशकंधरः ।

**त्रिजटा**—[3]कणिट्ठमादामह, सामी क्खु संपदं सव्वतोभद्दं णाम अट्टालअं आरुहिअ तीए रक्खसकुलकालरत्तीए अधिट्ठिदं असोअवणिअं जेव्व पुलोअन्तो चिट्ठदि । अण्णं अ इहिमुहं पउत्ताए एसा पउत्ती सुदा । एदं णअरवुत्तन्तं अणुहविअ किंवि दुम्मणाअन्ती सामिणी पडिवोहेदुं तहिं जेव्व पत्थिदेत्ति ।

**माल्यवान्**—वत्से, स्त्रीत्वेऽपि वरं सा खलु देवी मन्दोदरी यन्मतिः प्रतिबोधनायोत्ताम्यति । न पुनर्देवो यः प्रतिबोधितोऽद्यापि न बुध्यते । तदेहि तावत् । अभ्यन्तरं प्रविश्य प्रणिधिकार्यं विचारयामः ।

(इति निष्क्रान्तौ ।)

**विष्कम्भकः ।**

---

१. कनिष्ठमातामह, हा धिक् हा धिक् । शान्तं पापम् । प्रतिहतममङ्गलम् ।

२. कनिष्ठमातामहस्यायं नयवचनोपन्यासोऽन्यस्मिन्नेव कस्मिन्नमङ्गल एव विश्रान्तः ।

३. कनिष्ठमातामह, स्वामी खलु सांप्रतं सर्वतोभद्रं नामाट्टालकमारुह्य तया राक्षसकुलकालरात्र्याधिष्ठितामशोकवनिकामेव विलोकयंस्तिष्ठति । अन्यच्च इतोमुखं प्रवृत्तयैषा प्रवृत्तिः श्रुता । एतन्नगरवृत्तान्तमनुभूय किमपि दुर्मनायमाना स्वामिनी प्रबोधयितुं तत्रैव प्रस्थितेति ।

(ततः प्रविशति सोत्कण्ठो रावणः ।)

**रावणः**—(सीतां विभाव्य ।)

मुखं यदि किमिन्दुना यदि चलाञ्चले लोचने
किमुत्पलकदम्बकैर्यदि तरङ्गभङ्गी भ्रुवौ ।
किमात्मभवधन्वना यदि सुसंयताः कुन्तलाः
किमम्बुवहडम्बरैर्यदि तनूरियं किं श्रिया ॥ ९ ॥

(सस्मरणोल्लासम् ।) अहो, हलमुखविनिर्भिन्नविश्वंभराविर्भूतयोषिद्रत्नमनुभवतो मम मनोरथेन चिराय फलितम् । (विमृश्य ।) अनुकूलस्य विधेः किलायं विश्वासः । (सगर्वम् ।) अथवा क एष विधिरपि ।

पिष्ट्वा ब्रह्माण्डमस्मादथ भुवनविभागादुदस्यापि किंचि-
द्ब्रह्माणं चातिकृत्याप्रतिमरुचितरं स्वं प्रतापं यशश्च ।
सूर्येन्दू संविधाय स्वयमधिकतरं निर्वृतः स्यामहं चे-
न्न स्यादालस्यदोषः सकरुणमथवा कोऽनुकम्प्येषु कोपः ॥ १० ॥

(ततः प्रविशति मन्दोदरी चेटी च ।)

**चेटी**—[1]इदो भट्टिणी । एदं अ राअसोवाणमग्गदुआरअम् । ता आरोअदु भट्टिणी ।

**मन्दोदरी**—(सोपानारोहणं नाटयित्वा । रावणं निरूप्य ।) [2]कहं एसो महाराअदसकन्धरो उवट्ठिदो वट्ठदि । (निर्वर्ण्य ।) कहं असोअवणिआसंमुहं पुलोएदि । (सखेदम् ।) कहं ईरिसे वि रिउवक्खाहिओए संवुत्ते राअकज्जाणवेक्खो लक्खीअदि महाराअदसकन्धरो त्ति । (उपसृत्य ।) जेदु जेदु महाराअदसकन्धरो ।

**रावणः**—(आकारसंवरणं नाटयित्वा ।) कथं मन्दोदरी । (इति पार्श्वे समुपवेशयति ।)

**मन्दोदरी**—(तथा कृत्वा ।) [3]महाराअ, किं एत्थ चिन्तिदम् ।

---

१. इतो भर्त्रि । एतच्च राजतसोपानमार्गद्वारकम् । तदारोहतु भर्त्री ।

२. कथमेष महाराजदशकंधर उपस्थितो वर्तते । कथमशोकवनिकासंमुखमवलोकयति । कथमीदृशेऽपि रिपुपक्षाभियोगे संवृत्ते राजकार्यानपेक्षो लक्ष्यते । महाराजदशकंधर इति । जयतु जयतु महाराजदशकन्धरः ।

३. महाराज, किमत्र चिन्तितम् ।

**रावणः**—कुत्र ।

**मन्दोदरी**—रिउवक्खाहिओए[1] ।

**रावणः**—(सोत्प्रासम् ।) कथं रिपुस्तत्पक्षस्तदभियोगश्चेत्यश्रुतं श्राव्यते देव्या ।

योऽहं द्वाभ्यां भुजाभ्यां मृधभुवि युगपन्मत्तदिग्दन्तिदन्ता-
न्रुद्ध्वा दोर्भिश्चतुर्भिः सरभसमजितान्दिक्पतीनप्यरौत्सम् ।
दीव्यद्वज्रादिचण्डप्रहरणपतनक्षुण्णवक्षस्त्वचो मे
तस्यापि प्रातिभाव्याद्रिपुरिति कलितः कोऽप्यपूर्वः प्रमादः ॥११॥

भवतु । तथापि श्रोतव्यम् । देवि, स कः ।

**मन्दोदरी**—णिखिचलेमुक्कणुगदसुग्गीवाग्गेसरो[2] सहकणिट्ठो दासरही रामो त्ति सुणीअदि ।

**रावणः**—किं सहानुजस्तापसः । देवि, किं गतेन तेन तैर्वा सः ।

**मन्दोदरी**—महाराअ[3], समुदाओ क्खु सङ्कीअदी । अवरं अ साअरवेलासु सेणां विणिवेसिअ आहूदो णेण साअरो ण णिग्गदो भवणादो त्ति । तदा तु

(संस्कृतमाश्रित्य ।)

प्रायुङ्क्तास्त्रं स किंचिज्जलनिधिकुहरे यन्महिम्ना क्षणार्धा-
दावृत्यावृत्य चक्रभ्रममखिलमभूत्क्वाथतः शोणमम्भः ।
उन्मूर्च्छन्नक्रचक्रं झटिति परिदलत्कच्छपौघं प्रमुह्य-
द्भूयः पाथोमनुष्यं स्फुटदतुलरवं प्रस्फुटच्छङ्खशुक्ति ॥ १२ ॥

**रावणः**—(सावज्ञम् ।) किं ततः ।

**मन्दोदरी**—महाराअ[4], तदो अ पुङ्खमेत्तपेक्खिज्जमाणतिक्खसर-

---

१. रिपुपक्षाभियोगे ।

२. निखिलवलीमुखचक्रानुगतसुग्रीवाग्रेसरः सहकनिष्ठो दाशरथी राम इति श्रूयते ।

३. महाराज, समुदायः खलु शङ्क्यते । अपरं च सागरवेलासु सेनां विनिवेश्याहूतोऽनेन सागरो न निर्गतो भवनादिति । तदा तु ।

४. महाराज, ततश्च पुङ्खमात्रप्रेक्ष्यमाणतीक्ष्णशरनिकरपक्ष्मलितशरीरेण

णिअरपक्खलिदसरीरेण णिक्कमिअ सलिलादो सवादवडणं अब्भत्थिअ मग्गो उवदिट्ठो । साहसिएण उण तेण साहिज्जवित्ती सुणीअदि ।

**रावणः**—(सहासम् ।) अस्तु श्रूयते । देवि, कीदृशः ।

**मन्दोदरी**—[1]महाराअ, वलीमुहसहस्साणीदेहिं महीहरेहिं सेदू णिम्मीअदि ।

**रावणः**—देवि, विप्रलब्धासि केनचित् । अकलितगाम्भीर्यमहिमा किलायं पाथोनाथः ।

> जम्बुद्वीपेऽथवान्येषु द्वीपेष्वपि महीधराः ।
> यावन्तस्तैः कुक्षिकोणोऽप्यस्य न भ्रियते किल ॥ १३ ॥

अपि च । साहसिकेनेति वदन्त्या देव्या विस्मृतप्रायम् । मत्साहसे तु

> उत्पुष्यद्गलधमनिस्फुटप्रसर्प-
> त्प्रत्यग्रक्षतजझरीनिवृत्तपाद्यः ।
> हर्षाश्रुप्रचुरमधुसितस्फुटश्री-
> वक्त्राब्जार्चितचरणः शिवः प्रमाणम् ॥ १४ ॥

**मन्दोदरी**—[2]महाराअ, ओधारेहि किं वि अण्णारिसी रअणा कस्स वि वलीमुहस्स हत्थपुण्णदो । उवरि ज्जेव चिट्ठन्दि ते महीहरा जलम्मि त्ति ।

**रावणः**—(सशिरःकम्पम् ।) इदं तदप्रतीकार्यं मौग्ध्यमबलानां यद्ग्रावाणोऽपि प्लवन्त इति । देवि, किं बहुनोक्तेन ।

> श्रुतं मे जानाति श्रुतिकविरथाज्ञां सहचरः
> स शच्या धैर्यं चाशनिरथ यशोऽदस्त्रिभुवनम् ।
> बलं कैलासाद्रिः किमपरमहो साहसमपि
> क्षरत्कीलालाम्भःस्नपितचरणः खण्डपरशुः ॥ १५ ॥

---

निष्क्रम्य सलीलात्सपादपतनमभ्यर्थ्य मार्ग उपदिष्टः । साहसिकेन पुनस्तेन साध्यवृत्तिः श्रूयते ।

१. महाराज, वलीमुखसहस्रानीतैर्महीधरैः सेतुर्निर्मीयते ।

२. महाराज, अवधारय किमप्यन्यादृशी रचना कस्यापि वलीमुखस्य हस्तपुण्यतः उपर्येव तिष्ठन्ति ते महीधरा जल इति ।

(नेपथ्ये महान्कलकलः ।)

**मन्दोदरी**—[1]महाराअ, परित्ताहि परित्ताहि । (इति सत्रासमुद्वीक्षते ।)

**रावणः**—देवि, अलं शङ्कया ।

(पुनर्नेपथ्ये ।)

भो भो लङ्काद्वाररक्षिणो राक्षसगणाः,
दत्त द्वाराणि तूर्णं सरलतरगुरूण्यश्मसारार्गलानि
क्षिप्यन्तां शस्त्रजातं तदुपरि नयत स्वान्वयांश्चावधत्त ।
रुध्यध्वं निर्विषासून्शिशुयुवतिजनान्वीवधांश्चाद्रियध्वं
प्राप्तः सुग्रीवमुख्यप्लवगपरिवृतः सानुजो रामभद्रः ॥ १६ ॥

(नेपथ्यार्धं प्रविष्टा ।)

**प्रतीहारी**—[2]भट्ट, एसो पडीहारभूमीए चिट्ठदि सेणावई प्पहत्थो विण्णविदुकामो ।

**रावणः**—कथं सेनापतिः प्रहस्तः । प्रवेशय ।

**प्रतीहारी**—[3]तधा । (इति निष्क्रान्ता ।)

(ततः प्रविशति प्रहस्तः ।)

**प्रहस्तः**—अहो, मनुष्यपोतस्य तावदत्यूर्जस्वलं चरितम् । तथाहि ।

भीमं गोष्पदवद्विलङ्घ्य परितः कल्लोलमालाकुलं
पाथोनाथमुपेत्य मन्थरतरं लङ्कानिबद्धेक्षणः ।
स्कन्धावारमसौ निवेश्य विषमे सौवेलमूर्ध्नि स्वयं
कैश्चिद्वानरपुंगवैः परिवृतोऽध्यास्ते पुरः प्राङ्गणम् ॥ १७ ॥

(पुरो निरूप्य ।) कथमयं लङ्केश्वरः ।

**रावणः**—भद्र सेनापते, किंहेतुरयं कलकलः ।

**प्रहस्तः**—(स्वगतम् ।) कथमद्याप्यनभिज्ञ एव देवः । भवतु । कार्यमात्रं विज्ञापयामि । (प्रकाशम् ।)

पुरं निःशेषघटितं कपाटद्वारमावृतम् ।
रक्षा चास्तैर्भक्तिमद्भिः कौणपैः परितः कृता ॥ १८ ॥

---

१. महाराज, परित्रायस्व परित्रायस्व ।
२. भद्र, एष प्रतीहारभूमौ तिष्ठति सेनापतिः प्रहस्तो विज्ञापयितुकामः ।
३. तथा ।

**रावणः**—किमिति ।

**प्रहस्तः**—(स्वगतम् ।) कथं सैवावस्था । भवतु । (प्रकाशम् ।) देव लङ्केश्वर,

मनुष्यपोतमात्रेण सानुजेन पुरी तव ।
रुध्यते स्म यथासारं वीवधाद्यपि दुर्लभम् ॥ १९ ॥

(प्रविश्य ।)

**प्रतीहारी**—भट्ट, एसो को वि वलीमुहो रामस्स दूदो त्ति भणिअ पडीहारदेसे चिट्ठदि ।[1]

**रावणः**—(सावज्ञम्) वलीमुखः । प्रवेशय ।

**प्रतीहारी**—तधा ।[2] (इति निष्क्रम्याङ्गदेन सह प्रविश्य तं प्रति ।) एसो भट्टो । उपसप्प ।

**अङ्गदः**—(उपसृत्य ।) जयति जयति परममाहेश्वरो लङ्केश्वरः ।

**रावणः**—सुग्रीवानुचरो भवान् ।

**अङ्गदः**—नहि नहि ।

**रावणः**—तर्हि कस्य ।

**अङ्गदः**—लङ्केश्वर, श्रूयतां योऽहं यदर्थमागतश्च ।

दृप्यद्राक्षसचक्रकाननमहादावानलस्याज्ञया
दूतो दाशरथेस्तदीयवचसा त्वामागतः शासितुम् ।
सीतां मुञ्च भजावरोधनसुहृद्दायादपुत्रान्वितः
सौमित्रेश्चरणौ न चेत्तदिषुभिः शासिष्यसे दुर्मदः ॥ २० ॥

**रावणः**—(सहासम् ।) वलीमुखोऽपि वाचाटः । किं वक्तव्यम् ।

**अङ्गदः**—अहं यत्किंचित्स्याम् । त्वं तु सिद्धान्तमेवावधारय ।

तत्पादाब्जनखं किं वा तत्तीक्ष्णेषुमुखं नताः ।
स्प्रष्टारस्तेऽद्य मूर्धानस्तयोरभिमतं वद ॥ २१ ॥

**रावणः**—(सक्रोधम् ।) कः कोऽत्र भोः । यत्किंचिद्वादिनोऽस्य मुखं संस्कुर्यात् ।

---

१. भट्ट, एष कोऽपि वलीमुखो रामस्य दूत इति भणित्वा प्रतीहारदेशे तिष्ठति ।

२. तथा । एष भर्ता । उपसर्प ।

**प्रहस्तः**—देव, दूतः किलायम् । किमत्र क्रोधेन ।

**रावणः**—एतन्मुखसंस्कार एव तपस्विनः प्रत्युत्तरीकरणम् ।

**अङ्गदः**—(उद्रोमकूपस्फुरणमभिनीय ।)

यथासंख्यं तीक्ष्णक्रकचविषमक्रूरनखर-
प्रगल्भव्यापारप्रमथितशिरोबन्धशिथिलैः ।
शिरोभिस्ते दिग्भ्यो बलिमनुपहृत्यैव किमहं
निवर्ते यत्त्वां चेन्न रघुपतिदौत्येन परवान् ॥ २२ ॥

(इत्यामुख्य निष्क्रान्तः ।)

**रावणः**—(निरूप्य ।) अहो, जातिसुलभं चापलमप्रतीकार्यम् ।

**प्रहस्तः**—देव, निदेशाक्षरमालिकापरिग्रहायोत्कण्ठते हृदयम् ।

**रावणः**—किमत्रापि प्रष्टव्यो निदेशः ।

त्रोट्यन्तामभितोऽर्गलानि भुवनप्रख्यातसारोद्धतैः
पाट्यन्तां परितो रणानि च परव्याक्षेपिभी राक्षसैः ।
मथ्यन्तां रिपुघस्मरप्रहरणं विक्षोभ्य भङ्गया भुजाः
खण्ड्यन्तां च मुहुर्विवल्गनवृथोत्थानोत्कटा मर्कटाः ॥ २३ ॥

**प्रहस्तः**—यदाज्ञापयति महाराजः । (इति निष्क्रान्तः ।)

(नेपथ्ये महान्कलकलः ।)

(सर्वे ससंभ्रममाकर्णयन्ति ।)

(पुनर्नेपथ्ये ।)

वध्यन्तेऽस्रपपुङ्गवाः प्रतिभयाभोगैः प्लवङ्गाधिपै-
र्बध्यन्ते च वितर्दिकाः प्रतिदिशं कूचै रदोमूर्धभिः ।
छिद्यन्ते च बहिः प्रपित्सव इमे मध्ये क्षुधान्धाः क्षणा-
द्भिद्यन्ते पुरगोपुराः प्रतिदिशं क्षिप्तैश्च गण्डोपलैः ॥ २४ ॥

**रावणः**—(ऊर्ध्वमवलोक्य सक्रोधमुत्प्रेक्ष्य च ।) कथमेते तपस्विपक्षपातादनात्मज्ञा वासवपुरःसरा दिवौकसोऽपि मत्सरिणो विक्षुभ्यन्ते । तद्देवि, त्वमभ्यन्तरे प्रविश । अहमपि तावत्

कैश्चिद्दोर्भिः प्रमत्तान्प्लवगपरिवृढान्दिक्षु विक्षिप्य दक्षै-
रन्यैः पिष्ट्वापि युद्धाभिनयविधिनटौ तौ तपस्विप्ररोहौ ।

शिष्टैः कृष्ट्वा स्वचेतःप्रतिफलितवृथारन्ध्रमात्रप्रविष्टा-
न्दुष्टांस्तैर्विष्टपानप्यपगतकरुणस्तैर्बिभर्मि स्वकाराम् ॥ २५ ॥

(इति विकटं परिक्रम्य निष्क्रान्तः ।)

(ततः प्रविशति रथेन सपरिवारो वासवः सूतश्च मातलिः ।)

**मातलिः**—देव दिवस्पते, यथा तावदधिलङ्कमेषः

संवर्तप्रकटविवर्तसप्तपाथो-
नाथोर्मिव्यतिकरविभ्रमप्रचण्डः ।
निर्घोषः स्फुरति भृशं परःसहस्र-
व्यावल्गत्प्रबलगतागतास्त्रपाणाम् ॥ २६ ॥

तथा तर्कये युयुत्सया निर्यियासति नक्तंचरचक्रवर्तीति ।

**वासवः**—सूत, पश्य पश्य ।

दृढतरमभियोगं वीक्ष्य रक्षोविनेता
सह तनुजसगर्भप्रेष्यरक्षःसहस्रैः ।
सरभसमरराणि द्रागपावृत्य विद्रा-
वितनिखिलवनौका निर्गतोऽयं नगर्याः ॥ २७ ॥

(शब्दश्रवणं नाटयित्वा ।) आः, क एष कौबेर्याः ककुभः क्वणत्कनककिङ्किणीजालमालिना विमानेन सरभसमित एवाभ्येति ।

**सूतः**—(निर्वर्ण्य ।) देव, भवतैव गन्धर्वराज्याधिपत्याभिषेककृतमहाप्रसादश्चित्ररथः ।

(ततः प्रविशति विमानाधिरूढश्चित्ररथः ।)

**चित्ररथः**—जयति जयति देवराजः ।

**वासवः**—गन्धर्वराज, समरदिदृक्षानिर्भरं किं चेतः ।

**चित्ररथः**—तदप्यन्यदपि ।

**वासवः**—किमन्यत् ।

**चित्ररथः**—अलकेश्वरनिदेशः ।

**वासवः**—कीदृशः ।

**चित्ररथः**—

दुर्बाधो जनिदिवसान्मम प्रवृद्धः
कोऽप्याधिः प्रबलतमोऽथवा त्रिलोक्याः ।

तस्येदं निधनदिनं विधेर्विलासा-
कल्याणी परिणतिरस्तु वान्यथा वा ॥ २८ ॥

तदवगन्तुमहं प्रहितः ।

**वासवः**—सकुल्यानामप्येष मनोरथः ।

**चित्ररथः**—किं चित्रं सहजाः किल ते मिथः शत्रवः । कृत्रिमतापि निधिपुष्पकादिहरणवृत्तेर्दुर्वृत्तस्य सुप्रथिता । अथवा ।

यावत्त्रिलोक्यां किल जन्तुजातं तत्सर्वमस्योद्धतदुश्चरित्रैः ।
कदर्थितं श्रीरघुनन्दनस्य प्रीत्या विधत्ते विजयप्रतीक्षाम् ॥ २९ ॥

**वासवः**—(निरूप्य ।) गन्धर्वराज, यदिदमधित्यकातः सुवेलाद्रेरकाण्ड एव प्रबलकिलिकिलाकोलाहलमुखरितहरिन्मुखं वलीमुखचक्रमक्रममेवोच्चलितम्, तथा मन्ये पतितमेव प्रहरणैरिति ।

**चित्ररथः**—देवराज, पश्य, पश्य ।

अयं रक्षोनाथः क्षितिधरशिरोबन्धुरतरे
रथे तिष्ठन्प्रष्ठः प्रधनरसनिष्णातमनसाम् ।
मुहुर्ज्यावाघोषैर्बधिरयति दिक्प्रान्तशिखरि-
प्रतिध्वानाध्मातैर्गगनविवराभोगमभितः ॥ ३० ॥

**वासवः**—गन्धर्वराज, न तुलाधृतस्तावदनयोर्वीरसमयोचितः परिकरः । (सावेगम् ।) सूत सूत, सांग्रामिकं मे रथमुपहर रामभद्राय । अहमपि गन्धर्वराजाधिष्ठितं विमानमेवाधितिष्ठामि । (तथा करोति ।)

**सूतः**—यथाज्ञापयति देवराजः । (इति निष्क्रान्तः ।)

**चित्ररथः**—देवराज, कथमतिसंधेयं तुमुलम् । तथा हि ।

रक्षोभिर्विपिनौकसां परिवृढैश्चारादपास्तक्रमं
मुष्टीमुष्टि कचाकचि प्रहरणप्रक्षेपमूढात्मभिः ।
प्रारब्धं रणकर्म दुर्धरमिथोनिष्पेषशीर्यद्वपु-
र्निष्ठ्यूतास्रझरीभिरेव सरणिर्दुःसंचराभूद्यथा ॥ ३१ ॥

अपि च ।

वीराणां रुण्डतुण्डप्रविघटनपटुस्फारदोर्दण्डखण्ड-
व्यापारक्षिप्यमाणप्रतिभटविकटाटोपवर्ष्मप्ररूढः ।

कूटः कोऽप्येष युद्धाजिरभुवि जरठश्विभ्रकूटानुकारी
लीयन्ते यत्र शत्रुप्रपतनविवशाः कोटिशः शूरकीटाः ॥ ३२ ॥

वासवः—गन्धर्वराज, इत इतः ।

प्रासप्रोतप्रवीरोल्बणरुधिरपरामृष्टवुकाजिघत्सा-
धावद्गृध्राधिराजाप्रतिमतनुरुहच्छायया वारितोष्णाः ।
विश्राम्यन्ति क्षणार्धं प्रधनपरिसरेष्वेव मुक्ताभियोगा
वीराः शस्त्रप्रहारव्रणभररुधिरोद्गारदिग्धाखिलाङ्गाः ॥ ३३ ॥

इतोऽपि ।

प्रतीक्षन्ते वीराः प्रतिमुखमुरोभिः सरभसं
विपक्षाणां हेतीः प्रतिनियतधैर्यानुभवतः ।
विदीर्णत्वग्भारा दलितपिशिताश्छिन्नधमनि-
प्रकाण्डास्थिस्नायुस्फुटतरविलक्ष्यान्त्रनिवहाः ॥ ३४ ॥

चित्ररथः—देवराज, अपूर्वोऽयं रक्षःपतेः संग्रामावतरणसर्गः । तथा हि ।

प्रेक्ष्याः संग्रामसीमन्यनुजशतवृतो मेघनादोऽपि पार्श्वे
वामेऽन्यत्र प्रवीरेष्वतिविषममदोद्बोधितः कुम्भकर्णः ।
कैकस्या बन्धुवर्गोऽप्ययमतिविकटः पृष्ठतस्तिष्ठमानो-
ऽध्यास्ते मध्ये निषण्णो रथशिरसि भृशं विन्ध्यवद्दुर्विगाहः ॥३५॥

वासवः—गन्धर्वराज, एवमभियोगोद्धुरं द्विषन्तमभिवीक्ष्यापि निष्प्रकम्प एव रामभद्रः । अथवोचितमेवैतत् । यतः ।

न कम्पन्ते झंझामरुति किल वाति प्रतिदिशं
समुन्मूर्च्छत्साराः कुलशिखरिणः किंचिदपि ते ।
न मर्यादां तेऽपि प्रतिजहति गाम्भीर्यगरिम-
स्फुरद्वार्ब्रह्माणोऽकलितमहिमानोऽम्बुनिधयः ॥ ३६ ॥

चित्ररथः—देवराज, पश्य पश्य ।

भक्तिप्रह्वं कथमपि यवीयांसमुत्सृज्य चापा-
रोपव्यग्राङ्गुलिकिसलयं मेघनादक्षयाय ।

लक्षीकृत्य प्रधनकुशलं सानुजं राक्षसेन्द्रं
जीवां भूयो रघुपतिवृषा स्पर्शतः संस्करोति ॥ ३७ ॥

कथमेतदतिदुष्करमिव मन्ये । तथा हि ।

आक्रम्यैकैकमेते रजनिचरभटाः कोटिशः शस्त्रवर्षै-
र्भास्वद्वंशप्ररोहं पिदधति परितः सत्क्रियायौगपद्यात् ।

अथवा किं नाम दुष्करम् ।

एतावप्युत्प्रभावावकलितमहिमप्राभवौ युद्धभूमा-
विन्धाते शत्रुशस्त्रप्रविदलनफलस्पष्टत्राणाभियोगौ ॥ ३८ ॥

(समन्ततोऽवलोक्य ।) अहो, कथमेते वनौकसोऽपि महति सपत्नसंगरे स्वाभिधानयोगमेव ख्यापयन्तः पञ्चषाः केवलं रामभद्रपादमूलमासेवन्ते । तथा हि ।

सुग्रीवः स्यन्दनस्याग्रे सोऽङ्गदः पृष्ठतः पुनः ।
पञ्चषा जाम्बवान्भावी लङ्काधीशोऽपि पार्श्वयोः ॥ ३९ ॥

(विचिन्त्य ।) हनूमान्पुनः कनीयांसं काकुत्स्थम् । (सविमर्शम् ।) वरमेत एवोभयथा रामभद्रपादपद्मोपसेविनः । यतस्तावदेतेषाम्

स्वामिभक्तिश्च धैर्यं च व्याख्याते गात्रमक्षतम् ।
रक्षोभियोगस्त्वन्येषां दृश्यते दैन्यमप्यलम् ॥ ४० ॥

**वासवः**—गन्धर्वराज, मानुषे लोके वात्सल्यं नाम केवलमखिलेन्द्रियवशीकरणचूर्णमुष्टिः । यतः ।

सौमित्रिः कृतहस्तताप्रभृतिभिर्न्यूनो न कैश्चिद्गुणैः
सारेणापि पुनः प्रसिद्धमहिमा शौर्याग्रणी रावणिः ।
इत्थं तुल्यतरे किल व्यतिकरे रामस्य रक्षःप्रभो-
श्चान्योन्यं शरवृष्टिरेव वलते दृष्टिस्तयोर्वत्सला ॥ ४१ ॥

**चित्ररथः**—देवराज, युक्तमेवैतत् । एवं वात्सल्यमनुरुध्यन्ते किल महात्मानः । (साद्भुतौत्सुक्यम् ।) पश्यतु देवराजः ।

सौमित्रेर्बाणवज्रैरधिकतरममी मर्मवेधं प्रविद्धा
धावन्तः क्ष्माधरेन्द्रा इव रजनिचराः शेरते युद्धसीम्नि ।

रक्षोनाथोऽपि पुत्रान्कतिचन पतितान्वीक्ष्य रामाभियोगं
संत्याज्यानिष्टशङ्की निपतति तरसा मेघनादोपकण्ठम् ॥ ४२ ॥

तदेतदत्याहितमाशङ्के ।

**वासवः**—गन्धर्वराज, किमत्र नामात्याहितम् । अपरिच्छेद्यमहिमानः किलैते ककुत्स्थकुलप्ररोहाः । तथा हि ।

परःसहस्रं रजनीचरेन्द्रा
यथास्य वीरस्य किलैकलक्ष्यम् ।
तथा रणेष्वद्भुतवीरगोष्ठी-
भूषायमाणो दशकंधरोऽपि ॥ ४३ ॥

**चित्ररथः**—देवराज, बहुभिरेकस्याभियोगेऽपि शुभोदर्कतेत्येतदबहुव्यक्तिनिष्ठम् । (सचमत्कारम् ।) इतोऽवधत्तां देवराजः ।

रक्षोनाथे सरभसमितो निर्गते विग्रहेच्छुः
क्षुभ्यत्युच्चै रघुपतिशरैः कीलितः कुम्भकर्णः ।
कुम्भोऽप्येतां पितुरुपनतां वीक्ष्य वस्थां वपुष्मा-
न्गर्वः किं वा निपतति जवाज्जङ्गमः क्ष्माधरेन्द्रः ॥ ४४ ॥

(साद्भुतम् ।) अहो छिद्रसंचारिता मर्कटजातेः । यतः ।

उद्दिश्याराद्दशरथकुलाङ्कूरमाद्यं पतन्तं
सद्यः कुम्भं मृधभुवि कपिः कोऽपि मध्ये रुरोध ।

(सविशेषं निर्वर्ण्य ।) कथं सुग्रीव एव । (सविचिकित्सम् ।)

दोःस्तम्भाभ्यां सरभसमथापीड्य विक्षिप्य भूमौ
क्रान्त्वाप्येनं प्रतिघविवशो माषपेषं पिपेष ॥ ४५ ॥

(साशङ्कम् ।)

पतन्निरीक्ष्य निपपात च कुम्भकर्णः
सुग्रीवमुग्रतरविद्रुतिरग्रहीच्च ।
उन्मोच्य सोऽपि निपुणः स्वममुष्य नासां
लज्जां स्वसुश्च युगपत्किल निश्चकर्त ॥ ४६ ॥

**वासवः**—गन्धर्वराज, इत इतः ।

लघुरघुपतिरेष राक्षसाना-
मधिभुवि किंच कुमारमेघनादे ।
किमपि चरितमद्भुतं व्यतानी-
त्सपदि यथा प्रतिघान्धतामधत्त ॥ ४७ ॥

अहह । इदमतिदुष्करं प्रतिसंविधानमापतितमस्य रघुशिशोः । तथा हि ।

यावन्मन्त्रप्रभावादनधिगतगतीन्मेघनादप्रणुन्ना-
न्दुर्भेद्यान्नागपाशान्विहगपरिवृढास्त्रप्रयोगाद्व्यधूनोत् ।
तावद्रक्षोविनेत्रा पुनरतिरभसं मर्मणि क्रोधभूम्ना
गाढं विद्धः शतघ्न्या हनुमति सहसा मोहनिघ्नो न्यपप्तत् ॥४८॥

**चित्ररथः**—देवराज, अयमत्राद्भुततरो विमर्दः । यदा तु भ्रातुर्मोहमधिगम्य भाविलङ्केश्वरादक्रममेव करुणवीरानुभावभावितचित्तवृत्तिस्तथाविधस्यापि दर्शनोत्सुकः समवरुध्यत परितः कुम्भकर्णप्रमुखया रक्षःपृतनया, तदा पुनरिदमेव प्रत्यकार्षीत् । तथा हि ।

पुरां जेता पूर्वं त्रिपुरविजये यामुदवह-
त्स्थितिं तामेवायं रघुपतिवृषाश्रित्य वपुषा ।
क्षणाद्रक्षोनाथानुजमिषुभिराच्छिद्य कणश-
श्चमूं भस्मीकृत्याप्यनुजमभियात्युत्सुकतमः ॥ ४९ ॥

(निर्वर्ण्य ।) अहो वात्सल्यमहिमा रघुपुंगवस्य । येन पुनर्विषयीकृतमात्रामेवानुजस्यावस्थामभिजानाति स । (परितो निरूप्य । सहर्षम् ।) दिष्ट्या स्वस्ति रघुकुलकुमाराभ्यामेताभ्यामुत्पश्यामि । यतस्तावदेतद्घोरस्मिन्व्यसनमहार्णवे यातुधानाधीशेनापि सपरिवारेण कुम्भकर्णवधात्संभ्रान्तम् । (पुनरेतौ निर्वर्ण्य ।) कथमद्यापि प्रमुग्धावेव । विषमो व्यामव्यतिकरस्तावदापतितः । यतः ।

बहुच्छलानि रक्षांसि रिपवस्त्ववशः स्वयम् ।
एषावस्थापि कपयः सहायास्तेऽपि विक्लवाः ॥ ५० ॥

तत्किमुपक्रमं दैवमत्रेति न जाने ।

**वासवः**—गन्धर्वराज, किमेवमाशङ्कसे । पश्य । जीवत्प्रतिबोधितः किलायमचिन्त्यमहिम्नां प्रथमः प्राभञ्जनिः । संप्रति

उत्स्फूर्जद्रोमकूपः प्रलयपरिमिलत्पांशुवर्षानुकारी
किंचिद्भ्रमाग्रपुच्छाप्रतिमविचलनापास्तनक्षत्रचक्रः ।
भूम्नौत्सुक्यानुरूपव्यवसितिरधिकं पर्यवष्टुत्य गत्वा
क्वापि प्राज्ञः क्षणार्धात्कमपि गिरिमसावाहरन्नाजगाम ॥ ५१ ॥

**चित्ररथः**—(विभाव्य । सोल्लासम् ।) देवराज, पश्य ।

यथा चन्द्रालोकं कुमुदनिवहश्चुम्बकमणिं
द्दषत्सारस्तत्त्वामृतमपि भवाम्भोनिधिगतः ।
तथा संभाव्यैतौ हनुमदुपनीताद्रिमरुतं
झटित्युज्जृम्भेते किमपि गहनो वस्तुमहिमा ॥ ५२ ॥

(दक्षिणतो विभाव्य ।) कथमेष लङ्केश्वरः । कल्पावसाननिर्मर्यादं पाथ इव पाथोनाथस्य राक्षसबलमाकर्षन्पुनरभ्यमित्रमेति । (विमृश्य ।) संप्रति तु धर्मयुद्धसंभावनाप्रतिहतबहुतरप्रधानव्यक्तिरावणमेघनाद-शेषमेतद्राक्षसबलमेताभ्यामवगणितमित्येतावप्युभौ न गणयन्ते परः-सहस्रमप्यस्त्रपकीटाः । (पुनर्लक्ष्मणं निर्वर्ण्य ।) एवं तु

शाणोत्कीर्णो मणिरिव घनाम्भोदमुक्तो विवस्वा-
न्निःकोशोऽसिर्झटिति विगलत्कञ्चुकः पन्नगेन्द्रः ।
दीव्यत्युच्चैर्लघुरघुपतिः किंनु वा स्यात्किमन्य-
द्दिव्यौषध्या जयति महिमा कोऽप्यचिन्त्यानुभावः ॥ ५३ ॥

(निरूप्य ।) कथं प्रक्रान्तमेव कपिराक्षसनासीरचरयोर्भटयोः पुनरायोध-नम् । तथा हि ।

शितैर्बाणैरेके मृधभुवि परे तीक्ष्णनखरैः
क्रियासातत्येनाप्यहमहमिकाक्रान्तमनसः ।
मिथो विध्यन्ति स्म प्रबलतमसंमर्दविदल-
त्क्षितिक्षोदैः पिष्टातकसुरभिवक्षस्तटभृतः ॥ ५४ ॥

(सविशेषं निश्चित्य ।) तावदन्तरमनयोर्बलयोरधिगम्यमानं प्रातःसंध्यायां यावदन्धतमसारुणालोकयोः । तथा हि ।

प्रतिक्षणमियं रक्षःपृतना क्षीयतेतराम् ।
यथा तथा प्लवङ्गानामनन्तगुणतैधते ॥ ५५ ॥

वासवः—गन्धर्वराज, पुनरितो महत्कदनमुपक्रान्तम् ।

रक्षोनाथो रघूणां त्वरितमधिभुवा रावणिर्लक्ष्मणेन
द्वन्द्वीभूय प्रहृष्यद्भुजबलमहिमाविष्कृतेष्वासशिक्षौ ।
दिव्यास्त्राणां प्रयोगप्रतिकृतिमुचितां चाप्नवानौ मिथोऽमू
मूर्च्छत्कल्पावसानज्वलनपरिभवं सैन्ययोः पर्यदाताम् ॥ ५६ ॥

चित्ररथः—देवराज, दुरवरोधोऽयमनयोर्महावीरयोर्मिथो विमर्दः । तथा हि ।

क्ष्वेडाभिः ककुभः पृषत्कनिकरैर्व्योम द्विधा खण्डितै-
र्देहैर्विद्विषतां धरातलमपि प्रच्छादयन्तौ चिरम् ।
कुर्वातेऽश्रुजलाविलेक्षणपथान्येतावकाण्डोच्चर-
द्रोमाञ्चानि सवेपथून्यपि मुहुर्वर्ष्माणि नः पश्यताम् ॥ ५७ ॥

(सविशेषं विभाव्य ।) कथं प्रत्यक्षानुमानाभ्यामुपलभ्यमानमेकमेव वस्तु विप्रकृष्टान्तरं संपद्यते । तथा हि ।

अस्माद्रावणवृत्ताद्राघववृत्तं तु दशगुणं वीक्षे ।
अनुमन्येऽनन्तगुणं पार्श्वपतत्कौणपेन्द्रविनिपातैः ॥ ५८ ॥

(परितो निरूप्य । सकुतुकाश्चर्यम् ।)

यावन्तो रजनीचराः प्रहरणोद्घूर्णद्भुजाकेतवो
युध्यन्तोऽभिमुखाः स्फुरद्भुजमदाध्माताः पुरो निर्गताः ।
प्रक्षिप्ताशुगजालपक्षपवनाधूते प्रतापानले
चित्रं दाशरथेः क्षणाच्छलभतां यान्ति स्म सर्वेऽपि ते ॥ ५९ ॥

(सविमर्शम् ।) एवं किलेयं पाञ्चभौतिकी सृष्टिः ।

त्रैलोक्यमप्यपर्याप्तं रक्षसां स्थातुमप्यदः ।
येषां ते केवलं भूमौ विलिल्युः पञ्चतां गताः ॥ ६० ॥

वासवः—गन्धर्वराज, पश्य विस्मयनीयविप्रलम्भौ किलामू रामलक्ष्मणौ । यतः ।

एताभ्यां राघवाभ्यां सकुतुकमिषुभिश्छिद्यमानेषु मूर्ध-
स्वेकस्यैकोऽप्यनन्तः किमु सरसगुणो वर्णनीयोऽपरस्य ।

एतत्संपश्यतोरप्यतिचिरमनयोः कोऽप्यचिन्त्यः प्रभावो
यत्रोत्साहो न धैर्यं विरमति न शिरश्छेदतः पत्रिणोऽपि ॥६१॥

(नेपथ्ये ।)

भो भो रामभद्र, किमद्याप्युपेक्षसे दुर्वृत्तमेनम् । कथं वैकक्रियासाध्यमेतावन्तमर्थम् । अवधत्स्व तावत् ।

भवान्सीतां लोकस्त्रिभुवनगतः प्रीतिमुचितां
कनीयान्पौलस्त्यः पुरममरतां स्वां पुनरयम् ।
किमत्रान्यत्साक्षात्कृतपरमतत्त्वो मुनिगणः
प्रसादप्रोन्मीलन्मुदि मनसि शान्तिं च लभताम् ॥ ६२ ॥

**चित्ररथः**—(निशम्य ।) कथमेष दिव्यर्षिगणोऽप्येतयोर्वधाय राघवौ त्वरयति । अथवा दुष्टप्रशान्तिः कस्य न मनःप्रीत्यै । (ससंभ्रमाद्भुतौत्सुक्यम् ।) देवराज, पश्य ।

आभ्यां ब्रह्माच्युतास्त्रस्मरणसुरभिभिर्मार्गणै राघवाभ्यां
मूर्धानौ चिच्छिदाते रजनिचरपते रावणेश्च क्रमेण ।
पश्चाद्रक्षःकबन्धौ मृधभुवि विवशः सोऽपि रक्षोऽवरोधः
क्षोण्यां श्रीदाशरथ्योः शिरसि च वियतः पुष्पवर्षं पपात ॥६३॥

**वासवः**—(नेपथ्याभिमुखमवलोक्य । सोल्लासम् ।) गन्धर्वराज, पश्य तावदेते किल त्रिभुवनशत्रोर्दशकंधरस्य निधनवृत्तान्तश्रवणेन प्रमोदनिर्भराः सहमहर्षयः सुमनसः कमपि महोत्सवमनुबुभूषन्तो मामेव प्रतीक्षन्ते । तद्गच्छाम्येतेषां मनोरथसंपादनाय । त्वमप्येतद्वृत्तान्तनिवेदनेन प्रियसखमलकेश्वरं प्रीणय ।

(इति परिक्रम्य निष्क्रान्ताः सर्वे ।)

इति महावीरचरिते षष्ठोऽङ्कः ।

## सप्तमोऽङ्कः ।

(ततः प्रविशति शोकाकुला लङ्का ।)

**लङ्का**—(साक्रोशम् ।) हा महाराअ दसकन्धर, तेल्लोक्कवीरलच्छीपडिग्गहदुल्ललिद, हा सअलरक्खसलोअपडिवालणतमत्थदुम्मदभुअदण्ड, हा पसुवइपादजुअलच्चणोपजुज्जन्तमुद्धमुहपुण्डरीअ, हा केकसीपुत्ततिलअ, हा बन्धुअणवच्छल, कहिं मए तुमं पेक्खिदव्वो । हा कुमार कुम्भअण्ण, हा वच्छ मेहणाह, कहिं सि । देहि मे पडिवअणम् । (परितो विलोक्य ।) कहं को वि ण मन्तेदि । (ऊर्ध्वमवलोक्य ।) हा दुट्ठदेव्वदुव्विलसिअ, कीस एव्वं परिणदं सि । अहवा को एत्थ भवदो उवालम्भो । अत्तणो एव्व दुच्चरिदं एदं विपरिणमेदि । (इति सानुक्रोशं रोदिति ।)

(ततः प्रविशत्यलका ।)

**अलका**—अहो, कथमस्य रक्षःपतेरपूर्वः कोऽप्ययं दशापरिपाकः । यदेतावानपि रक्षःसर्गः क्षणेनैव विभीषणमात्रशेषः संवृत्तः । (शब्दश्रवणं नाटयित्वा । परिक्रम्य ।) कथं कनीयसी मे भगिनी प्रत्यग्रभर्तृविरहव्यथाविधुरा क्रन्दती लङ्का । (उपसृत्य ।) भगिनि, समाश्वसिहि समाश्वसिहि ।

**लङ्का**—(विभाव्य ।) कहं बहिणिआ मे अलआ ।

**अलका**—भगिनि, समाश्वसिहि समाश्वसिहि । एवं किलेयं लोकयात्रा ।

---

१. हा महाराज दशकंधर, त्रैलोक्यवीरलक्ष्मीप्रतिग्रहदुर्ललित, हा सकलराक्षसलोकप्रतिपालनसमर्थदुभुजदण्ड, हा पशुपतिपादयुगलार्चनोपयुज्यमानमुग्धमुखपुण्डरीक, हा केकसीपुत्रतिलक, हा बन्धुजनवत्सल, कुत्र मया त्वं प्रेक्षितव्यः । हा कुमार कुम्भकर्ण, हा वत्स मेघनाद, कुत्रासि । देहि मे प्रतिवचनम् । कथं कोऽपि न मन्त्रयते । हा दुष्टदैवदुर्विलसित, कस्मादेवं परिणतमसि । अथवा कोऽत्र भवत उपालम्भः । आत्मन एव दुश्चरितमेतद्विपरिणमति ।

२. कथं भगिनी मेऽलका ।

**लङ्का**—अइ बहिणिए, कुदो मे आस्सासो । जुवइजणमेत्तसेसा संवुत्तह्मि । एको उण कुलतन्तू कुमारविहीसणो क्खु चिट्ठदि त्ति सुणीअदि । सो वि मन्दभाइणीए अधण्णदाए रिउवक्खं जेव्व सेवेदि ।

**अलका**—अयि भगिनि, मा मैवम् । न खल्वस्माकं स रिपुपक्षः ।

**लङ्का**—कहं विअ ।

**अलका**—यस्य रिपुः स गतः । तच्च गतम् । संप्रति तु निसर्गसुहृदस्माकं त्रिभुवनप्रसिद्धसंबन्धो दाशरथिः ।

**लङ्का**—(आश्वस्य ।) कहं ईरिसो वि ।

**अलका**—ईदृश एव ।

**लङ्का**—कहं अह्म सामिसु ईरिसो वि परिणदो ।

**अलका**—अप्यननुसंधाने किमेवं भाषसे । शृणु ।

रघुकुलतिलकेऽस्मिन्भ्रातृमात्रद्वितीये
किमपि पितृनिदेशाद्दण्डकां संप्रविष्टे ।
यदुचितममुना ते राक्षसानां विनेत्रा
विहितमयमशेषः कर्मणस्तस्य पाकः ॥ १ ॥

**लङ्का**—हुं । तुम उण ईरिसे पत्थावे कहं एत्थ उवट्ठिदासि ।

**अलका**—अवधत्स्व । अहं किल वैमात्रकेण पौलस्त्येन गन्धर्वराजाच्चित्ररथादमुं वृत्तान्तमुपलभ्य शिष्टबन्धुप्रतिबोधनाय विभीषणस्य च लङ्काभिषेकसाक्षात्करणाय रावणापहृतविमानराजस्य पुष्पकस्य च रामभद्रोपस्थानोपदेशदानाय संदिष्टा ।

---

१. अयि भगिनि, कुतो म आश्वासः । युवतिजनमात्रशेषा संवृत्तास्मि । एकः पुनः कुलतन्तुः कुमारविभीषणः खलु तिष्ठतीति श्रूयते । सोऽपि मन्दभागिन्या अधन्यतया रिपुपक्षमेव सेवते ।

२. कथमिव ।

३. कथमीदृशोऽपि ।

४. कथमस्माकं स्वामिष्वीदृशोऽपि परिणतः ।

५. हुम् । त्वं पुनरीदृशे प्रस्तावे कथमत्रोपस्थितासि ।

**लङ्का**—[1]अम्मो, कहं भअवदो पसुवइणो वि मित्तं णिधाणाहिवई सअं एव्वं उवचरदि रामभद्दम् ।

**अलका**—अयि, किमत्राश्चर्यम् ।

इदं हि तत्त्वं परमार्थभाजामयं हि साक्षात्पुरुषः पुराणः ।
त्रिधा विभिन्ना प्रकृतिः किलैषा त्रातुं भुवि स्वेन सतोऽवतीर्णा ॥२॥

**लङ्का**—[2]कहं अम्ह सामिणा रक्खसणाहेण एदं ण ओधारिदम् ।

**अलका**—अयि सरले, शापमहिम्ना किल मूर्च्छन्मोहः सोऽपि नापराध्यति ।

(नेपथ्ये कलकलः ।)

(उभे ससंभ्रममाकर्णयतः ।)

(पुनर्नेपथ्ये ।)

समवधत्त भोस्त्रिजगच्चराणि भूतानि ।
वस्वर्करुद्रसहितः स्वयमेष साक्षा-
द्वृद्धश्रवाः समभिनन्दति साधु साध्वीम् ।
अग्निप्रवेशपरिनिर्गमशुद्धभावां
सीतां रघूत्तम भवत्स्थितिमाद्रियस्व ॥ ३ ॥

**अलका**—कथमेते दिवौकसोऽपि दशकंधरगृहनिवासव्यसनकौलीन-शङ्कापनुत्यै कृतपावकप्रवेशनिर्गमनां सीतादेवीमभिनन्दन्ति । अहह ।

पतिव्रतामयं ज्योतिर्ज्योतिषान्येन शोध्यते ।
इदमाश्चर्यमथवा लोकस्थित्यनुवर्तनम् ॥ ४ ॥

**लङ्का**—(शब्दश्रवणं नाटयित्वा ।) [3]कहं मङ्गलतूररवमिस्साओ गीदीओ णिसामीअन्ति ।

**अलका**—(नेपथ्याभिमुखमवलोक्य ।) कथं सीताविशुद्ध्यनुमोदनार्थ-मवतीर्णाभिरप्सरोभिर्दिव्यर्षिगणैश्च रामभद्रनिदेशेन निष्पादिताभिषेक-

---

१. अहो, कथं भगवतः पशुपतेरपि मित्रं निधानाधिपतिः स्वयमेवमुपचरति रामभद्रम् ।

२. कथमस्माकं स्वामिना राक्षसनाथेनेदं नावधारितम् ।

३. कथं मङ्गलतूर्यरवमिश्रा गीतयो निशम्यन्ते ।

कल्याणो विभीषणः पुष्पकं पुरस्कृत्य रामभद्रमभ्येति । तदेहि । तथाविधसहजमहिममहनीयचरितमहानुभावावलोकनेन चक्षुः कृतार्थयावः ।

(इति परिक्रम्य निष्क्रान्ते ।)

**मिश्रविष्कम्भकः ।**

---

(ततः प्रविशति पुष्पकं पुरस्कृत्य विभीषणः ।)

**विभीषणः**—अनुष्ठितः किल मया रामभद्रादेशः । तथा हि । सत्कृतं मातलिमनु

अजस्रगलदस्रसंप्लवकिणाङ्कगण्डस्थलाः
स्खलत्कनककङ्कणं नियमितैकवेणीभृतः ।
क्षमातलविवर्तनातिमलिनाम्बरा मोचिताः
प्रयान्ति किल सस्मिताः स सुरलोकबन्दिस्त्रियः ॥ ५ ॥

(उपसृत्य ।) जयति जयति रामभद्रः । देव, एतदवसानः किल निदेशः संपादितः ।

बन्दीभिरेधिताः काराः शृङ्खलाभिरलंकृताः ।
कार्तस्वराभिर्दृश्याभिः पताकाभिश्च सांप्रतम् ॥ ६ ॥

अयं च पुष्पकनामा स विमानराजः ।

असंरुद्धगतेरिष्टप्रवृत्तेर्वशवर्तिनः ।
मनोरथस्यानुगुणं सर्वदा यस्य चेष्टितम् ॥ ७ ॥

**रामः**—साधु लङ्केश्वर, साधु संपादितम् । (सुग्रीवं प्रति ।) सखे वैकर्तने, किमत्रावशिष्यते ।

**सुग्रीवः**—

उत्खातस्त्रिभुवनकण्टकोऽतिदृप्य-
द्दोर्दण्डाञ्चितमहिमाप्ययं निकारः ।
देव्याश्च प्रतिशमितस्तथात्र संधा
निर्व्यूढा प्रगुणविभीषणाभिषेकात् ॥ ८ ॥

संप्रति तु द्रोणाद्रिं प्रत्याहरतो हनूमतः सविशेषं गृहीतप्रवृत्तिर्दुर्मनायते किल कुमारभरतः । तं प्रति वार्ताहरः प्रविसृज्यतां प्राभञ्जनिः । स्वयमप्यलंक्रियतां विमानराजः ।

**रामः**—यदभिरुचितं प्रियवयस्याय। (इति तथा करोति।)

(सर्वे विमानारोहणं नाटयन्ति।)

**सीता**—(अपवार्य। लक्ष्मणं प्रति।) [1]अम्हेहिं संपदं कहिं पत्थीअदि।

**लक्ष्मणः**—देवि, रघुकुलराजधानीमयोध्यां प्रति।

**सीता**—[2]अवि समत्तो सो वणवासस्स अवही।

**लक्ष्मणः**—देवि, अद्यतनमेव दिनं तत्।

(सर्वे विमानगतिं रूपयन्ति।)

**सीता**—(साद्भुतम्।) [3]अज्जउत्त, एदे उण कदमा दूरादो अणिद्धारिददक्खिणोद्देसा अवित्थरिज्जन्तसामलत्तणपरिसरा दीसन्ति।

**रामः**—देवि, नैते भुवां परिसराः किंतु

साक्षात्किलाष्टमूर्तेस्तस्यैषा मूर्तिरम्मयी प्रथमा।
गीतः सागर इति नृभिरपरिच्छेद्यात्मगाम्भीर्यः॥ ९॥

**सीता**—[4]जो अम्हाणं जेट्ठससुरेहिं किदणिम्माणो त्ति बुड्ढपरंपराए सुणीअदि। एदस्स मज्झे वि किं एदं दूरप्पसारिदं धवलंसुअं विअ अहिणवतिणच्छण्णासु भूमिसु दीसइ।

**लक्ष्मणः**—देवि

सोत्साहं धृतशासनैः सकुतुकैर्ऋक्षौकसां नायकैः
दिक्पर्यन्तधराधरेन्द्रशिखराण्यानाय्य निर्मापितः।
कल्पान्तावधिवन्दनीयमहिमा लोकस्य सेतुर्नवः
कीर्तिस्तम्भ इवायमार्यचरितस्याम्भोनिधौ लक्ष्यते॥ १०॥

**रामः**—(अङ्गुल्या निर्दिशन्।) वत्स,

एता भुवः परिचिनोषि मिलत्तमाल-
च्छायान्धकारिततुषारनिकुञ्जपुञ्जाः।

---

१. अस्माभिः सांप्रतं क प्रस्थीयते।

२. अपि समाप्तः स वनवासस्यावधिः।

३. आर्यपुत्र, एते पुनः कतमा दूरतोऽनिर्धारितदक्षिणोद्देशा अविस्तीर्यमाणश्यामलत्वपरिसरा दृश्यन्ते।

४. योऽस्माकं ज्येष्ठश्वशुरैः कृतनिर्माण इति वृद्धपरम्परया श्रूयते। एतस्य मध्येऽपि किमेतद्दूरप्रसारितं धवलांशुकमिवाभिनवतृणाच्छन्नासु भूमिषु दृश्यते।

उन्मूर्च्छदच्छमलयाचलतुङ्गशृङ्ग-
प्राग्भारनिष्पतितनिर्झरपूरभाजः ॥ ११ ॥

**लक्ष्मणः**—आर्य, ता एवैताः । नातिदूर एव तावदासां स जीर्ण-कन्दरः ।

गर्जाजर्जरितासु दिक्षु बधिरे तत्स्फूर्जथुस्फूर्जितै-
र्व्योम्नि भ्राम्यति दुष्प्रभञ्जनजवादभ्रेऽप्यदभ्रे मुहुः ।
आक्षिप्यान्धयति द्रुमान्धतमसे चक्षुः प्रविश्य क्षपा
यत्रासीत्क्षपिता क्षरज्जलधरे त्वक्सारलक्षीकृते ॥ १२ ॥

**सीता**—(स्वगतम् ।) अहो[1] पमादो । कहं मह मन्दभाइणीए दुट्ठ-देव्वेहिं एदे वि महाणुहावा ईरिसं अवत्थन्तरं अनुहाविदा ।

**विभीषणः**—देव रामभद्र, दृश्यन्ते किलैताः कावेरीतीरभूमयः ।

यत्पर्यन्तमहीध्रसीम्नि कुहलीमाध्वीकधारोद्गिर-
द्धृष्यत्पूगवनीघनीकृततलैस्तुङ्गैर्जरच्छाखिभिः ।
लक्ष्यन्ते विविधाश्रमाः स्थिरतपःस्वाध्यायसाक्षात्कृत-
ब्रह्माणो निवसन्ति यत्र मुनयः कल्पस्थितेः साक्षिणा ॥ १३ ॥

यतो नातिदूर एव किलावाच्यां लोपामुद्रापरिष्कृतपरिसरे दीप्यति कौम्भसंभवं ज्योतिः ।

**रामः**—कथमतिक्रान्तमागस्त्यमाश्रमपदम् ।

अयं वारां राशिः किल मरुरभूद्यद्विलसितै-
रयं विन्ध्यो येनाहृतविहृतिराध्मानमजहात् ।
विलिल्ये यत्कुक्षिस्थितशिखिनि वातापिवपुषा
स कासां वाणीनां मुनिरकलितात्मास्तु विषयः ॥ १४ ॥

तदप्रमेयविभवा विश्रान्तरात्मसाक्षिणस्ते महात्मानः कुतश्च नाभि-वन्द्याः ।

(सर्वे तथा कुर्वन्ति ।)

---

१. अहो प्रमादः । कथं मम मन्दभागिन्या दुष्टदैवैरेतेऽपि महानुभावा ईदृशमवस्थान्तरमनुभाविताः ।

(आकाशे।)

सानुजस्त्वं प्रजाः शाधि कल्पान्तस्थायि ते यशः।
नामापि राम गृणताममृतत्वाय कल्पताम्॥ १५॥

**रामः**—(आकर्ण्य।) कथमशरीरिण्या गिरा परमनुगृहीतो महामुनिवन्दारुः।

(इतरे अभिनन्दन्ति।)

**विभीषणः**—देव रामभद्र, एतास्ताः पम्पापर्यन्तभूमयः, यासु बहोः कालादनुभूयमानान्यप्यभिज्ञानानि बलाच्चक्षुराकर्षन्ति। तथा हि।

बाणेनैकेन विद्धं विसलति पुरतस्तज्जरत्तालखण्डं
सोऽपि क्रीडाकपित्वं क्षणमिषुनिवहैरन्वभूदत्र वाली।
सौमित्रिः पादघातादिह हि सकुतुकं प्राक्षिपत्कूटमस्थ्नां
काबन्धं दृष्टमस्मिन्हनुमति भवतैवोत्तरीयं च देव्याः॥ १६॥

**सीता**—(स्वगतम्।) किं[1] णाम मह उत्तरीअं अज्जउत्तेण हणुमन्तस्स हत्थे दिट्ठम्।

**रामः**—(सस्मरणम्।) हे देवि, तदा किल वैक्लव्यादपह्रियमाणाया भवत्याः प्रभ्रष्टमनसूयानामाङ्कमुत्तरीयमस्माभिः प्रथममभिज्ञानमासादितम्।

दृशोः शरच्छीतकरप्रकाशः कायेऽपि कर्पूरपरागपूरः।
स्वान्तेऽपि सान्द्रामृतकुम्भसेकस्तदा यदासीत्किल दृष्टमात्रम्॥१७॥

(सीता लज्जां नाटयति।)

**लक्ष्मणः**—अयम्

तातस्य मित्रं किल गृध्रराजस्तं पापमस्मिन्सहसानुबध्नन्।
गात्रं जराजर्जरितं विहाय यशःशरीरं नवमाललम्बे॥ १८॥

**सीता**—(स्वगतम्।) केहं[2] मह कारणादो तारिसाणं वि महाणुहावाणं ईरिसो अवत्थाविसेसो णिसामीअदि।

**सुग्रीवः**—देव, अतिक्रम्यन्ते किलैता दण्डकासीमानः।

---

१. किं नाम ममोत्तरीयमार्यपुत्रेण हनुमतो हस्ते दृष्टम्।

२. कथं मम कारणात्तादृशानामपि महानुभावानामीदृशोऽवस्थाविशेषो निशम्यते।

यत्र तेऽपि स्वसुः कर्णनासौष्ठविचिचीषया ।
सानुप्लवाः क्वापि यातास्त्रिमूर्धखरदूषणाः ॥ १९ ॥

**सीता**—(वेपमाना ।) [1]अम्मो, कहं पुणो वि रक्खसा जेव्व सुणीअन्ति ।

**रामः**—देवि, अलं शङ्कया । अभिधानमात्रमवशिष्यते ।

शरासनस्य टङ्कारात्सौमित्रेः केवलं किल ।
रक्षसां प्रलयः सिंहगर्जनाद्दन्तिनां यथा ॥ २० ॥

(निरूप्य ।) किमन्यादृशीव गतिरस्य विमानराजस्य ।

**विभीषणः**—देव, अत्युच्चैः किलायं सह्यः सानुमान् । एनमतिक्रम्य गम्यते किलार्यावर्तः । तदतिक्रमणायेदमपि मध्यमलोकसांनिध्यं किंचिदुज्झति ।

**लक्ष्मणः**—द्रष्टव्यः किलोत्तमपुरुषपदलाञ्छितो मध्यमलोकः ।

(सर्वे उच्चैर्गतिवेगं निरूपयन्ति ।)

**रामः**—(निरूप्य । सविस्मयम् ।)

यः पूर्वेषां नः कुलस्य प्रतिष्ठा देवः साक्षादेष धाम्नां निधानम् ।
त्रय्याः सारः कोऽपि मूर्तो विवस्वान्प्रत्यासन्नः पुष्पकारोहणेन ॥ २१ ॥

(सर्वे कपोतकेन प्रणमन्ति ।)

**सीता**—(उच्चैर्निरूप्य ।) [2]अम्मो, कहं दिणम्मि वि तारआचक्कं विअ एदं दीसदि ।

**रामः**—देवि, तारकाचक्रमेवैतत् । अतिविप्रकर्षाद्रविकिरणप्रतिहतचक्षुर्भिर्न दृश्यते किल दिवसे । स विमानारोहणादपास्तः ।

**सीता**—(सकुतुकम् ।) [3]कहं गअणवाडिआए फुल्लाइं कुसुमाइं व्व दीसन्दि ।

**रामः**—(समन्तादवलोक्य ।) कथमपरिच्छेद्यदिग्विभागमिव संप्रति जगत् । यतः

---

१. अहो, कथं पुनरपि राक्षसा एव श्रूयन्ते ।
२. अहो, कथं दिनेऽपि तारकाचक्रमिवैतद्दृश्यते ।
३. कथं गगनवाटिकायां फुल्लानि कुसुमानीव दृश्यन्ते ।

संस्तूयन्ते विप्रकर्षाद्भौमा नोपप्लवः स्फुटम् ।
आन्तरीक्षाः पुनरमी सर्वतः सदृशा इव ॥ २२ ॥

**सुग्रीवः**—देव, भ्रातुः सौहार्देन विधेयीकृतो यदृच्छया दिगन्तेषु विचरन्नभ्युपपन्नवानस्मि । तथा हि ।

उदयास्ताचलावेतौ यत्क्रोडे बाल्यवार्धके ।
विस्रम्भाच्चन्द्रसूर्याभ्यामतीयेते विनिर्भयम् ॥ २३ ॥

अवधत्तामितो देवः ।

कैलासाञ्जनशैलावेतौ तुल्योन्नतत्वपरिणाहौ ।
चन्दनमृगमदलेपं गमितौ क्षोण्या नु वक्षोजौ ॥ २४ ॥

इतश्चायं काञ्चनाचलः । परतश्चायमभ्रंकषशिरः शिखरी गन्धमादनः । ततः परस्मादगम्या मादृशां भूमयः ।

**रामः**—(परितो विलोक्य । ससंभ्रमाद्भुतम् ।) कथमेकपद एव सर्वमहो चक्षुर्गोचरः । परिच्छेद्या च सर्गस्थितिः ।

**सीता**—अम्मो, एदं किं वि अदिट्ठपुव्वं अण्णारिसं जेव्व दीसइ ण माणुसो णावि पसू । [1]

**रामः**—देवि, अश्वमुखं किन्नरमिथुनमेतत् । प्रायेणैतासु भूमिष्वेवंविधानामेव भूयसां प्रचारः ।

**विभीषणः**—कथं संमुखमेवाभ्येति । प्रायेणालकेश्वरादेशधारिणानेन भवितव्यम् ।

(नेपथ्ये ।)

देव दिनकरकुलमणे रामभद्र, भवन्तमेकपिङ्गाचलेश्वरनिदेशादुपश्लोकयितुं साकेतं प्रस्थितयोरावयोर्यात्रासुकृतपरिणामादन्तराल एव चक्षुर्विषयोऽसि । तन्निदेशपारतन्त्र्यमपि भूयसे गुणाय । यत्पुराणस्यैव पुंसोऽभिव्यक्तिपर्यायनिष्ठं महः साक्षात्क्रियते । (इति प्रदक्षिणीकृत्याभिवन्देते ।)

(सर्वे निरूपयन्ति ।)

---

१. अहो, इदं किमप्यदृष्टपूर्वमन्यादृशमेव दृश्यते न मानुषो नापि पशुः ।

(पुनर्नेपथ्ये ।)

**किन्नरः—**

आपन्नवत्सल जगज्जनतैकबन्धो
विद्वन्मरालकमलाकर रामचन्द्र ।
जन्मादिकर्मविधुरैः सुमनश्चकोरै-
राचम्यतां तव यशः शरदां सहस्रम् ॥ २५ ॥

(तत्रैव ।)

**किन्नरी—**

यावत्फणीन्द्रशिरसि क्षितिचक्रमेत-
द्यावत्पुनर्ग्रहगणैः शबलं विहायः ।
वैदेहि तावदमलो भुवनेषु पुण्यः
श्लोकः प्रशस्तचरितैरुपगीयतां ते ॥ २६ ॥

(दम्पती मन्दाक्षं नाटयतः ।)

**इतरे**—प्रियं नः प्रियम् ।

**रामः**—लङ्केश्वर, चिरसंचरणादत्र नानुरोधं तर्कये । तद्दूरमितो मध्यमलोकसांनिध्येन गन्तुम् ।

**विभीषणः**—देव,

एते ते सुरसिन्धुधौतदृषदः कर्पूरखण्डोज्ज्वलाः
पादा जर्जरभूर्जवल्कलभृतो गौरीगुरोः पावनाः ।
तत्त्वालोकनिरस्तमोहतमसामध्यात्मविद्याजुषां
यत्र ब्रह्मविदां निसर्गमधुरं जागर्ति सौम्यं महः ॥ २७ ॥

**लक्ष्मणः**—आर्य, कथमेते भुवां परिसराः संस्तुतपूर्वोन्यविषयग्राहित्वं न क्षमन्ते चक्षुषोः ।

**रामः**—(निरूप्य । सस्मरणावेगम् ।) वत्स, ता एवैता गुरूणां कौशिकपादानां संचरणेन पवित्रितपर्यन्तास्तपोवनभूमयः । यत्र तु तत्रभवता याज्ञवल्क्यान्तेवासिना द्वितीयेन विदेहाधिपतिना सह तत्संलापामृतप्रमोदमनुभवतां गुरूणां लालनीयाभ्यामावाभ्यां बाल्योचितमुल्ललितम् ।

**सीता**—(स्वगतम् ।) कहं[1] कणिट्ठतादो त्ति सुणीअदि । (इति परितः सस्पृहमालोकयते ।)

**रामः**—लङ्केश्वर, नोचितमिदानीं गुरुचरणपङ्कजपवित्रितेषु परिसरेषु विमानाधिरोहणम् ।

(नेपथ्ये ।)

भो भो रामलक्ष्मणौ, स भगवान्कुशाश्वान्तेवासी वां समाज्ञापयति ।

**उभौ**—(विमानाधिदेवतामिङ्गितेन स्तम्भाय नियुज्य ।) अवहितौ स्तः ।

(पुनर्नेपथ्ये ।)

पुरीं यथा स्थितौ यातं विलम्बेथां च मान्तरा ।
अरुन्धतीसहचरं ज्योतिर्वां संप्रतीक्षते ॥ २८ ॥

अहमपि तृतीयकालक्रियानुसंधानपरवान्मुहूर्तद्वयेनागत एव ।

**उभौ**—यथाज्ञापयन्ति गुरवः । (पुनर्विमानं प्रतिष्ठेते ।)

**रामः**—अहो, महात्मानोऽपि वात्सल्यपरतन्त्राः । यन्महिम्ना तपःस्वाध्याययोर्लवशो विभक्ते समये तत्राप्यागमनमनुरुध्यन्ते । अथवा युक्तमेवैतत् । यतः करुणापारतन्त्र्येण मृदुस्वभावास्ते तपोवनरुरुषु तरुषु च किं मनुष्येषु । विशेषस्तु

राज्ञां मार्तण्डवंश्यानां गृहे नौ जन्म केवलम् ।
शास्त्रास्त्रज्ञानमुख्यस्तु संस्कारोऽस्मान्महात्मनः ॥ २९ ॥

**विभीषणः**—(विलोक्य ।) किमिदमकाण्ड एव नीहारजालैरिव क्षमारजोभिराच्छाद्यन्ते ककुभः ।

(सर्वे सविस्मयं पश्यन्ति ।)

**रामः**—(सवितर्कम् ।) मन्ये प्राभञ्जनेरसत्प्रवृत्तिमुपलभ्य मां प्रत्युद्यातीह ससैन्यो भरतः ।

(प्रविश्य ।)

**हनूमान्**—(सपादपङ्कजस्पर्शं प्रणम्य ।) देव,

स्थितो ध्यायन्नन्तः किमपि चरितं स्वेन भवत-
श्चिरं वार्तामेनामथ मदुपलभ्य प्रचलितः ।

---

१. कथं कनिष्ठतात इति श्रूयते ।

जटी चीरी रामेत्यमृतविभवं नाम रसय-
न्मुहुर्हर्षोद्भ्रान्तप्रकृतिसहितोऽभ्येति भरतः ॥ ३० ॥

**रामः**—(सोल्लासम् ।) अहो, चिरायायुष्मत्सौहार्दमुपलभामह इति सर्वानन्दानामुपरि वर्तामहे ।

**लक्ष्मणः**—(सौत्सुक्यम् ।) सखे मारुते, कुत्रार्यः ।

**हनूमान्**—य एते सैन्यस्य पुरतः पञ्चषास्तन्मध्मे पुरःसरः सानुजः स महात्मा भरतः ।

(लक्ष्मणो निर्वर्णयति ।)

**सीता**—(निरूप्य ।) [1]कहं अण्णारिसो जेव्व दीसई ।

**विभीषणः**—हंहो विमानराज, चिराय बन्धुजनदर्शनालिङ्गनसंभावनादिना मिथोऽङ्गप्रमोदमनुभवन्त्वेते महानुभावाः । तत् क्षणं विरम ।

(सर्वे विमानावतरणं नाटयन्ति ।)

(ततः प्रविशतः कतिचनप्रधानपुरुषपरिवृतौ भरतशत्रुघ्नौ ।)

**रामः**—(सरभसं पादपतितं भरतमुत्थाप्य ।) एह्येहि वत्स,

अनुभावयति ब्रह्मानन्दसाक्षात्क्रियामिव ।
स्पर्शस्तेऽद्य वराम्भोजप्रस्फुरन्नालकर्कशः ॥ ३१ ॥

(इति निर्भरमालिङ्ग्य विसृजति ।)

(लक्ष्मणः सपादपतनं भरतमालिङ्गति ।)

(शत्रुघ्नो रामलक्ष्मणावभिवादयते ।)

**उभौ**—कुलस्थितिमनुवर्तस्व ।

(भरतशत्रुघ्नौ दण्डवत्सीतां प्रणमतः ।)

**सीता**—[2]कुमारा, जेट्ठाणं भादुआणं अभिमदा होह ।

**रामः**—वत्सौ भरतशत्रुघ्नौ,

असाकं व्यसनाम्भोधावयं पोतत्वमागतः ।
कपीन्द्रोऽयं च लङ्केन्द्रो मित्रं धर्महिते रतः ॥ ३२ ॥

तत् परिष्वजतम् । (इति सुग्रीवविभीषणौ दर्शयति ।)

---

१. कथमन्यादृशा एव दृश्यते ।

२. कुमारौ, ज्येष्ठयोर्भ्रात्रोरभिमतौ भवतम् ।

(भरतशत्रुघ्नौ तौ परिष्वज्य यथोचितमुपचरतः ।)

**भरतः**—आर्य, कुलगुरुर्नो भगवान्मैत्रावरुणिः सिंहासनग्रहे संपादितसकलाभिषेकसंभारो भवन्तं प्रतीक्षते । यथाज्ञापयत्यार्यः ।

**रामः**—(स्वगतम् ।) कौशिकपादाः प्रतीक्षणीयाः स च भगवान्मैत्रावरुणिरेवमाज्ञापयति । भवतु । समयोचितं प्रतिकरिष्यते । (प्रकाशम् ।) यथाज्ञापयति कुलगुरुः ।

(सर्वे परिक्रामन्ति ।)

(ततः प्रविशति वसिष्ठो दशरथकलत्रैरुपचर्यमाणारुन्धती च ।)

**वसिष्ठः**—(स्वगतम् ।)

क्षमायाः स क्षेत्रं गुणमणिगणानामपि खनिः
प्रपन्नानां मूर्तः सुकृतपरिपाको जनिमताम् ।
कृपारामो रामो बहिरिह दशोपास्यत इति
प्रमोदाद्वै तस्याप्युपरि परिवर्तामह इमे ॥ ३३ ॥

भवतु । तथापि लोकयात्रानुवर्तनीया । (प्रकाशम् ।) वध्वौ कौशल्यासुमित्रे ।

**उभे**—[1]आणवेदु कुलगुरू ।

**वसिष्ठः**—दिष्ट्याक्षतप्रतिनिवृत्तवत्से स्तः ।

**उभे**—[2]तुह्माणं आतिसाणं पहावो ।

**अरुन्धती**—(कैकेयीं विलोक्य ।) वत्से कैकेयि, किमेवमतिदुर्मनायसे ।

**कैकेयी**—[3]अम्ब, मह मन्दभाइणीए अधण्णदाए सअलो वि लोओ एव्वं कोलीणं भणदि । जं वच्छाणं पवासजणणी मज्झमजणणी मन्थरा मुहे आसि । ता कहं वच्छाणं मए मुहं पेक्खिदव्वम् ।

**अरुन्धती**—वत्से, अलं वृथा कौलीनशङ्कया । आर्यमिश्रैरयमर्थस्तदैवान्तरेण चक्षुषा साक्षात्कृतः ।

---

१. आज्ञापयतु कुलगुरुः ।

२. युष्माकमाशिषां प्रभावः ।

३. अम्ब, मम मन्दभागिन्या अधन्यतया सकलोऽपि लोक एवं कौलीनं भणति । यद्वत्सयोः प्रवासजननी मध्यमजननी मन्थरामुख आसीत् । तत्कथं वत्सयोर्मया मुखं प्रेक्षितव्यम् ।

सर्वाः—कहं[1] विअ ।

अरुन्धती—मन्थरारूपधारिण्या शूर्पणखया माल्यवद्वचनादेतद्विहितमिति ।

सर्वाः—अहो[2] रक्खसाणं दुट्ठताभिओओ जो इहट्ठिदं अबलाजणं वि बाधेदि ।

वसिष्ठः—हुं मङ्गलसमयेऽलमलं यत्किंचिद्दुःखैः का पुनरद्यापि राक्षसाभियोगवार्ता ।

रामः—(वसिष्ठं विलोक्य । सोल्लासम् ।) स एष भगवान्मैत्रावरुणिः ।

यद्दर्शनात्किमप्येवं द्रवीभवति मे मनः ।
राकासुधाकारलोकादिन्दुकान्तोपलो यथा ॥ ३४ ॥

(लक्ष्मणं प्रति ।) वत्स, इत इतः ।

उभौ—(उपसृत्य ।) भगवन्कुलगुरो, रामलक्ष्मणावभिवादयेते ।

वसिष्ठः—

चक्षुषां स्वस्वसमये संस्कारत्वं समाप्नुताम् ।
वत्सौ नयेन धर्मेण ज्ञानेन च पुरस्कृतम् ॥ ३५ ॥

(उभावरुन्धतीमभिवन्देते ।)

अरुन्धती—इष्टैर्युज्येथाम् ।

(उभौ क्रमेण सर्वा मातॄरभिवन्देते ।)

सर्वाः—(तौ निर्भरं परिष्वज्य मूर्ध्न्युपाघ्राय ।) जं[3] अम्हे चिन्तेमो तं तुह्माणं होदु ।

(सीतोपसृत्य वसिष्ठं प्रणमति ।)

वसिष्ठः—वत्से, वीरप्रसविनी भव ।

---

१. कथमिव ।

२. अहो राक्षसानां दुष्टताभियोगो य इहस्थितमबलाजनमपि बाधते ।

३. यद्वयं चिन्तयामस्तद्युष्माकं भवतु ।

(सीतारुन्धतीं प्रणमति ।)

**अरुन्धती**—(सीतां निर्भरमालिङ्ग्य ।)

लोपामुद्रानसूयाहमिति तिस्रस्त्वया सह ।
पतिव्रताश्चतस्रोऽत्र सन्तु जानकि सांप्रतम् ॥ ३६ ॥

(सीता श्वश्रूरभिवन्दते ।)

**सर्वाः**—जादे, कुलपडिट्ठावअदारअप्पसविणी होहि[1] ।

(नेपथ्ये ।)

प्रवर्तन्तां पौराः प्रतिसदनमद्योत्सवविधौ
चिरं स्वे स्वे कर्मण्यथ समवधत्ताप्यविकृताः ।
यथोक्तं संभारं पुनरिह विधत्त द्विजवराः
कृशाश्वान्तेवासी कुशिकपतिराज्ञापयति वः ॥ ३७ ॥

**वसिष्ठः**—(आकर्ण्य ।) अहो, अयं भाग्यमहिमा वत्सस्य । यद्भगवान्कौशिकः स्वयं सिंहासने समभिषेक्तुं संप्राप्तः ।

**इतरे**—प्रियं नः प्रियम् ।

(ततः प्रविशति सशिष्यो विश्वामित्रः ।)

**विश्वामित्रः**—

सत्रप्रत्यूहशान्त्यै दशरथकरतः कर्षतैनं मया य-
द्यत्स्वान्ते संविमृष्टं तदनुगुणविधौ यच्च वैयग्र्यमासीत् ।
तद्दैवस्यानुगुण्यात्प्रयतनविभवैश्चाद्य राज्येऽभिषिच्य
श्रीरामं निर्वृतानां फलितमिति मुहुः संप्रमोदामहे नः ॥ ३८ ॥

(इति परिक्रामति ।)

**वसिष्ठः**—स एष कौशिकः

क्षात्रं प्राकृतिकं तेजो ब्राह्मं यस्य विशिष्यते ।
लोकोत्तरचमत्कारनिधेस्तस्याद्भुतं न किम् ॥ ३९ ॥

---

१. जाते, कुलप्रतिष्ठापकदारकप्रसविनी भव ।

(वसिष्ठविश्वामित्रावुपसृत्यान्योन्यमुपचरतः।)

**विश्वामित्रः**—भगवन्मैत्रावरुणे, किमद्यापि प्रतीक्ष्यते ।

**वसिष्ठः**—यथोचितमाह्रियताम् ।

**विश्वामित्रः**—(दिव्यर्षिगणमुद्दिश्य ।) निर्वर्त्यतां रामभद्रस्याभिषेकः ।

(मुनयो यथोचितमाचरन्ति ।)

(नेपथ्ये दुन्दुभिध्वनिः ।)

(सर्वे सविस्मयं पुष्पवृष्टिं रूपयन्ति ।)

**वसिष्ठः**—कथं सलोकपालो भगवान्पाकशासनो रामभद्रस्याभिषेकमनुमोदते ।

(कृताभिषेकमङ्गलः ।)

**रामः**—(वसिष्ठविश्वामित्रावुपसृत्य ।) गुरू, अभिवादये ।

**उभौ**—

रामभद्र गुणाराम भ्रातृभिस्त्वं पुरस्कृतः ।
इक्ष्वाकुमुख्यैर्भूपालैश्चिरमूढां धुरं वह ॥ ४० ॥

**इतरे**—तथास्तु । (इत्यनुमोदन्ते ।)

**विश्वामित्रः**—वत्स रामभद्र ।

**रामः**—आज्ञापयन्तु गुरवः ।

**विश्वामित्रः**—विसृज्येतामेतावनुभूतोत्सवप्रमोदौ सुग्रीवविभीषणौ । पुष्पकं च संकल्पसमयसुलभं राजराजमेवाश्रयताम् ।

(रामस्तथा करोति ।)

**विश्वामित्रः**—वत्स रामभद्र,

निर्व्यूढं गुरुशासनं गुरुतरं धर्मोऽपि संरक्षितो
रक्षःसंहरणाच्चिकित्सितमनोरोगा त्रिलोकी कृता ।
सिद्धार्थाश्च सुराः सहानुजसुहृद्द्वारेण राज्यं पुन-
र्लब्धं किं करणीयमेतदधिकं श्रेयस्तदप्युच्यताम् ॥ ४१ ॥

**रामः**—इतोऽधिकमपि श्रेयोऽस्ति । तथापीदमस्तु भगवत्पादप्रसादात् ।

क्ष्मापालाः क्षीणतन्द्राः क्षितिवलयमिदं पान्तु ते कालवर्षा
वार्वाहाः सन्तु राष्ट्रं पुनरखिलमपास्तेति संपन्नसस्यम् ।
लोके नित्यप्रमोदं विदधतु कवयः श्लोकमाप्तप्रसादं
संख्यावन्तोऽपि भूम्ना परकृतिषु मुदं संप्रधार्य प्रयान्तु ॥ ४२ ॥

**विश्वामित्रः**—एवमस्तु ।

(इति निष्क्रान्ताः सर्वे ।)

इति सप्तमोऽङ्कः ।

**समाप्तमिदं महावीरचरितं नाम नाटकम् ।**



# महावीरचरितश्लोकानां सूची।




अकलिलतपस्तेजो २।३०
अकाण्डशुष्काशनि ५।५७
अजस्रगलदस्रसंप्लव ७।५
अज्ञो वा यदि वा ३।३५
अत्र सीरध्वजो वेत्ता १।४१
अथ स्वस्थाय देवाय १।१
अनुत्पन्नं ज्ञानं यदि ३।३६
अनुभावयति ब्रह्मा ७।३१
अनेकयुगजीविन्या ५।११
अन्तर्धैर्यभरेण वृद्ध ३।४०
अन्योन्यमाहात्म्यविदो ४।३४
अन्विष्यतः प्रमथनाय २।३१
अपरिष्वज्य भरतं ४।४३
अपि प्रभोर्वः कुशलं १।२९
अपि प्रवृत्तयज्ञोऽसौ १।१९
अप्राकृतस्य चरिता २।३९
अप्राकृतानि च गुणै ४।१२
अप्राकृताभिजनवीर्य ५।५६
अप्राकृतेषु पात्रेषु १।३
अभिजनतपोविद्या २।११
अमृताध्मातजीमूत २।४६
अमोघमस्त्रं क्षत्रस्य २।५
अम्भोधेर्नारिकेली ५।३२
अयं रक्षोनाथः क्षिति ६।३०
अयं वारां राशिः किल ७।१४
अयं विनेता दृप्तानां ३।४६
अयं स भृगुनन्दन २।२३
अयं तु यजमानेन १।१५
अरिष्टस्त्वाष्ट्रस्य प्रश ४।१८
अर्थित्वे प्रकटीकृते २।९
अश्रान्तपुण्यकर्माणः १।२६
असंरुद्धगतेरिष्ट ७।७
असाध्यमन्यथादोषं ४।२३
अस्त्रप्रयोगखुरली २।३४
अस्त्वेकेन वरेण ४।४१
अस्माकं व्यसनाम्भो ७।३२
अस्माद्रावणवृत्ता ६।५८
अस्मानधिक्षिपतु ३।३१
अस्माभिरप्यनाशास्यो ४।१३
अस्माभिरेव पाल्यस्य ३।३८
अहं हि श्रमणानाम ५।२७
आक्रम्यैकैकमेते रजनि ६।३८
आतङ्कश्रमसाध्वस २।२१
आदित्याः कुलदेवता ४।१४
आनन्दाय च विस्मयाय ५।४
आन्त्रप्रोतबृहत्कपाल १।३५
आपन्नवत्सल जग ७।२५
आभुग्नभ्रुकुटीविटङ्क ५।२१
आभ्यां ब्रह्माच्युताभ्र ६।६३
आर्यस्य वालिन इव ५।५४
इक्ष्वाकुवंशतिलकस्य ४।४९
इदं हि तत्त्वं परमार्थ ७।२
इष्टापूर्तविधेः सपत्न ३।१
इह समदशकुन्ता ५।४०
उत्कृत्योत्कृत्य गर्भा २।४८
उत्खातक्षितिपाल २।१९
उत्खातत्रिभुवन ७।८
उत्तालताटकोत्पात १।३७
उत्तिष्ठत वधाय नः ४।६
उत्तिष्ठोत्तिष्ठ याव ३।३२
उत्पत्तिर्जमदग्नितः २।३६
उत्पत्तिर्देवयजना १।२१
उत्पत्त्यैव हि राघवः २।६
उत्पुष्यद्गलधमनि ६।१४

उत्सिक्तस्य तपःपरा २।२२
उत्स्फूर्जद्रोमकूपः ६।५१
उदयास्ताचलावेतौ ७।२३
उद्दिश्याराद्दशरथ ६।४५
ऋषिभिरुपजुष्टतीर्थां ४।६०
ऋषिरयमतिथिश्चे २।४४
एकव्यत्ययपराध ३।१३
एकस्य राघवशिशोः ३।१६
एकीभूय शनैरनेक ४।५६
एतन्निरीक्ष्य निपपात ६।४६
एता भुवः परिचिनोषि ७।११
एताभ्यां राघवाभ्यां ६।६१
एताश्चतुर्भ्यो रघु १।५८
एते ते सुरसिन्धुधौत ७।२७
एवं मया नियमित ३।१५
एष तातश्च तातश्च ४।५३
एष नो नरपति ३।३३
एष प्रह्वोऽस्मि १।४७
एष मूर्त इव क्रोधः ५।२०
एषोऽस्मि प्रलयमरु ५।१५
एह्येहि वत्स रघु १।५५
कन्यारत्नमयोनिजन्म १।३०
कर्णावर्जितदिव्यतन्त्र ५।६३
कल्पस्यादौ मम ५।१०
कल्पापायप्रणयि २।२५
का ते स्तुतिः स्तुति ४।२९
कामं हि नः स्वजन ३।४२
कामं गुणैर्महानेष ३।१२
कामं त्वया सह श्लाघ्यो ५।५२
कावेरीवलयितमेखलस्य ५।३
किं त्वनुष्ठाननित्यत्वं ४।३३
कृत्तक्षत्रियकण्ठ ३।४८
कृशाश्वान्तेवासी ४।१
कैलासाञ्जनशैलावेतौ ७।२४
कैलासे तुलिते जिते ५।३७
कैलासोद्धारसार २।१६
कैश्चिद्दोर्भिः प्रमत्ता ६।२५
कौ त्वामनुगतावेतौ १।२२
क्षमायाः स क्षेत्रं गुण ७।३३
क्षत्रालोकक्षुभितहुत ३।२८
क्षात्रं प्राकृतिकं तेजो ७।३९
क्षितेरानन्तर्यादप ४।७
क्षमापालाः क्षीणतन्द्राः ७।४२
क्ष्वेडाभिः ककुभः पृषत्क ६।५७
गभीरो माहात्म्या २।१५
गर्जत्पर्जन्यघोरस्त ५।५३
गर्जाजर्जरितासु दिक्षु ७।१२
चक्षुषां स्वस्वसमये ७।३५
चञ्चत्पञ्चशिखण्ड २।३२
चतुर्दशसहस्राणि ५।१३
चूडाचुम्बितकङ्कपत्र १।१८
जगत्सनातनगुरो ३।३९
जनकानां रघूणां च १।५७
जनपदबहिर्निष्ठा ४।२८
जम्बुद्वीपेऽथवान्येषु ६।१३
ज्ञाता एव वयं जगत्सु ५।५१
ज्याजिह्वया वलयितो ३।२९
ज्योतिर्ज्वालाप्रचय २।२६
ज्वलिततपसस्तेजो १।५१
झटित्युन्मीलितप्रज्ञ १।४८
झटित्येवोत्तप्तद्रुत १।४३
तत्कावकालपर्जन्य १।६०
तत्क्रूरदन्तकरपत्र ५।२९
तत्पादाब्जनखं किं वा ६।२९
तत्रैव गमनादेशो ४।४२
तथा च शरभङ्गेण ५।९
तदस्मिन्ब्रह्माद्यैस्त्रिदश १।११
तपो वा शस्त्रं वा ३।२४
तमांसि ध्वंसन्ते १।१२
तस्य विद्यातपोवृद्ध ५।७

तस्यां च कर्णनासोष्ठ ५।१२
तातस्य मित्रं किल ७।१८
तान्येव यदि भूतानि २।१४
तुण्डप्रोतशिरःकरोटि ५।१९
तुरीयो ह्येष मेध्याग्नि १।१०
तूलदाहं पुरं लङ्कां ६।५
तृप्तैर्विराधमांसानां ५।८
तेजोभिर्दिशिदिशि १।४४
तेनेदमुद्धृतजगत्रय १।६
तेषामिदानीं दायादो १।१४
त्रय्यास्त्राता यस्तवायं ४।४४
त्रातुं लोकानिव परि २।४१
त्रैलोक्यमप्यपर्याप्तं ६।६०
त्रोट्यन्तामभितोऽर्गलानि ६।२३
त्वं नः पूज्यतमोऽतिथि २।५०
त्वन्नियोगादयुक्तोऽपि ५।४३
त्वं ब्रह्मण्यः किल ३।२६
त्वं ब्रह्मवर्चसधनो ३।४४
त्वया पुत्रवती श्येनी ५।६
त्वां लक्ष्मण महाबाहो ४।५८
दण्डोऽप्यभ्यधिके शत्रौ ४।४
दत्त द्वाराणि तूर्णं सरल ६।१६
दधति कुहरभाजामत्र ५।४१
दनुर्नाम श्रियः पुत्रः ५।३४
दिष्ट्या यदद्य दृष्टस्त्वं ५।५०
दुर्गोऽयं चित्रकूटस्तदुपरि ६।७
दुर्दान्तानां दमनविधयः ३।३४
दुर्बोधो जनिदिवसा ६।२८
दुर्विनीते त्वयि वयं ४।२६
दूरं हृतश्चित्रमृगेण ५।१६
दूराद्दवीयो धरणी २।१
दूरोद्वेल्लितवाडवस्य ५।२
दृढतरमभियोगं ६।२७
दृप्यद्राक्षसचक्रकानन ६।२०
दृशोः शरच्छीतकर ७।१७
दोर्लीलाञ्चितचन्द्र १।५४
दौरात्म्याद्दरिभिर्निजा ५।४६
द्राङ्निष्पेषविशीर्ण १।३४
द्वितीयस्य च वर्णस्य १।१७
धर्तारः प्रलयेषु ये ५।१८
धर्मे ब्रह्मणि कार्मुके ३।३७
न कम्पन्ते झंझामरुति ६।३६
न कुत्राप्यन्यत्र प्रबल ६।८
न तस्य राष्ट्रं व्यथते ३।१८
न तादृशः सुहृत्कार्ये ५।३६
न त्रस्तं यदि नाम २।२८
नन्दिग्रामे जटां बिभ्र ४।५४
नन्वद्य राक्षसपतेः १।४०
नन्वद्यैव प्रथितयश ३।४७
नान्यत्र राघवाद्वंशा १।२३
नायं गिरिर्यशोराशि ५।३८
निकारं प्राप्तोऽयं ज्वल ३।४१
निमन्त्रितस्तेन विदेह १।९
निर्व्यूढं गुरुशासनं ७।४१
निसर्गतः पवित्रस्य ४।२७
निसर्गेण स धर्मस्य २।७
न्यक्कारो हृदि वज्र ५।२२
न्यस्तशस्त्रे भृगुपतौ ४।३९
पतिर्मृत्योर्वक्त्रं व्रजति ४।५२
पतिव्रतामयं ज्योतिर्ज्योतिषा ७।४
पतिव्रतामयं ज्योतिः शान्तं ६।६
परशुरशनिचण्डः ३।१४
परःसहस्रं रजनी ६।४३
परःसहस्रैरायुक्तं ५।१७
परिषदियमृषीणा ३।५
परोक्षे सुकृतं कर्म ४।४६
पर्यायात्क्षणदृष्ट ५।१
पाल्यं तस्य जगद्वयं ४।३
पिष्ट्वा ब्रह्माण्डमस्मा ६।१०
पुण्यानामृषयस्तटेषु ४।३८

पुण्या ब्राह्मणजाति ४।२२
पुण्ये मतङ्गयज्ञाग्नौ ५।६०
पुण्योऽपि भीमकर्मा २।२४
पुत्रसंक्रान्तलक्ष्मीकै ४।५१
पुरं निःशेषघटितं ६।१८
पुराकल्पे दूरोत्पतन ५।५
पुरां जेता पूर्वं त्रिपुर ६।४९
पुरीं यथा स्थितौ यातं ७।२८
पौलस्त्यविजयोद्दाम ३।४५
पौलस्त्यापजयप्रचण्ड २।१३
पौलस्त्यो विनयेन १।५९
प्रकृत्या पुण्यलक्ष्मीकौ १।१६
प्रचण्डपरिपिण्डितः ५।२६
प्रतिक्षणमियं रक्षः ६।५५
प्रतिमन्वन्तरं भूतै ४।५९
प्रतीक्षन्ते वीराः प्रति ६।३४
प्रवर्तन्तां पौराः प्रति ७।३७
प्रसह्य रावणद्विष्टः २।३
प्रहर नमतु चापं २।४९
प्रागप्राप्तनिशुम्भशां २।३३
प्रागेव राक्षसवधाय ५।२५
प्राचेतसो मुनिवृषा १।७
प्राणाः प्रयान्ति परित ४।५५
प्राणैरपि हिता वृत्ति ५।५९
प्राप्ताः कृच्छ्राद्दष्यश्टङ्गो १।२४
प्रायश्चित्तं चरिष्यामि ३।८
प्रार्थ्ये माल्यवता वाली ५।३५
प्रायुङ्क्तास्त्रं स किंचिज्जल ६।१२
प्रासप्रोतप्रवीरोल्बण ६।३३
प्रियं कल्याणकामाभिः ४।४५
प्रिये हा हा क्वासि ५।२८
प्रेक्ष्याः संग्रामसीमन्य ६।३५
प्रेद्धं धाम यमामनन्ति ४।३०
बन्दीभिरेधिताः काराः ७।६
बहुच्छलानि रक्षांसि ६।५०
बाणेनैकेन विद्धं ७।१६
बाल्यात्प्रभृत्येव निरूढ ४।९
बिभ्राणश्चारुचामीकर ५।४४
बीजं यस्य विदेहराज ६।१
ब्रह्मक्षत्रसमाजमा ३।४३
ब्रह्मादयो ब्रह्महिताय १।४२
ब्रह्मेन्द्ररुद्रविणेशरुद्र १।४६
ब्रह्मैकतानमनसो ३।११
ब्राह्मणातिक्रमत्यागो २।१०
भक्तिप्रह्वं कथमपि ६।३७
भवान्सीतां लोक ६।६२
भीमं गोष्पदवद्विलङ्घ्य ६।१७
भृगोर्वंशे जातस्तपसि ३।२७
भ्रान्तीः सप्ताधिकानां ६।४
मद्द्रोहाच्छपथात्प्रसी ५।५५
मध्यमायाः प्रियसखी ४।४०
मनुष्यपोतमात्रेण ६।१९
मरुलन्तं देवं य ४।१९
महापुरुषसंरम्भो १।२
मातामहेन प्रतिषिध्य १।२८
मातुरेव शिरश्छेदो ३।१९
माहाभाग्यमहानिधि २।१८
मुखं यदि किमिन्दुना ६।९
मुनिरयमथ वीर २।२७
यतो विमुक्तैरपि मान ३।९
यत्कल्याणं किमपि ३।२३
यत्किंचिद्दुर्मदाः स्वैर ६।३
यत्क्षत्रियेष्वपि पुनः २।२९
यत्पर्यन्तमहीध्रसीम्नि ७।१३
यत्र तेऽपि खलुः कर्ण ७।१९
यत्संक्रन्दननन्दनः ५।३९
यथा चन्द्रालोकं ६।५२
यथासंख्यं तीक्ष्ण ६।२२
यदासर्क दैवादनभि ५।५८
यदि प्रपद्येत धनुः २।१२

यद्दर्शनात्किमप्येवं ७।३४
यद्ब्रह्मवादिभिरुपा ४।२१
यद्ब्रह्मलक्षणे वीर्यं ५।३१
यद्वाचां विषयमतीत्य ४।१५
यद्विद्वानपि तादृशे १।३३
यन्मया क्षत्रविच्छेद ४।३७
यः पूर्वेषां नः कुलस्य ७।२१
यशसि निरवकाशे ३।४
यामोषधिमिवायुष्म ५।२४
यान्मैत्रावरुणिः प्रशास्ति १।२५
यावत्रिलोक्यां किल ६।२९
यावत्फणीन्द्रशिरसि ७।२६
यावन्तो रजनीचराः ६।५९
यावन्मन्त्रप्रभावाद ६।४८
येनैव खण्डपरशु २।३५
यैर्गुप्तान्यकुतोभयानि ५।२३
यो नस्त्रयीपरिध्वंसा १।३२
यो वालिनं हन्ति हता ४।१०
योऽसौ वरद्वयन्यास ४।४७
योऽहं द्वाभ्यां भुजाभ्यां ६।११
रक्षोघ्नानि च मङ्गलानि १।१३
रक्षोभिर्विपिनौकसां ६।३१
रक्षोनाथो रघूणां ६।५६
रक्षोनाथे सरभस ६।४४
रघुकुलतिलकेऽस्मि ७।१
रघुजनकगृहेषु गर्भ ४।३२
राजन्नितो ध्येहि सहा १।६२
राजानो गुरवश्चैते ३।२०
राज्ञां मार्तण्डवंश्यानां ७।२९
रामः कर्मभिरद्भुतैः ३।३
रामभद्र गुणाराम ७।४०
राम राम नयनाभि २।३७
राम राम महाबाहो १।४९
रामाय पुण्यमहसे १।२७
रामेण पत्न्या सीतायाः १।५६
लघुरघुपतिरेष ६।४७
लाङ्गलोल्लिख्यमानाया १।२०
लोकालोकालवाल ५।४५
लोपामुद्रानसूयाह ७।३६
वध्यन्तेऽस्त्रपपुङ्गवाः ६।२४
वन्ध्या विश्वसृजो युगा २।८
वयमिव यथा गृह्यो ३।१७
वश्यवाचः कवेर्वाक्यं १।४
वस्वर्करुद्रसहितः ७।३
विजयसहजमन्त्रे १।८
विजितपरशुरामं ५।४७
विरम नरपते कथं ३।३०
विशिष्टभागधेयानां ५।३०
विश्वामित्रात्प्राप्य १।५०
विस्रंसयन्ती परि ५।४
वीरश्रिया च विन ४।२०
वीराणां रुण्डतुण्ड ६।३२
वीरोऽस्त्रपारगश्चिन्त्यो ४।२
वीरेण ते विजयमाङ्ग ४।३५
वीर्योत्कर्षैर्यदमृत २।२
वृद्धातिक्रमसंभृतस्य ४।२५
व्यसनेऽस्मिन्मन्त्रशक्त्या ६।२
शत्रुध्वंसात्परिणति ३।२५
शत्रुमूलमनुत्खाय ३।६
शंभोर्वरादनुध्यान १।५२
शरासनस्य टङ्कारा ७।२०
शाणोत्कीर्णो मणिरिव ६।५३
शितैर्बाणैरेके मृधभुवि ६।५४
श्लाघ्यो गुणैर्द्विजवरश्च ३।२२
श्रुतं मे जानाति श्रुति ६।१५
श्रेष्ठः परमहंसानां १।५
स एष राजा जनको २।४३
स एष रामश्चरिता ५।४८
स एष रामः सौम्य ४।२४
सक्रोधप्रसभमहं ३।२१

सङ्ग्रामेष्वभयप्रदं ४।३१
संज्ञप्यते वत्सतरी ३।२
सत्यसंधाः स्थ यदि ४।५०
सत्यसंधा हि रघवः ४।४८
सत्रप्रत्यूहशान्त्यै ७।३८
सत्त्वभ्रंशविषादिभिः २।२०
सनत्कुमाराङ्गिरसो ४।१६
संपूजितं हि माहात्म्य ३।१०
संभाव्य सप्तभुवना २।००
संभूयैव सुखानि २।४५
संरोधने त्वभिभवा ४।८
संवर्तप्रकटविवर्त ६।२६
संस्तूयन्ते विप्रकर्षा ७।२२
सर्वदोषानभिष्वङ्गा १।३८
सर्वप्राणप्रवणमघवन् १।४५
साक्षात्किलाष्टमूर्ते ७।९
साक्षात्पुण्यसमुच्छ्रया ३।१७
साधारण्यान्निरातङ्कः १।३१
सानुजस्त्वं प्रजाः शाधि ७।१५
सीतावन्दीग्रहपरि २।४
सीरध्वजो धनुष्पाणि २।४२
सुग्रीवः स्यन्दनस्याग्रे ६।३९
सुग्रीवाङ्गदयोः प्रभुत्व ५।६२
सुप्रसिद्धः प्रवादो २।४७
सेयं सुकेतोर्दुहिता १।३६
सोत्साहं धृतशासनैः ७।१०
सोऽयं त्रिःसप्तवारा २।१७
सौमित्रिः कृतहस्तता ६।४१
सौमित्रेर्बाणवज्रैरधिक ६।४२
सौहित्यात्पृथवः क्वथन्ति ५।३३
स्कन्धारोपितयज्ञपात्र ४।५७
स्थितो ध्यायन्नन्तः किम ७।३०
स्थितमुपनतजृम्भा ५।४२
स्थिरस्ते प्रशमो भूया ४।३६
स्वसुः सोदर्यायाः कथ ५।१४
स्वामिभक्तिश्च धैर्यं च ६।४०
स्फूर्जद्वज्रसहस्र १।५३
हन्त साध्विव संपन्नं १।६१
हा वत्साः खरदूषण ४।११
हा वीर हा मघव ५।६१
हिरण्यगर्भादषयो ३।७
हृतजानिररातिभिः ४।५
हृन्मर्मभेदिपतदुत्कट १।३९
हेरम्बदन्तमुसलो २।३८



# सुब्रह्मण्यकविकृतमहावीरचरितपूरणीस्थश्लोकानां सूची ।




अत्युग्रोदग्रवल्गद्धग ५।४८
अधर्मो धर्मतामेति ५।५०
अयं रामः कामप्रति ६।८
अस्माकमपि लोके ६।११
अहं तावदरीन्हत्वा ७।५
आकल्पान्तमनन्त ७।७
आकस्मिकोपसंपन्ने ६।१३
आदित्यैरभिरूप ७।१८
आलोकालोकशैला ७।८
उद्भूतप्रतिभूपभूम ६।१९
एतावन्तं त्वया कालं ७।११
कस्त्वं मया न विज्ञातः ६।३
गन्धर्वा घनरागबन्ध ७।४
जयो वा मृत्युर्वा भव ६।१६
तवारण्ये वासे मम ७।१७
तूष्णींदण्डः प्रयोक्तव्य ६।१५
त्वया यद्यत्कृत्यं कपट ६।१०
त्वया लोकैकवीरेण ७।१६
त्रैलोक्यकुशलं राम ७।१३
दृप्यज्जम्भारिडिम्भ ५।५५
दौरात्म्यादरिभिर्निजा ५।४६
द्रागभ्यागतनिर्भय ५।५४
निःसारं निरयानुबन्धि ५।५१
परस्परविनाभावे ६।१२
पुनर्जाता इमे लोकाः ७।१०
पुरा तत्कैकेयीवचन ७।२
बिभ्यद्भूपपरिरम्भि ६।१८
मनोर्वंशे जाताः ५।५३
मया बाणेन तीक्ष्णेन ६।१
महेन्द्रेण प्राप्तप्रणय ७।३
मातृगर्भे प्रविष्टाना ६।१४
मायाबलमविज्ञाय ६।९
मुनिर्वा देवो वा भवतु ६।२
यथार्थं निध्यातः स्फुरति ५।४९
यन्मयाधिष्ठितं यत्ना ६।७
यशःसंतानो मे विशद ५।४७
लङ्काद्वीपगतं निशा ६।१७
वसिष्ठारुन्धतीजाने ७।१९
वसुंधराधीश महा ६।४
वृक्षान्तर्लीनमूर्तिः ५।५२
वेदान्तजालपरिशील ६।५
शत्रुघ्नः शरदिन्दुबिम्ब ७।९
सर्वे सन्तु परस्परं ७।१२
साहित्योदयसंभृतो ७।२१
सुग्रीवः किल किष्किन्धा ७।६
सौजन्यैकरसेन सान्द्र ७।१४
हतं तावत्कृत्स्नं निशि ६।६
हत्वा हन्त दशाननं ७।१
हन्तव्या जगदातङ्क ७।२०
हृद्यानद्यप्रभृति भुवि ७।१५


